# BENARES SANSKRIT SERIES;

A

COLLECTION OF SANSKRIT WORKS

EDITED BY THE

PAṆḌITS OF THE BENARES SANSKṚIT COLLEGE,

UNDER THE SUPERINTENDENCE OF

R. T. H. GRIFFITH M. A.

AND

G. THIBAUT PH. DR.

*Nos. 35, 40, 42, 44 & 46.*

# श्रीमद्याज्ञवल्क्यादिमहर्षिप्रणीतः शिक्षासङ्ग्रहः ।

## क्वचिद्व्याख्यानयुतः ।

श्रीमत्काशिकप्रधानपाठशालयाधीतविद्येन श्रीमन्मिथिलामण्डलाधीशतो लब्धवै-
दुष्यप्रतिष्ठेन काशीस्थसुप्रसिद्धविद्वज्जनसंस्थापितवेदविद्यालयाध्यापके-
न च पाठकोपाह्वश्रीमद्युगलकिशोरव्यासेन निर्म्मितया शिक्षाकी-
र्त्तिप्रकाशाख्यटिप्पण्या समेतः शोधितः प्रकाशितश्च ।

# A COLLECTION OF ŚIKSHÁS

# BY YÁJÑAVALKYA AND OTHERS,

## WITH COMMENTARIES ON SOME OF THEM.

EDITED AND ANNOTATED BY PAṆḌIT YUGALAKIŚORA VYÁSA
LATE SCHOLAR OF THE BENARES SANSKRIT COLLEGE.

*BENARES:*

PRINTED AND PUBLISHED BY

**MESSRS. BRAJ B. DAS & CO.**

AT THE BENARES PRINTING PRESS.

1893.

# श्रीः

## विज्ञापनम् ॥

श्रीमदनाथस्य जगद्व्यापकविश्वनाथस्य प्रतिपालितायामतीवशुद्धायां श्रीमज्ज्ञानप्रकाशिकायां काशिकायां पश्चिमदिशायां छोटीपियरीनामवीथिकावास्तव्यसरयूपारिण: पाठकोपाधिधारिणो वेदवेदान्ताध्यापकस्य श्रीमन्नाथूरामशर्मण: प्रपौत्रेण, ज्यौतिषशास्त्राध्यापकस्य श्रीमद्रामफलपाठकस्य पौत्रेण, श्रीमद्रामायणपारायणपरायणस्य व्यासोपाह्वश्रीमद्विश्वेश्वरपाठकस्य कनिष्ठापत्येन विद्वद्वरमण्डलमण्डितेन शुक्लयजुर्वेदशास्त्रसम्पन्नेन श्रीमत्कृष्णानन्दस्वामिस्थापिते धर्मनिकेतने वेदविद्यालये श्रौतस्मार्तग्रन्थाध्ययनाध्यापनशीलेन साङ्गशुक्लयजुर्वेदविद्याप्रदसारस्वतान्वयाबालब्रह्मचारिश्रीमद्रामानन्दगुरुचरणारविन्दपादुकासेवकेन च, गवर्मेण्टसंस्थापितराजकीयपाठालयाधीतविद्येन, श्रीमद्दर्भङ्गानगराद्यनेकसुप्रतिष्ठधार्मिकगोष्ठीगरिष्ठवैदिकधर्मानुयानवरिष्टमहाराजेभ्यो लब्धवैदुष्यप्रतिष्ठेन च पाठकोपाह्वश्रीमद्युगलकिशोरशर्मणा याज्ञवल्क्यवासिष्ठीशिक्षा, सटीका कात्यायनी शिक्षा, पाराशरी माण्डव्यमोघानन्दिनी लघ्वमोघानन्दिनीयमाध्यन्दिनीयलघुमाध्यन्दिनीयामरेशी सटीका केशवीतत्पद्यात्मिका मल्लशर्मकृता स्वराङ्कुशशिक्षा षोडशश्लोक्यवसाननिर्णयस्वरभक्तिलक्षणक्रमसन्धानगलदृङ्मन: स्वारप्रातिशाख्यप्रदीपवेदपरिभाषासूत्रवेदपरिभाषाकारिका यजुर्विधानस्वराष्टकक्रमकारिकाऽऽख्या: पञ्चविंशतिसङ्ख्याका माध्यन्दिनमतानुयायिन्य: शिक्षा: पूर्वममुद्रिता: । अथर्ववेदीयैका सस्वरा पाणिनीशब्दवाच्या प्रकाशाख्यव्याख्यानयुता । प्राङ्मुद्रिता जडे उपाधिधारिण: श्री रामचन्द्रदीक्षितकरकमलात्प्राप्ता । तत: सामवेदीया शिक्षात्रयी सविवरणा नारदीया, मूलमात्रा गौतमी लोमशी चाऽप्रसिद्धा कदाऽप्यमुद्रिता । प्रथमा स

स्यूपारिण: सामवेदिन: श्रीमदिन्द्रदत्तसूनो: श्रीमत्त्रिवेणीदत्तशर्महस्तात्छ्री-शोभाकरकृतव्याख्यानयुता लब्धा ॥ पूर्वोक्ता शिक्षात्रितयी मूलमात्रा गुर्जरदेशीयश्रीमाली ब्राह्मणेन श्रीमोतीरामसामवेदिहस्तात्प्राप्ताऽतीवशुद्धा ॥ ततो चाराणसेयरामघट्टवास्तव्यगुर्जरदेशीयपञ्चोल्युपाधिधारिणोऽथर्ववेदीयशौनकशाखीयाध्ययनाध्यापनशालिन: श्रीमज्जयदेवशर्महस्तपङ्कजान्माण्डूकीशिक्षैकाऽतीवप्राचीना वर्षशतद्वयात्मिकाऽत्यन्तशुद्धोपलब्धा कालत्रितयेनाऽप्यलब्धाऽमुद्रणीया च । अनेकवैदिकब्राह्मणानां छात्राणां शुद्धपाठसौकर्याय च क्वाचित्स्थानियिशिक्षाकीर्तिप्रकाशाख्यटिप्पण्या सहितं त्रिंशत्सङ्ख्याकशिक्षासङ्ग्रहपुस्तकमतीवशुद्धमनेकपुस्तकपाठान्तरैरत्यन्तपरिश्रमेण संविशोध्य वैश्यवर्यब्रजभूषणदाससंस्थापितसिरिजभागीयमुद्रालये शर्मण्यदेशीयसुप्रख्यातमहाशयडाक्टरथिबोसाहबानुमत्या पञ्चाशदुत्तरैकोनविंशततमवैक्रमाब्दीयमधुमासावदातदलतिथितिथौ प्रकाशितम् । यदस्मिन्छिक्षासङ्ग्रहग्रन्थे प्रमादेनान्यथा स्याच्छोधने ग्रन्थने च तद्बुद्धिमन्त: सम्यगध्ययनाध्यापनादिना प्रचारयन्तु कृपया शोधयन्तु चेति शम् ॥

---

## अथ वेदचतुष्टयस्यानेकशाखीयशिक्षासङ्ग्रहपुस्तकस्य सूचनपत्रम् ॥

इति सूचनपत्रं शिक्षासङ्ग्रहस्य समाप्तम् ॥

श्रीः।

अथ याज्ञवल्क्यकृता यजुःशाखीयोपयोगिनी शिक्षा
मूलमात्रं किञ्चिट्टिप्पणीयुताऽऽरभ्यते।

अथातस्त्रैस्वर्य्यलक्षणं व्याख्यास्यामः। उदात्तस्यानुदात्तस्य स्वरितस्य तथैव तत्(१)॥ लक्षणं वर्णयिष्यामि दैवतं स्थानमेव च (२)॥ १॥ शुक्लमुच्चं विजानीयान्नीचं लोहितमेव च॥ श्यामं तु स्वरितं विद्यादग्निरुच्चस्य दैवतम्॥ २॥ नीचं (३) सोमं विजानीयात्स्वरिते सविता भवेत्॥ उदात्तं ब्राह्मणं विद्यान्नीचं क्षत्रियमेव च॥ ३॥ वैश्यं तु स्वरितं (४) विद्याद्भारद्वाजमुदात्तकम्॥ नीचं गौतममित्याहुर्गार्ग्यं तु स्वरितं विदुः॥ ४॥ विद्यादुदात्तं गायत्रं नीचं त्रैष्टुभमेव च। जागतं स्वरितं विद्याद्देवमेव नियोगतः॥ ५॥ गान्धर्ववेदे ये प्रोक्ताः सप्त षड्जादयः स्वराः॥ त एव वेदे विज्ञेयास्त्रय उच्चादयः स्वराः॥ ६॥ (५) उच्चौ नि-

(१) तत् तेषां उदात्तादीनाम्॥

(२) चकाराद्गोत्रादिकमपि॥

(३) नीचे सोममिति 'क' पुस्तकपाठः॥

(४) उदात्तं तु भरद्वसुम्॥

(५) श्लोकद्वयमधिकं 'ख' पुस्तके, तद्यथा, षड्जो वेदे शिखण्डी स्यादृषभः स्यादजामुखे॥ गावो रम्भन्ति गान्धारं क्रौञ्चाश्चैव तु मध्यमम्॥ १॥ कोकिलः पञ्चमो ज्ञेयो निषादं तु वदेद्गजः॥ आश्वश्च धैवतो ज्ञेयः स्वराः सप्त विधीयते॥ २॥ इति पाठो बोध्यः॥

षाड्गान्धारौ नीचावृषभधैवतौ ॥ शेषास्तु स्वरिता ज्ञेयाः षड्जमध्यमपञ्चमाः ॥ ७ ॥ (१) निमेषो मात्राकालः स्याद्विद्युत्कालेति चापरे ॥ (२) अक्षरातुल्ययोगत्वान्मतिः स्यात्सोमशर्म्मणः ॥ ८ ॥ सूर्य्यरश्मिप्रतीकाशात्कणिका यत्र दृश्यते ॥ (३) अणवस्य तु सा मात्रा माला तु चतुराणवा ॥ ९ ॥ मानसे चाणवं विद्यात्कण्ठे विद्याद्विराणवम् ॥ त्रिराणवं तु जिह्वाग्रे निस्सृतं मात्रिकं विदुः ॥ १० ॥ (४) अवग्रहे तु यः कालस्त्वर्द्धमात्रा विधीयते ॥ पदयोरन्तरे काल एकमात्रा विधीयते ॥ ११ ॥ (५) ऋचोऽर्द्धे तु द्विमात्रः स्यात्त्रिमात्रः स्यादृगन्तके ॥ रिक्तं तु पाणिसुत्त्विष द्विमात्रं धारयेद्बुधः ॥ १२ ॥ (६) एकमात्रो भवेद्ध्रस्वो द्विमात्रो दीर्घ उच्यते ॥ त्रिमात्रस्तु प्लुतो ज्ञेयो व्यञ्जनं चार्द्धमात्रिकम् ॥ १३ ॥ विवृत्तौ चावसाने तु

---

(१) अत्र निमेषलक्षणं यथा अक्षिपक्ष्मपरिक्षेपो निमेषः परिकीर्त्तित इति ॥

(२) अक्षराणां तुल्येन समकालेन युज्यते इति योगः । न तुल्ययोगः अतुल्ययोगः । अतुल्ययोगस्य भावः अतुल्यप्रोगत्वं तस्मात्, वर्णानामसमानसम्बन्धादेकमाला कालता भवतीत्यर्थः ॥

(३) अणुत्वस्य तु इति 'ख' पुस्तकपाठः ॥

(४) अवग्रहे तु कालः स्यादिति 'ख' पुस्तकपाठः । किन्नामावग्रहत्वम् । प्रा. अ. ५ सू. १ "समासेऽवग्रहो हूस्वसमकाल" इत्यनुशासनात्पाठे समासविशिष्टस्य पदस्य पूर्वभागे एकमात्राकालं विरम्याग्रिमपदोच्चारणं कर्तव्यम् । तत्र याज्ञवल्क्यमते नार्द्धमात्रिककालो विराम उक्तः, कुतः याज्ञवल्क्यस्य योगसामर्थ्यात् ॥

(५) ऋचार्द्धे तु इति 'ख' पुस्तकपाठः ॥

(६) त्रयोदशमपद्यं 'ख' 'घ' पुस्तके नास्ति ॥

ऋचोर्द्धे च तथा परे ॥ पद्दे च पादसंस्थाने शून्यहस्तं विधीयते ॥ १४ ॥ प्रणवं तु प्लुतं कुर्याद्व्याहृतीर्मौलिका विदुः ॥ (१) चाषस्तु वदते मात्रां द्विमात्रां वायसोऽब्रवीत् ॥ १५ ॥ मयूरस्तु त्रिमात्रां वै मात्राणामिति संस्थितिः ॥ वर्णो जातिश्च मात्रा च गोत्रं छन्दश्च दैवतम् ॥ १६ ॥ एतत्सर्वं समाख्यातं याज्ञवल्क्येन धीमता ॥

अथाध्ययनविधिः ॥ प्रणवं प्राक् प्रयुञ्जीत व्याहृतीस्तदनन्तरम् ॥ १७ ॥ सावित्रीं चानुपूर्व्येण ततो वेदान्समारभेत् ॥ हस्तौ तु संयतौ धार्यौ (२) जान्वोरुपरि संस्थितौ ॥ १८ ॥ गुरोरनुमतिं कुर्यात्पठन्नान्यमतिर्भवेत् ॥ ऊरुभागे तृतीयेऽथः (३) करं न्यस्याथ दक्षिणम् ॥ १९ ॥ प्रसन्नमानसो भूत्वा (४) किञ्चिन्नम्रमधो मुखः ॥ कूर्म्मोऽङ्गानीव संहृत्य (५) हस्तदृष्टिर्दृढं मनः ॥ २० ॥ स्वस्थः प्रशान्तो निर्भीतो वर्णानुच्चारयेद्बुधः ॥ नाभ्याहन्यान्न निर्हन्यान्न गायेन्न च कम्पयेत् ॥ २१ ॥ यथादावुच्चरेद्वर्णांस्तथैवैतान्समापयेत् ॥ निवेश्य दृष्टिं हस्ताग्रे शास्त्रार्थमनुचिन्तयेत् (६) ॥ २२ ॥

---

(१) चाषः स्वर्णचूडनीलाङ्गपुण्यदः पक्षिविशेषो नीलकण्ठ इत्युच्यते ॥

(२) जानुनोरिति 'क' पुस्तकपाठः ॥

(३) ऊरुभागे तृतीयेऽथ कूर्परं न्यस्य दक्षिणं इति 'ख' पुस्तकपाठः ॥

(४) किञ्चिन्निम्नैकदृङ्मुख इति 'ग' पुस्तकपाठः ॥

(५) चेष्टां दृष्टिं दृढं मन इति 'क' पुस्तकपाठः ॥

(६) शास्त्रार्थमनुचिन्तयन् इति 'क' पुस्तकपाठः ॥

(१) सममुच्चारयेद्वर्णान्हस्ते न च मुखेन च ॥ स्वरश्चैवाथ हस्तश्च द्वावेतौ युगपत्स्थितौ ॥ २३ ॥ हस्ताद्भ्रष्टः स्वराद्भ्रष्टो न वेदफलमश्नुते ॥ न करालो न लम्बोष्ठो नाव्यक्तो नानुनासिकः ॥ २४ ॥ गद्गदो बद्धजिह्वश्च न वर्णान्वक्तुमर्हति ॥ प्रकृतिर्य्यस्य कल्याणी दन्तोष्ठौ यस्य शोभनौ ॥ २५ ॥ प्रगल्भश्च विनीतश्च स वर्णान्वक्तुमर्हति ॥ शङ्कितं भीतमुद्घुष्टमव्यक्तं सानुनासिकम् ॥ २६ ॥ काकस्वरं (२) शीर्षगतं तथा स्थानविवर्जितम् ॥ विस्वरं विरसं चैव विश्लिष्टं विषमाहतम् २७ ॥ व्याकुलं तालुहीनं च पाठदोषाश्चतुर्दश ॥ संहिता (३) सारबहुला पदसङ्ख्याभिराकुला ॥ २८ ॥ क्रमसन्धिसमाकीर्णो दुस्तरो मन्त्रसागरः ॥ ऋक्संहितां त्रिरभ्यस्य यजुषां वा समाहितः ॥ २९ ॥ साम्नां वा सरहस्यां च सर्वपापैः प्रमुच्यते ॥ संहिता नयते सूर्य्यं पदानि शशिनः पदम् ॥ ३० ॥ क्रमोऽपि नयते सूक्ष्मं (४) यत्तत्पदमनामयम् ॥ (५) "कालिन्दी संहिता ज्ञेया पदयुक्ता सरस्वती ॥ ३१ ॥ क्रमेणावर्तये-

---

(१) सम्यगुच्चारयेदिति 'क' पुस्तकपाठः ॥

(२) मूर्द्धिन गतं यथा इति 'ग' पुस्तकपाठः ॥

(३) सारबहुलः पदसङ्ख्याभिराकुलइति 'क' 'ग' पुस्तकयोः पाठश्च ॥

(४) यश्चैतत्पमनामयमिति 'क' पुस्तकपाठः ॥

(५) कालिन्दीति पद्यद्वयं 'ख' पुस्तके नास्तीति बोध्यम् ॥

ङ्गा भम्भोवीणी तु नान्यथा ॥ यथा महाह्रदं प्राप्य क्षिप्तो लोष्ठो विनश्यति ॥ ३२ ॥ एवं दुस्स्वरितं सर्वं वेदे निष्टति मज्जति ॥ आम्रपालाशबिल्वानामपामार्गशिरीषयोः ॥३३॥ वाग्यतः प्रातरुत्थाय भक्षयेद्दन्तधावनम् ॥ खदिरश्च कदम्बश्च करवीरकरञ्जकौ ॥ ३४ ॥ एते (१) कण्टकिनः पुण्याः क्षीरिणश्च यशस्विनः ॥ तेनास्यकरणं सूक्ष्मं माधुर्य्यं चोपजायते ॥ ३५ ॥ (२) त्रिफलां लवणाक्तेन भक्षयेच्छिष्यकः सदा ॥ क्षीणमेधाजनन्येषा स्वरवर्णकरी तथा ॥ ३६ ॥ ज्ञातव्यश्च तथैवार्थो वेदानां क्रमसिद्धये ॥ पठन्मात्रापपाठात् तु (३) पङ्के गौरिव सीदति ॥ ३७ ॥ आदरं कुरु यत्नेन करणं हि तदात्मकम् ॥ चुलुम्बैका स्फुटो दण्डी स्वस्तिको मुष्टिकाकृतिः ॥ ३८ ॥ एते वै हस्तदोषाः स्युः परशुश्चेति सप्तमः ॥ न चासौ मुष्टिबन्धी स्यान्न चात्युत्तममाचरेत् ॥ ३९ ॥ हस्तहीनं तु योऽधीते स्वरवर्णविवर्जितम् ॥ ऋग्यजुःसामभिर्दग्धो वियोनिमुपगच्छति ॥ ४० ॥ स्वरहीनं तु योऽधीते मन्त्रं वेदविदो विदुः ॥ न साधयति यजूंषि भुक्तमव्यञ्जनं यथा ॥ ४१ ॥ ऋचो यजूंषि सामानि ह-

---

(१) सर्वे कण्टकिनइति 'क' पुस्तकपाठः ॥

(२) त्रिफलेत्यारभ्य पद्यद्वयं 'ख' पुस्तकपाठः ॥

(३) पठन्मात्रावसानस्तु इति 'क' पुस्तकपाठः ॥

स्वहीनानि यः पठेत् ॥ अनृचो ब्राह्मणस्तावद्यावत्स्वारं न विन्दति ॥ ४२ ॥ ज्ञातव्यश्च तथैवार्थो वेदानां कर्म्मसिद्धये ॥ पाठमात्रावसानस्तु पङ्के गौरिव सीदति ॥ ४३ ॥ (१) हस्तेनाधीयमानस्य स्वरवर्णान्प्रयुञ्जतः ॥ ऋग्यजुःसामभिः पूतो ब्रह्मलोकमवाप्नुयात् ॥ ४४ ॥ न कुर्वीत पदं दीर्घं न चात्यन्तविलम्बितम् ॥ पदस्य ग्रहणं मोक्षं (२) यथा शीघ्रगतिर्हयः ॥ ४५ ॥ यथा वाणी तथा पाणीरिक्तं तु परिवर्जयेत् ॥ यत्र यत्र स्थिता वाणी पाणिस्तत्रैव तिष्ठति ॥ ४६ ॥ यथा धनुष्यावितते शरे क्षिप्ते पुनर्गुणः ॥ स्वस्थानं प्रतिपद्येत तद्वद्धस्तगतः स्वरः ॥ ४७ ॥ उत्तानं सोन्नतं किञ्चित्सुव्यक्ताङ्गुलिरञ्जितम् ॥ स्वरविद्धं करं कुर्यात्प्रादेशोद्देशगामिनम् ॥ ४८ ॥ (३) मनुष्यतीर्थोच्चं कृत्वा पितृतीर्थे जलं व्रजेत् ॥ नामितं करपृष्ठे तु सुव्यक्ताङ्गुलिमोचनम् ॥ ४९ ॥ अङ्गुष्ठस्योत्तरं पर्व (४) यवस्योपरि यद्भवेत् ॥ (५) प्रादेशस्य तु यो देशस्तन्मात्रं

---

(१) स्वरवर्णप्रयुञ्जानो हस्तेनाधीतमाचरन् इति 'ग' पुस्तकपाठः ॥

(२) पदस्य स्वरमोक्षं तु इति 'ख' पुस्तकपाठः । पदस्य ग्रहमोक्षौ चेति 'ग' पुस्तकपाठश्च ॥

(३) मनुष्यतीर्थस्यौन्नत्यादिति 'क' पुस्तकपाठः ॥

(४) अङ्गुष्ठस्योत्तरे पर्वे तर्जन्योपरि इति 'ग' पुस्तकपाठः ॥

(५) प्रादेशस्य तु सोद्देश इति 'ग' पुस्तकपाठः ॥

चालयेत्करम् ॥ ५० ॥ (१) उदात्तम्भ्रुवि पातव्यं प्रचं नासाग्र एव च ॥ हृत्प्रदेशेऽनुदात्तं च तिर्य्यग्जात्यादिकाः स्वराः (२) ॥ ५१ ॥ स्वरिते त्र्यङ्गुलं विद्यान्निपाते तु षडङ्गुलम् ॥ उत्थाने तु नवाङ्गुल्यमेतत्स्वारस्य लक्षणम् ॥५२॥ षडङ्गुलं तु जात्यस्य ह्रस्वस्यानुपथस्य च ॥ (३) तच्चतुर्भागमात्रं तु भूयस्तेनैव वर्तयेत् ॥ ५३ ॥ अभ्यासार्थे(४) द्रुतां वृत्तिं प्रयोगार्थे तु मध्यमाम् ॥ शिष्याणामुपदेशार्थे कुर्याद्वृत्तिं विलम्बिताम् ॥ ५४ ॥ ऐन्द्री तु मध्यमा वृत्तिः प्राजापत्या विलम्बिता ॥ अग्निमारुतयोर्वृत्तिः सर्वशास्त्रेषु निन्दिता ॥ ५५ ॥ मुष्ट्याकृतिर्मकारे तु नकारे तु (५) नखग्रहः ॥ (६) अनुस्वारेऽङ्गुलिक्षेप ऊष्मान्तेऽङ्गुलिमोक्षणम् ॥ ५६ ॥ ककारान्ते टकारान्ते ङणे चाङ्गुलिनामनम् ॥ पञ्चाङ्गुल्यं पकारे तु तकारे कुण्डलाकृतिः ॥ ५७ ॥ ऊर्द्ध्वक्षेपाच्च योष्मा स्यादधः क्षेपाच्च पातयेत् ॥ एकैकामुत्स्-

---

(१) उदात्तं भ्रूविपातेन प्रचयं नासिकाग्रत इति 'ग' पुस्तकपाठः ॥

(२) तिर्यग्जात्यादिरीरित इति 'क' पुस्तकपाठश्च ॥

(३) चतुर्थभागमात्रामिति 'ग' पुस्तकपाठश्च ॥

(४) द्रुतामित्यस्य कोऽर्थस्तदुक्तं शब्दरत्नावल्याम् । "अर्द्धमात्रं द्रुतं ज्ञेयं द्रुतार्द्धं चाऽप्यनुद्रुतमित्यर्थः ॥

(५) नखाग्रत इति 'ग' पुस्तकपाठः ॥

(६) अनुस्वारेऽङ्गुष्ठक्षेपः । अनुस्वारे द्वयोः क्षेप इति पाठद्वयं 'क' 'ख' योः पुस्तकयोर्ज्ञेयम् ॥

जेद्वीरः (१) स्वरिते तूभयं क्षिपेत् ॥ ५८ ॥ स्वरिते समभिक्षिप्ते संयोगो यत्र दृश्यते ॥ द्विमात्रिके क्षिपेदेकां मात्रिके तूभयं क्षिपेत् ॥ ५९ ॥ स्वरितं यद्भवेत्किञ्चिद्धकार सह संयुतम् ॥ त्रिरङ्गुलं ततो नीचं कृत्वा प्रासारयेद्बुधः ॥ ६० ॥ स्वरितसञ्ज्ञे निक्षिप्ते संयोगो यत्र दृश्यते ॥ ऊष्माणं तं विजानीयान्निः क्षेपादुभयोरपि ॥ ६१ ॥ अङ्गुष्ठाकुञ्चनं लघावनुस्वारे(२)त्वपाᳫं रसम् ॥ दीर्घे रङ्गे(३)च तर्जन्याः प्रसारः परिकीर्तितः ॥ ६२ ॥ ह्रस्वादग्रे भवेद्दीर्घो दीर्घादग्रे भवेल्लघुः ॥ संयोगे च परे ह्रस्वः(४) सिᳫंह्मसि निदर्शनम् ॥ ६३ ॥ तर्जन्यङ्गुष्ठयोः स्पर्शं उदात्तं प्रतिचक्षते ॥ नीचं तु मध्यमे कुर्याच्छेषं नीचतरं क्रमात् ॥६४॥ अनुस्वारो द्विमात्रः स्यात्सवर्णव्यञ्जनोदये ॥ ह्रस्वो वा यदि वा दीर्घं देवानाᳫं हृदये तथा ॥ ६५ ॥ स्वरितं यद्भवेत्किञ्चित्स्वकारोष्मकं ततः ॥ दीर्घं वा यदि वा ह्रस्वं निक्षेप उभयोरपि ॥ ६६ ॥ जात्ये च स्वरिते चैव वकारो यत्र दृश्यते ॥ कर्तव्यस्तूभयोः क्षेपो(५)स्वायᳫंश्चैरिति दर्शन-

(१) एकैकाङ्गुलिविक्षेपइति 'क' पुस्तकपाठः ॥

(२) ९ । ३ ॥

(३) अत्र चकारादुदात्तस्थविसर्गे उदाहरणं यथा १४ । ४ । अभि गृणन्तु देवाः) इत्यादि द्रष्टव्यम् ॥

(४) ५ । १० ॥

(५) १९ । २६ ॥

म् (१) ॥ ६७ ॥ शृङ्गवद्वाथ वत्सस्य कुमारीकुचयुग्मवत् ॥ उभक्षेपस्वरो यत्र स विसर्गउदाहृतः ॥ ६८ ॥ विसर्गान्तस्वरो यत्र स्वरितो यत्र दृश्यते ॥ दीर्घश्चैव वकारश्च तत्रोभक्षेप उच्यते ॥ ६९ ॥ (२) यथा बालस्य सर्पस्य उच्छ्वासो लघुचेतसः ॥ एवमूष्मा प्रयोक्तव्यो-ह्कारं परिवर्जयेत् ॥ ७० ॥ त्रिविधा तु भवेदूष्मा प्रचिता बलका तरा ॥ स्वरिते प्रचितां विद्यान्निपाते बलकां विदुः ॥ ७१ ॥ उत्थाने तु तथा तारा एताभिस्त्रिभिरूष्मभिः ॥ मात्रामादौ विदित्वा तु ततः क्षेपं प्रयोजयेत् ॥ ७२ ॥ (३) अक्षरं भजते काचित्काचिद्द्वित्वे प्रतिष्ठिता ॥ समानजातिका काचित्काचिदूष्मप्रदायिनी ॥ ७३ ॥ विवृत्तिप्रत्ययादूष्मां प्रवदन्ति मनीषिणः ॥ तामेव प्रतिषेधन्ति आ ई उ ए निदर्शनम् ॥ ७४ ॥ अष्टौ स्वरान्प्रवक्ष्यामि तेषामेव तु लक्षणम् ॥ जात्योऽभिनिहितः क्षैप्रः प्रश्लिष्टश्च तथाऽपरः ॥ ७५ ॥ तैरोव्यञ्जनसञ्ज्ञश्च तथा तैरोविरामकः ॥ पादवृत्तो भवेत्तद्वत्ताथाभाव्य इति स्वराः ॥ ७६ ॥ एकपदे नीचपूर्वः सयवो जात्य इष्यते ॥ अपूर्वोऽपि परस्तद्वद्वान्यं

— ४

(१) उभयक्षेपइति 'क' पुस्तकपाठः ॥

(२) यथा बालभुजङ्गस्य उच्छ्वासो गतचेतसइति 'क' पुस्तकपाठः ॥

(३) अकारं आकारं वा इति 'क' 'ख' योः पुस्तकपाठः ॥

कन्या स्वरित्यपि ॥ ७७ ॥ एकपदइत्याह ॥ नीचपूर्वः सयकारवकारो वा जात्यः स्वरितो भवति । अपूर्वोऽपि सयकारः सवकारो वा जात्यः स्वरो भवति । यथा(१) मनुष्यानिति । (२)सुप्वेति । (३) चम्वोवेति । (४)धान्यम् । (५)कन्याइव । (६)स्वः (७)वीर्य्यम् । एवं ह्याह यानि चान्यानीदृग्लक्षणानि पदानि भवन्तीति ॥ एओ आभ्यामुदात्ताभ्यामकारो रिफितश्च यः ॥ अकारो लुप्यते यत्र तं चाभिनिहितं विदुः ॥ ७८ ॥ यथा(८) कुक्कुटः । असि । कुक्कुटोऽसि ॥ (९) स्वात्रः । असि । स्वात्रोऽसि । (१०)ते । अप्सरसाम् । तेऽप्सरसाम् ।(११)ते ।अवन्तु । तेऽवन्तु । (१२) वेदः ।

---

(१) ९ अ । ३१ । कण्डिका, एतदुदाहरणं पदपाठाद्बोध्यम् ॥

(२) प्रथमे १ अ० । ३ । कण्डिकास्थपदोदाहरणम् ॥

(३) २० अ० । क० ७० । तृतीयोदाहरणम् ॥

(४) १ । २० ॥

(५) १७ । ९७ ॥

(६) १८ । ६४ ॥

(७) १२ । ९४ । इदं संहितोदाहरणम् ॥

(८) १ । १६ ॥

(९) ५ । ३१ ॥

(१०) २४ । ३७ ॥

(११) १९ । १७ ॥

(१२) २ । २१ ॥

असि । वेदोऽसि । (१)मारुतः । असि । मारुतोऽसि । (२) कः । असि । कोऽसि । (३) भागः । असि । भागोऽसि । (४)सः । अहम् । सोऽहम् । एवꣳ ह्याह यानि चान्यानीदृग्लक्षणानि पदानि भवन्ति ॥ इउवर्णौ यदोदात्तावापद्येते यवौ क्वचित् ॥ अनुदात्ते परे नित्यं विद्यात् क्षैप्रस्य लक्षणम् ॥ ७९ ॥ यथा (५) त्रि । अम्बकम् । त्र्यम्बकम् ॥ (६) द्रु । अन्नः । द्र्वन्नः । (७) वीडु । अङ्गः । वीड्वङ्गः ॥ (८) वाजी । अर्वन् । वाज्यर्वन् । एवꣳ ह्याह यानि चान्यानीदृग्लक्षणानि पदानि भवन्ति ॥ इकारो दृश्यते यत्र इकारेण च सँय्युतः ॥ उदात्तस्यानुदात्तेन प्रश्लिष्टो भवति स्वरः ॥ ८० ॥ यथा(९) अभि । इन्धताम् । अभीन्धताम् । (१०) अभीमम् ॥ (११)वि । इहि । वी-

(१) १८ । ४५ ॥
(२) ७ । २९ ॥
(३) ६ । २६ ॥
(४) १८ । ३५ ॥
(५) ३ । ६० ॥
(६) ११ । ७० ॥
(७) २९ ॥ ५१ ॥
(८) ११ । ४४ ॥
(९) ११ । ६१ ॥
(१०) ३८ । ७ ॥
(११) १२ । २७ ॥

हि । (१) स्रुचि । इव । स्रुचीव ॥ एवं ह्याह यानि चान्यानीदृग्लक्षणानि पदानि भवन्ति ॥ उदात्तपूर्वो यत्किञ्चिद्व्यञ्जनेन युतः स्वरः (२) ॥ एष सर्वबह्वृचस्वारस्तैरोव्यञ्जनउच्यते ॥ ८१ ॥ यथा (३) ईडे । रन्ते । हव्ये । काम्ये । चन्द्रे । ज्योते । अदिति । सरस्वति । महि । विश्रुति ॥ एवं ह्याह यानि चान्यानीदृग्लक्षणानि पदानि भवन्ति ॥ उदात्तावग्रहाद्यस्तु स्वरितः स्यादनन्तरः (४) ॥ तैरोविरामं तं विद्यात्तैरोव्यञ्जनमन्यथा (५) ॥ ८२ ॥ यथा (६) गोमदिति गो । मत् । (७) गोपताविति गो । पतौ । (८) प्रप्रेति प्र । प्र । (९) तातेति ता । ता । (१०) विततेति वि । तता (११) समिद्धइति सम् । इद्धः ॥ एवं ह्याह यानि चान्यानीदृग्लक्षणानि पदानि भवन्ति ॥

---

(१) २० । ७० ॥
(२) उदात्तपूर्वं यत्किञ्चिच्छन्दसि स्वरितं पदम् । इति 'ख' पुस्तकपाठः ।
(३) ८ । ४३ ॥
(४) अवग्रहात्परो यस्तु स्वरितः स्यादनन्तरः । इति 'ख' पुस्तकपाठः ॥
(५) तैरोविरामं तं विद्यादुदात्तो यद्यवग्रहः । इति 'ख' पुस्तकपाठश्च ॥
(६) २० । ८१ ॥
(७) १ । १ ॥
(८) १२ । ३० ॥
(९) २५ । ४० ॥
(१०) २९ । ४० ॥
(११) २९ । १ । इमान्युदाहरणानि पदपाठस्थबोध्यानीति ॥

(१)स्वरयोरन्तरे काले विवृत्तिर्दृश्यते यदि ॥ सः स्वारः पादवृत्तः स्या,त्काऽईमिति निदर्शनम् ॥ ८३ ॥ यथा (२) श्वित्रऽआदित्यानाम् । (३) काऽईम् । (४) पुत्रऽईधे ॥ एवं ह्याह यानि चान्यानीदृग्लक्षणानि पदानि भवन्ति ॥ उदात्ताक्षरयोर्मध्ये भवेन्नीचस्त्ववग्रहः ॥ ताथाभाव्यो भवेत्स्वारस्तनूनप्त्रे निदर्शनम् ॥ ८४ ॥ यथा(५)तनूनप्त्रऽइति तनू । नप्त्रे(६) । तनूनपादिति तनू । नपात् । (७) तनूनपातमिति तनू । नपातम् ॥ एवं ह्याह यानि चान्यानीदृग्लक्षणानि पदानि भवन्ति ॥ माध्यन्दिनविरोधी स्या (८) त्ताथाभाव्यस्तु यः स्वरः॥ स्वरौ नैवात्र दृश्येते भिन्नोदात्तानुदात्तकौ ॥ ८५ ॥ स्वरस्पर्शान्तस्थोष्माणः कण्ठ्यजिह्वामूलीयोपध्मानीयतालव्यमूर्द्धन्यदन्त्यौष्ठ्ययमविसर्जनीयरङ्गानुनासिकनिपाताश्च किंवर्णदैवत्यलिङ्गाः। स्वराः शुक्ला नाना दैवत्याः । स्पर्शाः कृष्णाः अन्तस्थाः

---

(१) स्वरे च स्वरिते चैव विवृतिर्यत्र दृश्यते ।। पादवृत्तो भवेत्स्वारः ।।
(२) २४ । ३९ । श्वित्रऽआदित्येति निदर्शनम् । इति 'ख' पुस्तकपाठः ।।
(३) २३ । ५५ ।।
(४) ११ । ३३ ।।
(५) ५ । ५ ।।
(६) २१ । १० ।।
(७) २८ । २ । इमान्युदाहरणानि संहितापदयोर्ज्ञातव्यानीति ।।
(८) तथाभाव्यइति 'क' पुस्तकपाठश्च ।।

कपिलाः । ऊष्माणोऽरुणाः । यमा नीलाः । नासिक्या हरिताः । अनुस्वारः पीतः । जिह्वामूलीयो रक्तः । उपध्मानीयः पीतः । विसर्जनीयः श्वेतः । रङ्गः शबलः । आनुनासिक्योऽतिनीलः । इत्यन्तर्मध्ययोर्नासिक्यं विद्यात् । द्विरुदात्ताख्याइतिस्मृताः । उदमनुदनिपाते आद्ये ये चोपसर्गे नामाख्यातोपसर्गनिपाताश्चेति । किं दैवत्याः । अक्षराणां च के पुरुषाः । काः स्त्रियः । कानि नपुंसकानि इत्यत्र ब्रूमः । कण्ठ्या आग्नेयाऽकारादयः । जिह्वामूलीया नैर्ऋत्याः ककाराः । तालव्याः सौम्याश्चकारादयः । मूर्द्धन्या वायव्याष्टकारादयः । दन्त्या रौद्र्यास्तकारादयः । औष्ठ्या आश्विनाः पकारादयः । घोषा वैश्वदेवाइत्येवमादयः ॥ स्वरास्तु ब्राह्मणा ज्ञेया वर्गाणां प्रथमाश्च ये ॥ द्वितीयाश्च तृतीयाश्च चतुर्थाश्चापि भूमिपाः ॥ ८६ ॥ वर्गाणां पञ्चमा वैश्या अन्तस्थाश्च तथैव च ॥ ऊष्माणश्च (१)हकारश्च शूद्रा एव प्रकीर्त्तिताः ॥ ८७ ॥ शुक्लवर्णानि नामानि आख्याता रोहिता मताः ॥ कपिला(२) स्तूपसर्गाश्च कृष्णाश्चैव निपातकाः ॥ ८८ ॥ भारद्वाजक-

---

(१) विसर्गश्चेति 'क' पुस्तकपाठः । पृथग्घकारग्रहणेन औरस्यहकारस्य ग्रहणं कर्तव्यम् । यस्मिन्पुस्तके विसर्गश्चेति पाठस्तत्रोष्मणां मध्ये द्वयोः कण्ठ्यौरस्ययोर्ग्रहणं ज्ञातव्यमिति ॥

(२) कपिञ्जला इति 'ख' पुस्तकपाठः ॥

माख्यातं भार्गवं नाम भाष्यते ॥ वासिष्ठा उपसर्गास्तु-निपाताः काश्यपाः स्मृताः ॥ ८९ ॥ सर्वं तु सौम्यमाख्यातं नाम वायव्यमिष्यते ॥ आग्नेयस्तूपसर्गः स्यान्निपातो वारुणः स्मृतः ॥ ९० ॥ आदित्यो मुनिभिः प्रोक्तः सर्वाक्षरगणस्य च ॥ स्वरा विसर्जनीयाश्च यमाः पुल्लिङ्गकाः स्मृताः ॥ ९१ ॥ प्रथमाश्च तथान्तस्था स्त्रीलिङ्गाः परिकीर्त्तिताः ॥ शेषाक्षराणि षण्ढानि प्राज्ञलिङ्गविवेचकाः ॥ ९२ ॥ सन्धिश्चतुर्विधो भवति । लोपागमविकाराः प्रकृतिभावश्चेति । तत्र लोपो यथा (१) अयच्छाः । मा । (२) शततेजाः । वायुः । शततेजा वायुः । (३) तिग्मतेजाः । द्विषतः । तिग्मतेजा द्विषतः । आगमो यथा (४) प्रत्यङ् । सोमः । प्रत्यङ्क्सोमः । (५) प्राङ् । सोमः । प्राङ्क्सोमः । (६) अस्मान् । सीते । अस्मान्त्सीते । (७) त्रीन् । समुद्रान् । त्रीन्त्समुद्रान् । विकारो यथा (८) आ इदम् । एदम् । (९) आ-

(१) २ । १ ॥
(२) १ । २४ ॥
(३) १ । २४ ॥
(४) १० । ३९ ॥
(५) १९ । २ ॥
(६) १२ । ६१ ॥
(७) १३ । ३० ॥
(८) ४ । १ ॥
(९) ९ । १८ ॥

इ॒मे॑ । ए॒मे॑ । (१) आ । इ॒ष्टृ॑यः । एष्टृ॑यः । (२) प्र । इ॒षि॒तः । प्रेषि॑तः । प्रकृतिभावो यथा (३) आ॒शुः॑ । शिशा॑नः । आ॒शुः॑ऽ शिशा॑नः । (४) यु॒ञ्जा॒नः॑ । प्र॒थ॒मम् । यु॒ञ्जा॒नःऽ प्र॒थ॒मम् । (५) अदि॑तिः षोडशा॒क्षरेण । (६) दे॒वो वः॑ सवि॒ता ॥ आकाशस्था यथा विद्युत्स्फुटिता मणिसूत्रवत् ॥ एष च्छेदो विवृत्तीनां यथा बालेषु कर्त्तरि ॥ ९३ ॥ इयोस्तु स्वरयोर्मध्ये सन्धिर्यत्र न दृश्यते । विवृत्तिस्तत्र विज्ञेया (७) य॒ऽईशे॑ति निदर्शनम् ॥ ९४ ॥ पिपीलिका पाकवती यथा वत्सानुसारिणी ॥ वत्सानुसृजिता चैव चतस्रस्ता विवृत्तयः ॥ ९५ ॥ पिपीलिकाऽऽद्यन्तदीर्घा (८) नाब्भ्याऽऽसीन्निदर्शनम् ॥ ९६ ॥ पाकवत्युभयोर्ह्रस्वा (९) व्वि नऽइन्द्र निदर्शनम् ॥ वत्सानुसृजिता चान्ते (१०) ता॒ नऽआवोढम-

---

(१) १८ । ४१ ॥
(२) २१ । ५७ ॥
(३) १७ । ३३ ॥
(४) ११ । १ ॥
(५) ९ । ३३ ॥
(६) १ । १ ॥
(७) २२ । २ ॥
(८) ३१ । १३ ॥
(९) ८ । ४४ ॥
(१०) २० । ७४ ॥

श्विना ॥ ९७ ॥ करिणी कुर्विणी चैव हरिणी हरिता तथा ॥ तद्वद्धंसपदा नाम पञ्चैताः स्वरभक्तयः ॥ ९८ ॥ करिणी रहयोर्योगे कुर्विणी लहकारयोः ॥ हरिणीरशयोर्योगे हरिता लहकारयोः ॥ ९९ ॥ या तु हंसपदा नाम सा तु रेफषकारयोः ॥ (१) देवं बर्हिरिति करिणी(२) उपवल्हेति कुर्विणी ॥ १०० ॥ हरिणी(३) दर्शतमिति(४) शतवल्शेति हारिता ॥ (५) व्वर्षो व्वर्षीयसीत्याद्यास्तथा हंसपदेति च ॥ १०१ ॥ रलाभ्यां परऊष्माणो यत्र स्युः स्वरितोदयाः ॥ स्वरभक्तिरसौ ज्ञेया पूर्वमाक्रम्य पठ्यते ॥ १०२ ॥ स्वरभक्तिं प्रयुञ्जानस्त्रीन्दोषान्परिवर्जयेत् ॥ इकारं चाप्युकारं च ग्रस्तदोषं तथैव च ॥ १०३ ॥ एतल्लक्षणमाख्यातं याज्ञवल्क्येन धीमता ॥ सम्यक्पाठस्य सिध्यर्थं शिष्याणां हितकाम्यया ॥ १०४ ॥ नैतत्स्वरितपूर्वाङ्गे नापराङ्गे कथंचन ॥ नस्वरे न च मात्रायां कथं स्वारो विधीयते ॥ १०५ ॥ पराङ्गस्य तु यत्पूर्वं पूर्वाङ्गस्य तु यत्परम् ॥ उभयोरर्द्धसँय्योगे स्वारं कुर्याद्विचक्षणः ॥ १०६ ॥ सँय्योगे तु परं स्वार्य्यं परं सँय्योगनायकम् ॥ सँय्युक्तस्य तु

(१) २१ । ४४ ॥

(२) २३ । ४६ ॥

(३) ११ । ३६ ॥

(४) ५ । ४५ ॥

(५) ६ । ११ । हंसपदीति 'ख' पुस्तकपाठः ॥

वर्णस्य न स्वार्य्यं पूर्वमक्षरम् ॥१०७॥ उदात्तादनुदात्ते तु वामाया भ्रुव आरभेत् ॥ उदात्तात्स्वरितोदात्तौ क्रमाद्दक्षिणतो न्यसेत् ॥ १०८ ॥ स्वरितादुत्तरे(१) ये च प्रचयास्तान्प्रचक्षते ॥ एकस्वरानपि च तानाङ्कुरूक्त्वार्थचिन्तकाः ॥१०९॥ प्रचया यत्र दृश्यन्ते तत्र हन्यात्स्वरं बुधः ॥ स्वरितः केवलो यत्र(२) मृदुन्तत्र निपातयेत् ॥ ११० ॥ दुर्बलस्य यथा राष्ट्रं हरते बलवान्नृपः ॥ एवं व्यञ्जनमासाद्य अकारो हरते स्वरम् ॥ १११ ॥ उदात्तं नानुवर्त्तेत नीचं न स्वरितं तथा ॥ विस्वरं तं विजानीयाद्दीर्घं ह्रस्वविवर्जितम् ॥ ११२ ॥ हरिवरुणवरेण्येषु धारा हि पुरुषेषु च ॥ (३) वैश्वानरो नकारे च शेषास्तु स्वरिता नराः ॥ ११३ ॥ द्वौ वरुणौ च स्वरितौ (४) उदुत्तमं (५) त्वँव्वरुण ॥ धारे चैवोरुधारे तु पुरुधारे च दोहने ॥ ११४ ॥ मात्रिकं वा द्विमात्रं वा स्वर्य्यते यदिहाक्षरम् ॥ तस्यादितोऽर्द्धमात्रा स्याच्छेषं तु परतो भवेत् ॥ ११५ ॥ उच्चस्थानगते ह्रस्वे स्वरितं नोपपद्यते ॥ अधस्तात्तु

(१) येऽत्र इति 'क' पुस्तकपाठः ॥

(२) मृदुस्तत्र इति 'ख' पुस्तकपाठः ॥

(३) १८ । ७२ ॥

(४) १२ । १२ ॥

(५) ३३ । ३२ ॥

यदाऽऽगच्छेत्स्वरितं नापि तद्भवेत् ॥ ११६ ॥ उच्चा-
दुच्चतरं नास्ति नीचान्नीचतरं तथा ॥ अक्षराणि च
तुल्यानि प्रचितान्युच्चगानि च ॥ ११७ ॥ स्वर उच्चः
स्वरो नीचः स्वरः स्वरित एव च ॥ स्वरप्रधानं त्रैस्व-
र्यं (१) व्यञ्जनं तेन सस्वरम् ॥ ११८ ॥ मणिवद्व्यञ्ज-
नान्याहुः सूत्रवत्स्वर इष्यते ॥ व्यञ्जनान्यनुवर्त्तन्ते
यत्र तिष्ठति सस्वरः ॥ ११९ ॥ आचार्याः सममिच्छन्ति
पदच्छेदं तु पण्डिताः ॥ स्त्रियो मधुरमिच्छन्ति वि-
क्रुष्ट (२) मितरे जनाः ॥ १२० ॥ प्रथमा यत्र दृश्य-
न्ते सन्धिस्थानेषु पूर्वतः ॥ स्ववर्गीयेण संयुक्ता मोच्चं
कुर्वीत तत्र वै ॥ १२१ ॥ नकारान्ते पदे पूर्वे स्वश्रुतिः
परतः स्थिते ॥ तकारन्न प्रयुञ्जीत अत्र सन्धिः समु-
द्धरेत् ॥ १२२ ॥ नकारान्ते पदे पूर्वे (३) श्मश्मश्रुभिः, प-
रतः स्थिते ॥ छकारं न प्रयुञ्जीतञ्शसन्धिं समु-
च्चरेत् ॥ १२३ ॥ (४) ओकारः प्लुतविज्ञेयः प्लुतम-
ग्ना (५) द्वितीयकम्। (६) लाजीञ्छाचीं तृतीयं च

---

(१) आचार्याः प्रवदन्ति हि। इति 'ख' पुस्तकपाठश्च ॥

(२) विक्रुष्टमित्यव्यक्तेऽर्थे वर्त्तते ॥

(३) २५।१॥

(४) २।१३॥

(५) ८।१०॥

(६) २३।८॥

(१) विवेशेति चतुर्थकम् ॥ १२४ ॥ (२) अधः खिदासीत्पञ्चमं चोपरि खिदासीच्च षष्ठकम् ॥ १२५ ॥ सप्तमं तु क्लिवे स्मारः अष्टमं नैव विद्यते ॥ लृकारस्य तु दीर्घत्वं नास्ति वाजसनेयिनः ॥ १२६ ॥ तकारान्ते पदे पूर्वे चकारे परतः स्थिते ॥ मोच्चं तत्रापि कुर्वीत (३) यच्च शेपे निदर्शनम् ॥ १२७ ॥ ककारान्ते पदे पूर्वे सकारे परतः स्थिते ॥ खसवर्णं विजानीयाद्विषक्क्सोसेन (४) दर्शनम् ॥ १२८ ॥ ङकारान्ते पदे पूर्वे सकारे परतः स्थिते ॥ कसवर्णं विजानीयात्प्राङ्क्सोमं(५) इति दर्शनम् ॥ १२९ ॥ तकारान्ते पदे पूर्वे सकारे परतः स्थिते ॥ थसवर्णं विजानीया-(६)त्तत्सवितुर्निदर्शनम् ॥१३० ॥ नैतन्माध्यन्दिनीयानां सस्थानत्वात्तयोर्द्वयोः ॥ सस्थानेऽपि द्वितीयं स्यादापस्तम्बस्य यन्मतम् ॥ १३१ ॥ टकारान्ते पदे पूर्वे सकारे परतः स्थिते । ठसवर्णं विजानीयात्सम्म्राट् सम्मृत (७) इति निदर्शनम् ॥ १३२ नकारान्ते पदे

(१) २३ । ४९ ॥
(२) २३ । ७४ ॥
(३) ६ । १७ ॥
(४) २१ । २६ ॥
(५) १८ । ३ ॥
(६) ३ । ३५ ॥
(७) ३९ । ४ ॥

पूर्वे सकारे परतः स्थिते ॥ तसवर्णं विजानीया (१)त्त्रीन्त्सं मुद्द्रान्निदर्शनम् ॥१३३॥ पकारान्ते पदे पूर्वे सकारे परतः स्थिते ॥ फसवर्णं विजानीया,(२) दृप्स्वग्नेति निदर्शनम् ॥ १३४॥ पकारान्ते पदे पूर्वे शकारे परतः स्थिते ॥ फसवर्णं विजानीया (३) दनुष्टुप्शारदी यथा ॥ १३५॥ मकारान्ते पदे पूर्वे सवर्णे परतः स्थिते ॥ मसवर्णं विजानीयाद्दिमस्मे(४)ति(५) निदर्शनम् ॥ १३६ ॥ नकारान्ते पदे पूर्वे त्वं पदे परतः स्थिते ॥ सकारं न प्रयुञ्जीत (६) चिकित्वान्त्वमिदं यथा ॥ १३७ ॥ वर्णे तु मात्रिके पूर्वे अनुस्वारो द्विमात्रिकः ॥ द्विमात्रे मात्रिको ज्ञेयः सँय्योगाद्यस्य यो भवेत् ॥ १३८ ॥ अनुस्वारो द्विमात्रः स्यात्त्वर्णव्यञ्जनोदये ॥ ह्रस्वाद्वा यदि वा दीर्घाह्वैवानाठं० हृदये (७) यथा ॥ १३९ ॥ अनुस्वारस्योपरिष्टात्संहतं यत्र दृश्यते (८) ॥ दीर्घं तन्तु विजानीयाच्छ्रोता ग्रावाण-

(१) १३ । ३१ ॥
(२) १२ । ३६ ॥
(३) १३ । ५७ ॥
(४) २१ । १ ॥
(५) इदं पत्रं 'ख' पुस्तके नास्तीति बोध्यम् ॥
(६) २९ । २५ ॥
(७) १६ । ४६ ॥
(८) अनुस्वारस्योपरिष्टाद्विवृतं व्यञ्जनात्परमिति 'क' पुस्तकपाठः ॥

कं (१) यथा ॥ १४० ॥ अनुस्वारस्योपरिष्टात्सँय्योगो यत्र दृश्यते ॥ ह्रस्वं तं तु विजानीयात्तस९स्त्यामिति (२) निदर्शनम् ॥ १४१ ॥ अनुस्वारस्तु यो दीर्घादक्षराच्च भवेत्परः ॥ स तु ह्रस्व इति प्रोक्तो मन्त्रेष्वेव विभाषया ॥ १४२ ॥ ओभावश्च विवृत्तिश्च शषसा रेफ एव च ॥ जिह्वामूलमुपध्मा च गतिरष्टविधोष्मणः ॥ १४३ ॥ यद्योभावप्रसन्धानमुकारादि परं पदम् ॥ स्वरान्तं तादृशं विद्याद्यदन्यद्व्यक्तमूष्मणः ॥ १४४ ॥ ओभावस्यागता (३) योष्मा तां तु केलिं विनिर्दिशेत् ॥ (४) विवृत्तिप्रत्ययादूष्मा विज्ञेया विकटानना ॥ १४५ ॥ पादादौ च पदादौ च सँय्योगावग्रहेषु च ॥ लीढाऽतिलीढा (५) विद्युच्च शषसेषु प्रकीर्त्तिताः ॥ १४६ ॥ जिह्वामूले च रेफे च विज्ञेया (६) चपला तथा ॥ उपध्मानीयसहिता पुष्पिणीं तां विदुर्बुधाः ॥ १४७ ॥ अन्यत्र या भवेदूष्मा सुलभां तां विनिर्दिशेत् ॥ ऊष्मप्राधान्यमेतस्य तस्मात्तां यत्नतोऽभ्यसेत् ॥ १४८ ॥ पादाद्यन्तं (७)

---

(१) ६ । २६ ॥

(२) १९ । २९ ॥

(३) उभावादुत्थितश्चोष्मेति 'ग' पुस्तकपाठः ॥

(४) विवृत्तिं प्रति या ऊष्मेति 'ख' पुस्तकपाठश्च ॥

(५) लीढा विलीढा इति 'क' पुस्तकपाठः ॥

(६) विकटा शठा इति 'ख' पुस्तकपाठश्च ॥

(७) पादाद्यं च तथाऽवग्रहकालिकमिति 'ख' पुस्तकपाठः ॥

पदाद्यन्तं तथाऽवग्रहकालिकम् ॥ ईषत्स्पृष्टं विजानीयात्तस्मिन्काले तु कारयेत् (१) ॥ १४९ ॥ पादादौ च पदादौ च सँय्योगावग्रहेषु च ॥ जःशब्दइति विज्ञेयो योऽन्यः स यइति स्मृतः ॥१५०॥ उपसर्गपरो यस्तु पदादिरपि दृश्यते ॥ ईषत्स्पृष्टो यथा विद्युत्पदच्छेदात्परं भवेत् ॥ १५१ ॥ त्वदर्थवाचिनौ वोवां वा वै यदि निपातजौ ॥ आदेशाश्च विकल्पार्था ईषत्स्पृष्टा इति स्मृताः ॥ १५२ ॥ विभाषया यकारः स्यात्तथा नेति पदात्परः ॥ भवतीत्यपि पूर्वैव तथा च सपदादपि ॥ १५३ ॥ यदेव लक्षणं यस्य वकारस्यापि तद्भवेत् ॥ यत्र यत्र विशेषः स्यादिदानीं स तु कथ्यते ॥ १५४ ॥ वकारस्त्रिविधः प्रोक्तो गुरुर्लघुर्लघूतरः ॥ आदौ गुरुर्लघुर्मध्ये पदान्ते च लघूतरः ॥ १५५ ॥ यवर्णस्त्रिविधः प्रोक्तो गुरुर्लघुर्लघूतरः ॥ आदौ गुरुर्लघुर्मध्ये पदान्ते तु लघूतरः ॥ १५६ ॥ सन्धिजौ तु पदान्तीयावुपसर्गपरौ लघू ॥ अथ मा स न शब्देभ्यो विभाषाम्रेडिते यवौ ॥ १५७ ॥ पञ्चमादुत्तरो यो वो यदि चैकपदे भवेत् ॥ संहितायां लघुः सोऽपि पदकाले (२) गुरुर्भवेत् ॥ १५८ ॥ जात्ये च स्वरिते चैव वकारो यत्र दृश्यते ॥ उभयोरपि

---

(१) सुस्पृष्टं तं विजानीयात्तत्तत्कालनिबन्धनमिति 'क' पुस्तकपाठो बोध्यः ॥

(२) अतिसंस्पृष्टप्रयत्नेनोच्चारो गुरुरिति । सोऽर्थेति 'क' पुस्तकपाठः ॥

कर्त्तव्यो व्याघ्रव्यै (१) रिति दर्शनम् ॥ १५९ ॥ जात्ये च स्वरिते चैव यकारो यत्र दृश्यते ॥ कर्त्तव्यउभयोः क्षेपः सदृक्षै (२) रिति दर्शनम् ॥ १६० ॥ हकाररेफसंयुक्त ऋवर्णोदय एव वा ॥ सुस्पृष्टं तं विजानीयाद्यकारो नान्ययुग्यदि ॥ १६१ ॥ उपांशु (३) स्वरितं वाऽपि योऽधीते विवसन्नपि ॥ (४)अपरूपसहस्राणां सन्देहेषु प्रवर्तते ॥ १६२ ॥ पञ्च विद्यां न गृह्णन्ति जडास्तब्धाश्च ये नराः ॥ अलसाश्चातिरोगाश्च येषां च विस्मृतं मनः ॥ १६३ ॥ अहेरिव गणाद्भीतः सम्मानान्नरकादिव ॥ राक्षसीभ्य इव स्त्रीभ्यः स विद्यामधिगच्छति ॥ १६४ ॥ न भोजनविलम्बी स्यान्न च नारीनिबन्धनः ॥ सुदूरमपि विद्यार्थं व्रजेद्गरुडहंसवत् ॥ १६५ ॥ सुखार्थी चेत्त्यजेद्विद्यां विद्यार्थी सन्त्यजेत्सुखम् ॥ सुखिनश्च कुतो विद्या (५) विद्यार्थिनि कुतः सुखम् ॥ १६६ ॥ यथा खनन्खनित्रेण नरो वार्य्यधिगच्छति ॥ तथा गुरुगतां विद्यां शुश्रुषुरधिगच्छति ॥ १६७ ॥ गुणिता शतशो विद्या सहस्रावर्तिता पुनः ॥

---

(१) १९ । २८ ॥

(२) ७ । ४५ ॥

(३) उपांशित्यप्रकाशरहस्योच्चारणयोरिति मनोरमाटीकाशब्दरत्नयोरर्थः । त्वारितमिति 'ख' पुस्तकपाठश्च ॥

(४) अपि रूपसहस्राणां सन्देहे सः प्रवर्त्तेत इति 'ख' पुस्तकपाठः ॥

(५) कुतो विद्यार्थिनः सुखमिति 'ख' पुस्तकपाठश्च ॥

आगमिष्यति जिह्वाग्रे स्थलान्निम्नमिवोदकम् ॥ १६८ ॥ शतेन शुचिताऽऽयाति सहस्रेण च तिष्ठति ॥ जप्त्वा शतसहस्रेण प्रेत्य चेह च तिष्ठति ॥ १६९ ॥ जलमभ्यासयोगेन (१) शैलानां कुरुते क्षयम् ॥ कर्कशानां मृदुस्पर्शं किमभ्यासान्न साधयेत् ॥१७०॥ शुश्रूषा रहिता विद्या अपि मेधागुणैर्युता ॥ वन्ध्येव युवती तस्य न विद्या फलिनी भवेत् ॥ १७१ ॥ गुरुशुश्रूषया विद्या पुष्कलेन धनेन च ॥ अथवा विद्यया विद्या(२) चतुर्थं नोपलभ्यते ॥ १७२ ॥ हयानामिव जात्याना-मर्द्धरात्रार्द्धशायिनाम् ॥ न हि विद्यार्थिनां निद्रा चिरं नेत्रेषु तिष्ठति ॥ १७३ ॥ यथा(३)पिपीलिकाभिश्च क्रियते पांसुसञ्चयम् ॥ न बलन्नात्र सामर्थ्यमुद्यमस्तत्र कारणम् ॥ १७४ ॥ अञ्जनस्य क्षयं दृष्ट्वा वल्मीकस्य च सञ्चयम् ॥ (४) अवन्ध्यं दिवसं कुर्याद्दानाध्ययनकर्म्मसु ॥ १७५ ॥ अन्नव्यञ्जनयोर्भागौ तृतीयमुदकस्य च ॥ (५) वायोः सञ्चरणार्थाय चतुर्थमुपकल्पयेत्-

---

(१) शिलानां कुरुतेऽल्पमामिति 'ख' पुस्तकपाठः ॥

(२) चतुर्थो नोपलभ्यते । इति 'क' पुस्तकपाठः ॥

(३) यथा पिपीलकैः पांसु वल्मीकं क्रियते महत् । इति 'ख' पुस्तकपाठश्च ॥

(४) अवध्यं दिवसमिति 'ख' पुस्तकपाठः ॥

(५) वायुसञ्चारणार्थायेति 'क' पुस्तकपाठश्च ॥

तु ॥ १७६ ॥ हकारं पञ्चमैर्युक्तमन्तस्थाभि (१) श्च संयुतम् ॥ (२) औरसं तं विजानीयात्कण्ठ्यमाङ्गरसंयुतम् ॥ १७७ ॥ हकारो यत्र पूर्वस्य (३) अन्तस्थाश्च भवेत्परः ॥ पदकाले वियुज्येत संहितायां स औरसः ॥ १७८ ॥ मेघदुन्दुभिनिर्घोषः (४) श्रूयते पयसो ह्रदात् ॥ एवं नादं (५) प्रकुर्वीत सिंहस्य रुदितं यथा ॥ १७९ ॥ मासे भाद्रपदे मेघः शब्दं कुर्वीत (६) यादृशम् ॥ एवं गह्वरमासाद्य (७) शुक्रं दुदुह्रे निदर्शनम् ॥ १८० ॥ शाखायां वानरा यद्वन्निपतन्त्युत्पतन्ति च ॥ (८) एवं वर्णाः प्रयोक्तव्या (९) इहेहैषां निदर्शनम् ॥ १७६ ॥ यथा पुत्त्रवती स्नेहाच्चुम्बते निजमौरसम् ॥ एवं वर्णाः प्रयोक्तव्या (१०) युञ्जान इति दर्शनम् ॥ १८२ ॥ दद्रुर्दुरोदरदेशौ तु (११) प्रफुल्लिते पुनर्य-

---

(१) अन्तस्थैश्चापि संयुतमिति 'क' पुस्तकपाठः ॥
(२) औरस्यंतमिति 'ख' पुस्तकपाठः ॥
(३) हकारो यत्र पूर्वत्र अन्तस्थश्च भवेत्पर इति 'क' पुस्तकपाठश्च ॥
(४) ज्ञायते इति 'ग' पुस्तकपाठः ॥
(५) एवं नादं प्रयोक्तव्यमिति 'ग' पुस्तकपाठो बोध्यः ॥
(६) मेघाः शब्दं कुर्वन्ति । इति 'ग' पुस्तकपाठो ज्ञेयः ॥
(७) ३ । १६ । एवं नादं प्रकुर्वीतेति 'क' पुस्तकपाठः ॥
(८) निपतन्नुत्पतन्ति चेति 'क' पुस्तकपाठः ॥
(९) १० । ३२ ॥
(१०) ११ । १ ॥
(११) च उत्फुल्लेते इति 'ख' पुस्तकपाठश्च ॥

था॥ एवं वर्णाः प्रयोक्तव्या (१) अपाम्फेनेन दर्शनम्॥ १८३॥ यथा भारभराक्रान्ता निश्श्वसन्ति नरा भुवि॥ एवं वर्णाः प्रयोक्तव्या अद्भ्यः ऽ सम्भृत (२) इत्यपि॥ १८४॥ कुक्कुटः कामलुब्धोऽपि (३) ककारद्वयमुच्चरेत्॥ एवं वर्णाः प्रयोक्तव्याः कुक्कुटोऽसि (४) निदर्शनम्॥ १८५॥ वडवा च हयं दृष्ट्वा योनिं विकुरुते यथा॥ एवं वर्णाः प्रयोक्तव्या (५) स दुन्दुभे निदर्शनम्॥ १८६॥ यथा कामातुरा नारी शब्दं कुर्याद्दिने दिने॥ तच्छब्दं कुरुते प्राज्ञः सिꣳह्यसि (६) निदर्शनम्॥ १८७॥ पक्षौ वितत्य खे गृध्रो भ्रान्त्वासङ्कुच्य तिष्ठति॥ एवं वर्णाः प्रयोक्तव्या (७) वाध्रीनसो निदर्शनम्॥ १८८ रङ्गे चैव समुत्पन्ने न ग्राह्यं पूर्वमक्षरम्॥ स्वरं दीर्घं प्रयुञ्जीत पश्चान्नासिक्यमाचरेत्॥ १८९॥ यथा सौराष्ट्रिका नारी अरँऽइत्यभिभाषते॥ एवं रङ्गः प्रयोक्तव्यो (८) ङकारेण विवर्जितः॥

---

(१) १९। ७१॥

(२) ३१। १७॥

(३) कामुको यद्वत् इति 'क' पुस्तकपाठः॥

(४) १। १६॥

(५) २८। ५५॥

(६) ५। १२। इदं पद्यं 'ख' 'ग' पुस्तकयोर्नास्ति॥

(७) २४। ३९॥

(८) ङकारेण तु वर्जित इति 'क' पुस्तकपाठः॥

१९० ॥ द्विमात्रो मात्रिको वाऽपि नासामूलं समाश्रितः ॥ अन्ते प्रयुज्यते (१) रङ्गः पञ्चमैः सानुनासिकः ॥ १९१ ॥ अनन्तरं मकारस्य यो रङ्गस्तत्र (२) दृश्यते ॥ सर्वानुनासिकं विद्याद्देषा(३)मध्योपधानिका ॥ १९२ ॥ यरलवाः शषसहा (४)रज्यन्ते चोपधानिकाः ॥ वर्गान्ते रङ्गते यस्तु सर्वैः सर्वानुनासिकः ॥ १९३ ॥ (५) नासादुत्पद्यते रङ्गः कांस्येन सम निःस्वरः ॥ मृदुश्चैव द्विमात्रः स्याद्दृष्टिमाँ२ ॥ ऽइवे(६)ति निदर्शनम् ॥ १९४ ॥ यथा व्याघ्री हरेत्पुत्त्रान्दंष्ट्राभिर्न च पीडयेत् ॥ भीता पतनभेदाभ्यां तद्वद्वर्णान्प्रयोजयेत् ॥ १९५ ॥ मधुरं चापि नाव्यक्तं सुव्यक्तं न च पीडितम् ॥ सनाथस्यैव देशस्य न वर्णाः सङ्करं गताः ॥ १९६ ॥ यथा सुमत्तनागेन्द्रः पदात्पादं निधापयेत् ॥ (७) एवं पदं पदाद्यन्तं दर्शनीयं पृथक्पृथक् ॥ १९७ ॥ गीती शीघ्री शिरःकम्पी यथा लिखितपाठकः ॥ अनर्थज्ञोऽल्पकण्ठश्च षडेते पाठकाधमाः ॥ १९८ ॥ माधुर्यस-

---

(१) पञ्चमैः सर्वनासिकैः ॥

(२) यो रङ्गस्तत्र रज्यते । इति 'क' पुस्तकपाठः ॥

(३) मध्योपधानिकेति 'क' पुस्तकपाठश्च ॥

(४) अष्टौ ते चोपधानिनः ॥

(५) वर्गान्ते रज्यते यस्तु सर्वैः सर्वानुनासिकः । इति 'क' पुस्तकपाठः ॥

(६) ७ । ४० । इदं पद्यं 'क' पुस्तके नास्ति ॥

(७) पदात्पदं निधारयेत् । इति 'क' पुस्तकपाठश्च ॥

चरव्यक्तिः (१) पदच्छेदस्तु सुस्वरः ॥ धैर्यं गुरुलघुत्वं च षडेते (२) पाठका गुणाः ॥ १९९ ॥ आवर्त्तते पदं यच्च द्विस्त्रिराम्रेडितं हि तत् ॥ यथा च (३) धाम्ने धाम्नेति (४) यजुषे यजुषेति च ॥ २०० ॥ हीयते वर्द्धते वाऽपि पदं यच्च कृशोदरम् ॥ उपचारः सविच्छेय (५) उभे सुश्चन्द्र दर्शनम् ॥ २०१ ॥ अथ सप्तविधाः संयोगपिण्डाः । अयस्पिण्डो दारुपिण्ड ऊर्णापिण्डो-ज्वालापिण्डो मृत्पिण्डो वायुपिण्डो वज्रपिण्डश्चेति ॥ यस्मान्विद्यादयस्पिण्डान्स्मान्त्स्थान्द्दारुपिण्डवत् ॥ अन्तस्थं यमवर्जन्तु ऊर्णापिण्डं विनिर्द्दिशेत् ॥ २०२ ॥ अन्तस्थयमसंयोगे विशेषो नोपलभ्यते ॥ अशरीरं यमं विद्यादन्तस्थं पिण्डनायकम् ॥ २०३ ॥ ज्वालापिण्डान्सनासिक्यान्सानुस्वारांस्तु मृण्मयान् ॥ सोपध्मान्वायुपिडाँस्तु जिह्वामूले तु वज्रिणः ॥ २०४ ॥ तत्रायस्पिण्डो यथा (६) अग्निः । (७) पत्नीः । (८)

(१) पदच्छेदो यथास्वरमिति 'क' पुस्तकपाठः ॥

(२) षडेते पाठके गुणाइति 'क' पुस्तकपाठश्च एतदग्रेऽर्द्धमन्त्रं 'चतुरक्षरषट्कं च निवर्त्तेत पुनः पुन''रित्यधिकं ज्ञेयम् ॥

(३) १ । ३० ॥

(४) १ । ३० ॥

(५) १५ । ४३ ॥

(६) २३ । १७ ॥

(७) २७ । २० ॥

(८) १ । ४ ॥

तनच्चमीति । (१) यक्क्वेति ॥ दारुपिण्डो यथा (२) अश्र्वं÷। (३) सूर्य्यं÷। (४) विलिम्मने । (५) विश्र्व-जनस्यं । (६) वीर्य्यम् । ऊर्णापिण्डो यथा (७) अश्मं-न् । (८) कृष्णः÷। (९) अस्मिन् । (१०) कुक्कुटः । (११) अमुष्मिन् । (१२) यस्मिन् । (१३) अस्मै । इति । ज्वालापिण्डो यथा (१४) ब्रह्मं । (१५) वह्नितमम् । (१६) गृह्णामीति । व्याप्तिपिण्डो यथा (१७) सण्स्याम् । (१८)

---

(१) ३२ । ८ ॥
(२) २४ । १ ॥
(३) ३ । ९ ॥
(४) १६ । ३५ ॥
(५) ५ । २८ ॥
(६) १९ । ९ ॥
(७) १७ । १ ॥
(८) १ । १ ॥
(९) ३ । १ ॥
(१०) १ । १६ ॥
(११) १७ । २ ॥
(१२) २० । ७८ ॥
(१३) ७ । २० ॥
(१४) १३ । ३ ॥
(१५) १ । ८ ॥
(१६) ९ । २ ॥
(१७) १९ । २९ ॥
(१८) १५ । ५ ॥

स॒ꣳस्तुप् । (१) सि॒ꣳह्य॑सि । (२) उह्विं॒ ꣳस्तभानेति। वायुपिण्डो यथा (३) उप॑ह्नू॒तो द्यौ॒ष्पिता । (४) दे॒व सवित॒ः प्र॑सु॒वं । (५) यु॒ञ्जा॒नः॒ऽ प्र॑थ॒मम् । वज्रपिण्डो यथा (६) दू॒ष्कृ॑ति॒ः । निष्कृ॑ती॒ः । (७) ऋ॒क्सा॒मयो॑रिति । (८) ह॒विष्कृ॑दे॒हि । (९) दि॒वः क॒कुत् । (१०) व्य॑दधु॒ः क॒तिधेति । प्रथमेन षकारेण सकारेणैव संयुतम् ॥ एतत्स्वरं समासाद्य (११) अ॒ग्नि॒ष्वा॒त्तान्निदर्शनम् ॥ २०५ ॥ प्रथमेन ठकारेण षकारेण च संयुतम् ॥ एतत्स्वरं समासाद्य (१२) अ॒धि॒ष्ठानं निदर्शनम् ॥ २०६ ॥ प्रथमेन णकारेण नकारेणैव संयुतम् ॥ एतत्स्वरं समासाद्य (१३) त्रि॒ण॒व॒त्र॒य॒स्त्रि॒ꣳशौ निदर्शनम् ॥

---

(१) ५ । १० ॥
(२) ५ । २७ ॥
(३) २ । ११ ।
(४) ९ । १ ॥
(५) ११ । १ ॥
(६) १२ । ८३ ॥
(७) ४ । ९ ॥
(८) १ । १५ ॥
(९) ३ । १२ ॥
(१०) ३१ । १० ॥
(११) १९ । ६१ ॥
(१२) १७ । १८ ॥
(१३) १० । १४ ॥ त्रिषु पदेषु प्रथममेव इति 'ख' पुस्तकपाठः ॥

२०७॥ प्रथमेनैव रङ्गेण नकारेण च संयुतम् ॥ एतद्रू-ञ्जितमासाद्य(१)दृष्टिमाँ२॥ऽइति दर्शनम् ॥ २०८ ॥ ककारादयो मकारावसानाः पञ्चविंशतिस्स्पर्शाः कृष्णा व्याख्याताः शनैश्चरदैवत्याः ॥ चत्वारोऽन्तस्था यरलवाः कपिला अग्निदैवत्याः । चत्वार ऊष्माणः शषसहा अरुणा आदित्यदैवत्याः । एवं त्रयस्त्रिंशद्व्यञ्जनानि स्पर्शान्तस्थोष्माणश्चेति । चतुर्विधं करणम् । स्पृष्टमस्पृष्टं संवृतं विवृतं चेति । संवृता घोषा विवृता अघोषाः, विंशतिर्घोषास्ते गजडदबा घझढधभाः । ङञणनमा यरलवाश्चेति । त्रयोदशाघोषास्ते कचटतपाः खछठथफाः शषसाश्चेति । षड्विधमास्यप्रयत्नम् । संवृतं विवृतमस्पृष्टं स्पृष्टमीषत्स्पृष्टं चार्द्धस्पृष्टं चेति ॥ तत्र । अकारः संवृतो ज्ञेय इतरे विवृताः स्वराः ॥ सर्वे च तेऽप्युरस्पृष्टाः स्पर्शाः स्पृष्टा भवन्ति हि ॥ २०९ ॥ ईषत्स्पृष्टास्तथान्तस्था ऊष्माणोऽर्द्धस्पृशः स्वराः ॥ सामान्यं भजते वर्णः सस्थानकरणस्य हि ॥ २१० ॥ ऋलोर्मध्ये भवत्यर्द्धमात्रारेफलकारयोः ॥ तस्मादस्पृष्टता न स्याद्दलकारनिरूपणे ॥ २११ ॥ वर्गाणां प्रथमा द्वितीयाः शषसहाश्चाघोषा, घोषास्त्वन्ये दशधा वर्णा भवन्ति । औरस्यकण्ठ्यमूर्द्धन्यतालव्यदन्त्यौष्ठ्यजिह्वामूली-

(१) ७।४०॥

यजिह्वामूलीययमानुस्वाराश्चेति। तत्र द्वावौरस्यौ ह्व ह्य इति। त्रयः कण्ठ्या अवर्णहकारविसर्जनीया इति। षण्मूर्द्धन्याः षकारो टवर्गश्चेति। नव तालव्या इवर्णचवर्गशकारैकारयकाराः। अष्टौ दन्त्या लृवर्णलकारसकारतवर्गा इति। अष्टावोष्ठ्या उवर्णवकारोपध्मानीयपवर्गा इति। एको दन्तमूलीयो रेफः। पञ्च जिह्वामूलीया ऋॢकौ कवर्ग इति। चत्वारो यमाः कुँ खुँ गुँ घुँ इति॥ रुक्मेति प्रथमो ज्ञेयः सक्थ्ना (१)इत्यपरो भवेत्॥ (२)ब्धि द्मा ते तु तृतीयस्तु (३)जघ्नौ दध्ध्मस्तुतुर्थकः॥ २१२॥ अपञ्चमैश्चैकपदे संयुक्तं पञ्चमात्परम्॥ उत्पद्यते यमस्तत्र सोऽङ्गं पूर्वाक्षरस्य हि(४)॥२१३॥ पञ्चमाः शषसैर्युक्ता अन्तस्थैर्वाऽपि संयुताः॥ यमास्तत्र निवर्तन्ते श्मशानादिव बान्धवाः॥ २१४॥ आद्या मात्रा तु कण्ठ्यस्य एकारौकारयोर्भवेत्॥ तालव्यस्य तथौष्ठ्यस्य द्वितीया च यथा क्रमम्॥ २१५॥ यादृशी रक्तवर्णाभा जपायाः कुसुमेऽथ वा॥ तादृशं रञ्जयेद्वर्णं प्रान्ते नासिक्यमाचरेत्(५)॥२१६॥ लाक्षारक्तं यथा तोयं

---

(१) २३। २९॥

(२) १२। १९॥

(३) १६। ६४॥

(४) आपञ्चमैश्चैकपादः संयुक्तं पञ्चमाक्षरम्॥ उत्पद्यन्ते यमास्तस्याङ्गं पूर्वाक्षरस्य हि। इति 'ख' पुस्तकपाठः॥

(५) नासिक्यमागतमिति 'ख' पुस्तकपाठः॥

नकारान्तं पदं (१) तथा ॥ सर्वरङ्गं विजानीयाच्छत्रू-
निति(२) निदर्शनम् ॥ २१७ ॥ लुप्ते नकारे यत्स्वारं
रञ्जन्ति शौनकादयः॥ आदिरङ्गं विजानीयान्न चासी-
दिव विन्दति॥ २१८ ॥ प्रथमस्य षकारेण तकारेण च
संयुतम् ॥ (३) एतदक्षरमासाद्य त्रिष्टुभेति(४) निदर्श-
नम् ॥ २१९ ॥ प्रथमस्य षकारेण थकारेण च संयुतम् ॥
एतत्स्वरं समासाद्या(५) धिष्ठ्यानिमिति दर्शनम् ॥
२२० ॥ चतुर्थं च तृतीयेन द्वितीयं प्रथमेन च ॥ आद्यं
मध्यं (६) तथान्त्यं च स्वरूपेणाभिपीडयेत् ॥ २२१ ॥
अवग्रहपदच्छेदे उदात्तं दृश्यते यदि ॥ स्वरन्तं स्व-
रितं प्राहुः सन्धौ तु स्वार्य्यते परम् ॥ २२२ ॥
स्वरसन्धिविधानेन नीचोच्चं तु विधीयते ॥ व्यञ्जना-
द्वा स्वराद्वाऽपि तत्सन्धौ स्वर उच्यते॥ २२३ ॥ उदा-
त्तान्निहितः स्वारः स्वरितात्प्रचयो भवेत् ॥ उदात्तात्स्व-
रिता(७)त्पूर्वो नान्य आपद्यते स्वरः ॥ २२४ ॥ पदका-
ले यः स्वरितः संहितायां तथैव च ॥ स्वरिताच्चेद्भवे-

---

(१) पदमित्यत्र स्वरमिति च 'ख' पुस्तकपाठः ॥

(२) ७ । ३७ ॥

(३) एतत्स्वरं समासाद्येति 'ख' पुस्तकपाठः ॥

(४) २८ । ४० ॥

(५) २७ । १६ ॥

(६) पञ्चस्वाक्षरेणम इति 'ख' पुस्तकपाठश्च ॥

(७) पर्वन्नान्यमापद्यते स्वरमिति 'ख' पुस्तकपाठः ॥

त्पश्चात्स एव निचितः स्वरः ॥ २२५ ॥ प्रथमास्तु तृतीयाः स्युः परे घोषवति स्थिते ॥ पञ्चमाः पञ्चमे पाठे द्वितीयाः शषसेषु च ॥ २२६ ॥ उदात्तान्निहतः स्वार्य्यः स्वारोदात्तौ न तत्परौ ॥ स्वरितो यस्तथाभूतो ज्ञेयः स प्रचयः सदा ॥ २२७ ॥ उच्चानुदात्तयोर्योगे स्वरितः स्वार उच्यते ॥ ऐक्यं तत्प्रचयः प्रोक्तः सन्धिरेषां मिथोऽद्भुतः ॥ २२८ ॥ बह्वीर्जिह्वा यथा गृह्णात्यन्ह्वा वह्निस्तथैव च ॥ ब्रह्मरूपं विजानीयाद्गुरुमेवात्मनः सदा ॥ २२९ ॥ यत्किञ्चिद्वाङ्मयं लोके सर्वमत्र प्रतिष्ठितम् ॥ करोति तत्प्रदानं यत्तस्माद्ब्रह्ममयो गुरुः ॥ २३० ॥ विधिनाऽप्यविधिज्ञानमविधानान्न लभ्यते ॥ अविधानपरो नित्यं प्रायश्चित्तीयते नरः ॥ २३१ ॥ युक्तियुक्तं वचो ग्राह्यं न ग्राह्यं गुरुगौरवात् ॥ सर्वशास्त्ररहस्यं तद्याज्ञवल्क्येन भाषितम् ॥ २३२ ॥ इति श्री महर्षियोगिवरयाज्ञवल्क्यप्रोक्ता शिक्षा समाप्ता ॥

---

# अथ वासिष्ठी शिक्षाऽऽरभ्यते ॥

---

अथ शिक्षां प्रवक्ष्यामि वासिष्ठस्यमतं यथा॥ सर्वानुक्रमसुद्धृत्य ऋग्यजुषोस्तु लक्षणम् ॥ १ ॥ (१) अध्याये-प्रथमे नवमेऽनुवाके पराक्रूरस्येत्येका ऋगन्यानि यजूꣳषि सर्वे मन्त्राः) सप्तदशोत्तरशतं यजूꣳषि प्रथमे। १। ११७॥ द्वितीयेऽध्याये वीतिहोत्र, मित्येषा तेऽअग्न, इति मरुतां पृषतीरिति, यम्परिधिमिति यजुरन्त्याग्नेः प्रियं यजुः सꣳस्रवभागा इति यजुरन्त्या स्वाहा वाडिति यजुरेकेन सह मन्त्रं, देवागातुविदऽइति द्वे सँव्वर्च्चसेति ये रूपाण्याधत्तेति द्वे द्वे द्वितीये द्वादशैवार्च्चः षट्सप्ततिर्य्यजूꣳषि ॥ २ । ७६ ॥ तृतीयेऽध्याये समिधाग्निमिति चतस्र ऽआयङ्गौरिति तिस्रोऽग्निर्ज्ज्योतिरिति सप्त गायत्र्यः पूर्वाः पञ्चैकपदाऽनन्तरे त्रिपदे उपप्रयन्त इति षडिन्धानाऽइति त्र्यवसाना महापङ्क्तिरूपाश्चेति सप्तगायत्र्य आध्यायास्तिस्रस्त्रिपदा उत्तराश्चतस्रो द्विपदाः सोमानमिति नवागन्मेति तिस्रो गृहा मेति चतस्र उपहूता इति त्र्यवसाना महापङ्क्तिः प्रघासिन इति चतस्रः पूर्णा दर्व्वि द्वे अक्षन्नमीमद-

---

(१) अन्यानि पद्यानि क्वाचित्कभेदेन ऋग्यजुःपरिशिष्टे लिखितानि ॥

दन्तेति षडेव रुद्रद्रमिति चतस्र एतत्ते रुद्रद्रेत्येकाऽऽ-
स्तारपङ्क्तिर्जपयजुरित्येके त्र्यायुषमित्येषा द्वृति ये ऋ-
चस्त्रिषष्टिर्द्विषष्टिर्वा चतुस्त्रिꣳशत्षट्त्रिꣳशद्वा यजूꣳ-
षि॥६३ । ३६॥ चतुर्थेऽध्याये एदमिति द्वे अत्यष्टी त्र्य-
वसाने आवऽइत्येकाऽऽपो देवीरिति विश्वो देवस्येति
देवीस्त्रियमिति स्वाहाः पीता इति चाग्ने त्वमिति त्व-
मग्ने व्रव्यसि समख्ये अभिन्त्यमित्येकैका परिमाऽग्ने
इति द्वे अस्तभ्ना द्यामिति चतस्रो नमो मित्रस्येत्येका
या ते धामानीति चैका चतुर्थे एकविंशतिर्विंशतिर्वा
पञ्चषष्टिर्यजूꣳषि षट्षष्टिर्वा ॥ २१। ६६ ॥ पञ्चमेऽ-
ध्याये भवतन्नऽइति द्वे अꣳशुरꣳशुरिति प्रकृति
स्त्रवसाना युञ्जतऽइति तिस्रो विष्णोर्नुकमिति
तिस्रः पूर्वे यजुरन्ते विष्णवे त्वेति यजुरुभयतः परित्वे-
त्येका त्वꣳ सोमेति पञ्चाद्या गायत्र्यनवसाना जुषा-
ण इत्येकपदा विराड् यजुरन्तोरु विष्णोऽइत्येषा वा-
रुद्वयं पञ्चमे सप्तदशर्चः पञ्चदशोत्तरशतानि यजूꣳ-
षि ॥ १७ । ११५ ॥ षष्ठेऽध्याये या ते धामानीत्येका
विष्णोः कर्म्माणीति द्वे इदमापो महापङ्क्तिस्त्र्यवसा-
ना देवस्त्वष्टुरित्येका यदाङ्गरघ्न्याऽइत्यवसाना गाय-
त्री चैका हविष्मतीरित्येका अमूर्या इत्येका हृदे
त्वा इत्युनोस्त्वग्निरिति चतस्रो यत्ते सोमेति द्वे प्रा-

गपागिति द्वे षष्टे ऋचः सप्तदश त्र्यशीतिर्यजूꣳषि ॥ १७ । ८३ ॥ सप्तमेऽध्याये त्वाचस्पतये इत्येकाऽन्तस्ते इत्येका त्वायविति षड्यजुरन्ता सा प्रथमे त्येकाऽयँवेनऽइति यजुरन्ते ये देवासऽइत्येका मूर्द्धानमित्येका ध्रुवन्ध्रुवेणेति द्वे कोऽसीत्येका इन्द्राग्नीऽआगतमिति दश यजुरन्ता उदुत्यमिति चतस्रः सप्त ऋचस्त्रिंशदेकादशोत्तरयजूꣳषि । ३० । १११ ॥ अष्टमेऽध्याये कदा चनेति तिस्रो यजुरन्ताऽऽदित्येभ्यस्त्वेति यजुः अदस्माऽइति द्वे अहं परस्तादित्येका समिन्द्रेति सप्तोरुꣳ हीत्येकाऽग्नेरनीकमिति तिस्रऽएजतु द्वे पूर्वा त्र्यवसाना महापङ्क्तिर्म्मरुतो यस्येति द्वे आतिष्ठेति यजुरन्तास्तिस्रो यस्मान्नेति द्वे द्वितीया यजुरन्ता सह प्राणेनेति यजुरग्ने पवस्वेति चतस्रो यजुरन्ताऽऽजिघ्रेति द्वे त्विनऽइन्द्रेति त्वाचस्पतिमिति द्वे तिस्रोऽपि यजुरन्ता उपसृजन्निति द्वे युवन्तमिति त्र्यवसानेऽत्यष्टिर्य्यँयोरोजसेत्येका चतुस्त्रिꣳशत्तन्तवऽइति तिस्रोऽष्टमे त्रिचत्वारिꣳशत्यो यजूꣳषि त्रिचतुरुत्तरꣳशतम् । ४३ । १०४ ॥ नवमेऽध्याये देव सवितरित्येकाऽपाꣳरसमिति यजुरन्ते त्वाजस्यन्त्वित्येकाऽष्वन्तरवसाना पुरऽउष्णिगिति त्वातो वेति तिस्रऽएषस्येति षड्वाजस्येममिति सप्ताग्ने सहस्वेति चैका

नवमे ऋचो द्वाविंशतिर्यजूꣳषि चतुरशीतिः ॥ २२ ।
८४ ॥ दशमेऽध्याये, अपो देवा इत्येका सधमादऽइत्येका
हिरण्यरूपावित्येका यजुरन्ता मित्रोऽसि वरुणोसि य-
जुः प्रपर्वतस्येत्येका प्रजापतेनेत्येव यजुर्मध्यायममुष्य
यजुर्मात्ऽइन्द्रेत्येका हꣳसऽइत्येका निषसादेत्येका
वायुः पूतऽइति चतस्रो दशमे ऋचो द्वादश, यजूꣳषि
द्विरुत्तरशतम् ॥ १२ । १०२ ॥ एकादशेऽध्याये युञ्जा-
नऽइत्यष्टौ, ऋचास्तोममित्यनवसाना गायत्री, हस्तऽ-
आधायेत्येका यजुरन्ताऽऽनुष्टुभेनेति यजुः प्रतूर्त्तमिति
चतस्रोऽन्या यजुर्गर्भोऽर्न्तरिक्षमिति यजुरन्वग्नि-
रित्येकादशापाम्पृष्ठमिति तिस्रस्त्वामग्नऽइति षडपो
देवीरिति दश, नवमी त्र्यवसानान्त्यैकपदौषधय इति
तिस्रऽआपो हि ष्ठेति तिस्रो मित्रऽइति पञ्च, क्र-
त्वा येत्येका मित्रस्येति तिस्रो विश्वो देवस्याध्यायान्ताः
सप्तदशैकादशे ऋचः षट्सप्ततिर्यजूꣳषि षड्विꣳश-
तिः ॥ ७६ । २६ ॥ द्वादशेऽध्याये ऋचां बाहुल्याद्य-
जूꣳषि दीर्घियन्ते शेषा ऋचो, विष्णोः क्रमोऽसी-
ति चत्वारि हꣳसः शुचिषदित्यन्ताद्यजुः स बोधि सू-
रिरित्यन्ते विश्वकर्म्मणे स्वाहेति यजुः, सञ्ज्ञानम-
सीत्यग्नेर्भस्मासीति चितस्थेति चिदसीति द्वे सजूर-
ब्दऽइति शेषास्त्वतुर्द्दशोत्तरꣳशतमृचस्तत्र सुपर्णोऽसि

चतुरवसानाऽऽकूतिर्न्नमो भूत्याऽइति विराडेकपदा द्वादश यजूꣳषि द्वादशे ऋचश्चतुर्द्दशोत्तरꣳशत् ॥ १२ । ११४ ॥ त्रयोदशेऽध्याये मयि गृह्णामीति चतस्रोऽषाढासीत्येका मधुव्वाताऽइत्येकादश सम्भ्यक्स्रवन्तीति नवेमम्माहिꣳसीरिति षडाद्यानां पञ्चानामन्तेषु द्वे द्वे यजूꣳष्यध्यायान्ते लोकन्ताऽइन्द्रमिति तिस्रः प्रतीकोक्ता लोकम्पृण ताऽअस्येन्द्रँ व्विश्वाऽइति त्रयोदशे ऋचो द्वापञ्चाशद्यजूꣳषि सप्ताशीतिः । ५२ । ८७ ॥ चतुर्द्दशेऽध्याये ध्रुवक्षितिरिति पञ्च चतस्रो यजुरन्ता मूर्द्धा व्वयऽइत्यनुवाकान्ते लोकन्ताऽइन्द्रमिति तिस्रऽइन्द्राग्नीऽइत्येका मूर्द्धासीति द्वे तयोर्मध्ये चतुर्द्दश यजूꣳषि छन्दोबन्धेन सङ्गृह्य सम्पद्यन्ते लोकन्ताऽइन्द्रमिति तिस्रश्चतुर्द्दशे प्रतीकोपादानं वर्ज्जयित्वा ऋचोऽष्टौ सह सप्तदश यजूꣳषि चतुःपञ्चाशदुत्तरꣳशतम् । १७ । १५४ ॥ पञ्चदशेऽध्यायेऽग्ने जातानिति द्वे अग्नेः पुरीषमित्येकाऽग्निर्म्मूर्द्धेत्येकत्रिꣳशत्त्वाग्निꣳहोतारमिति त्र्यवसानाऽग्ने त्वन्नऽइति द्विपदास्तिस्रो येनऽऋषयोऽष्टौ लोकम्पृणेति चतस्रः पञ्चदशे ऋचः षट्चत्वारिꣳशद्यजूꣳषि नवतिः । ४६ । ९० ॥ षोडशेऽध्याये नमस्तऽइति षोडश द्रापेऽअन्धसस्पतऽइति सप्तदश षोडशे ऋचस्त्रयस्त्रिꣳश-

दुत्तरं शतम् ॥ ३३ । १२९ ॥ सप्तदशेऽध्यायेऽश्मन्नूर्ज्जमिति चत्वारीमा मेऽअग्नऽइत्येकं नृषदे वेडिति पञ्चैन्द्रं दैवीरित्येकमित्युद्धृतानि यजूᳬष्येकादशर्च्चः पञ्चनवतिः । ११ । ९५ ॥ अष्टादशेऽध्याये वाजस्य न्विति सप्त स नो भुवनस्येत्येका याःस्तऽइति चतस्रोऽग्निं युनज्ज्मीत्याध्यायान्तऽऋचो नामेत्युद्धृत्य यजुर्य्यजुरेकोऽपरं सप्तविंशतिरष्टादशे ऋचः षट्त्रिंशद्यजूᳬष्यष्ट षष्टिस्त्रीणि शतानि ॥ ३६ । ३६८ ॥ एकोनविंशेऽध्याये स्वाद्वीन्त्वा यजुरित्येका परीतऽइति चतस्रो ब्रह्मक्षत्रमिति द्वे नानाहीत्येका याः व्याघ्रमिति आध्यायान्ताश्चतुरशीतिः पितृभ्यऽइत्युद्धृत्य तत्रेदं हविरिति त्र्यवसाना महापङ्क्ती रेतोमूत्रमिति द्वे त्र्यवसाने अवसानेऽप्यकरीएकोनविंशे ऋचश्चतुर्णवतिर्य्यजूᳬषि विंशत् ॥ ९४ । ३० ॥ विंशतितमेऽध्याये क्षत्रस्य योनिर्द्विपदा गायत्री निषसादेत्येका कोऽसीति षडन्त्या त्र्यवसाना महापङ्क्तिस्त्रया देवा इति त्र्यवसाना पङ्क्तिर्लोमानीत्येका यद्देवा इति तिस्रः समुद्रे ते इति द्विपदा विराडेका द्रुपदादिवमिति तिस्रः समाववर्त्तीत्येकाऽध्यादधानीत्यध्यायान्त्यः षडृष्टिभ्यऽउपयामिति यजुर्विंशतिमे ऋचश्चतुरशीतिर्य्यजूᳬषि चतुर्दश ॥ ८४ । १४ ॥ एक-

विंᳫ॰शतितमेऽध्याये, इममग्ने त्वरुणीति विंᳫ॰शतिरृच: शेषाणि होता यक्षदित्यारभ्याध्यायान्तानि यजूᳫ॰षि त्रयस्त्रिᳫ॰शदृचोऽष्टाविंᳫ॰शतिर्यजूᳫ॰षि त्रयस्त्रिᳫ॰शत् । २८ । ३३ ॥ द्वाविंᳫ॰शतिमेऽध्याये, इमामगृभ्णन्नित्येका योऽअर्वन्तमिति च तत्सवितुरिति दश विश्वो देवस्येत्येका, द्वाविंᳫ॰श ऋचस्त्रयोदश,त्रयोदशोत्तरᳫ॰शतं यजूᳫ॰षि ॥ १२ । ११३ ॥ त्रयोविंᳫ॰शतिमेऽध्याये हिरण्यगर्भऽइत्युत्सृज्य्या ऽस्य गुदमित्यध्यायान्ता: पञ्चचत्वारिᳫ॰शत्त्रयोविंᳫ॰शे ऋचोऽष्टापञ्चाशद्यजूᳫ॰षि चतुर्विंᳫ॰शति: ॥ ५८ । २४ ॥ चतुर्विᳫ॰शतितमेऽध्याये, अश्वस्तूपरऽइत्यारभ्याध्यायान्तानि सर्वाणि यजूᳫ॰षि ॥ पञ्चविंᳫ॰शतिमेऽध्याये शादन्दद्भिरित्यारभ्य त्वचेत्यन्तᳫ॰ सर्वाणि यजूᳫ॰षि जुम्बकायेति द्विपदा हिरण्यगर्भ इत्यारभ्य हविष्मानित्यन्ता: षट्त्रिᳫ॰शदृचऽइमा नु कमिति षड्द्विपदा: पञ्चविंश ऽऋचस्त्रिचत्वारिᳫ॰शत् ॥ ४३। षड्विंᳫ॰शतिमेऽध्याये प्रियो देवानामित्येकाऽनवसाना बृहस्पतेऽअतीत्यध्यायान्तास्चतुर्विंᳫ॰शति: षड्विंᳫ॰श ऋच: पञ्चविंᳫ॰शति: सप्त यजूᳫ॰ष्यष्टौ यजुरन्ता: ॥ २५ । १५ ॥ सप्तविंᳫ॰शतिमेऽध्याये समास्त्वाऽग्नऽइति दशोर्ध्वोऽअस्येति द्वादश पीवोऽअन्ना-

निति द्वादशाभित्वा दश सँव्वत्सरोऽसीति यजुरेकं सप्तविंᳪ॰शे ऋचश्चतुश्चत्वारिᳪ॰शद्यजुरेकम् ॥ ४४ । १ ॥ अष्टाविᳪ॰शतिमेऽध्याये होता यक्षदित्यादीनि यजूᳪ॰ष्येवᳪ॰ सर्वाणि यजूᳪ॰षि षट्चत्वारिᳪ॰शत् ॥ ४६ ॥ एकोनविᳪ॰शेऽध्याये समिद्धोऽअञ्जन्निति सप्तपञ्चाशदृचऽआग्नेयः कृष्णग्रीवऽइत्यारभ्याध्यायान्तानि द्वात्रिᳪ॰शद्यजूᳪ॰षि ॥ ५७ । ३२ ॥ त्रिᳪ॰शत्तमेऽध्याये देव सवितरिति तिस्रः पराणि सर्वाण्यध्यायान्तानि सप्तसप्तत्युत्तरᳪ॰शतं यजूᳪ॰षि ॥ ३ । १०७ ॥ एकत्रिᳪ॰शत्तमेऽध्याये सहस्रशीर्षेति द्वाविᳪ॰शतिर्ऋच एव ॥ २२ ॥ द्वात्रिᳪ॰शत्तमेऽध्याये तदेवाग्निरित्यादयः षोडशर्चस्तत्र तृतीया न तस्य प्रतिमेति द्विपदा गायत्री हिरण्यगर्भो यः प्राणतो यस्यमे यऽआत्मदा इति चतस्रो मा मा हिᳪ॰सीदित्येका यस्मान्न जातऽइति द्वे आपो ह, यश्चिदिति द्वे एताः प्रतीकोक्ता सह पञ्चविᳪ॰शतिरेव ॥२५॥ त्रयस्त्रिᳪ॰शत्तमेऽध्यायेऽस्या जरासऽइत्याद्यध्यायान्ताः सर्वाऽऋच एव द्वाविᳪ॰शतिः प्रतीकोक्ताः सहैकोनविᳪ॰शतिः शतमृच एव ॥ ११६ ॥ चतुस्त्रिᳪ॰शत्तमेऽध्याये यज्जाग्रतऽइत्येवमादयोऽध्यायपर्य्यन्ताऽअष्टापञ्चाशदृच एव चतस्रः प्रतीकोक्ताः सह द्वाषष्टिर्ऋचऽएव ॥ ६२ ॥

पञ्चविंᳪशत्तमेऽध्यायेऽपेतो यन्त्वित्यादयऽएक विᳪशतिर्ऋचो द्युभिरक्तोभिरित्येकं यजुर्वायुः पुनात्विति चत्वारि यजूᳪषि अप नऽइत्येकमेकविᳪशत्यृचः षड्यजूᳪषि ॥ २१ । ६ ॥ षट्त्रिंᳪशत्तमेऽध्याये यन्मऽइत्येका तत्सवितुरिति षडिन्द्रो विश्वस्य विराड्द्विपदा शन्नोमित्रऽइति नवाश्वानिशमिति द्विपदा गायत्री नमस्तऽइति तिस्रस्तच्चक्षुरित्येका यजुर्मध्या पुरस्ताद्यजुर्यजुरन्ता षट्त्रिᳪशे विᳪशतिर्ऋचो यजूᳪषि चैकविᳪशतिर्द्वाविᳪशतिर्वा ॥ २० । २२ ॥ सप्तविंᳪशत्तमेऽध्याये युञ्जतऽइत्येका प्रैत्वित्येका धर्त्ता दिवऽइति द्वे हृदे त्वेका सप्तत्रिᳪशे पञ्चर्चो यजूᳪष्येकत्रिᳪशत् ॥ ५ । ३१ ॥ अष्टत्रिᳪशेऽध्याये यस्ते स्तनऽइत्येका विश्वाऽआशा ऽइत्येकाऽश्विना घर्मंमिति द्वे अभीममिति द्वे गायत्री बृहत्यौ मध्येऽनवसानाऽतिशक्करी वा समस्त्र्यवसाना चतस्त्वेति चतस्रऽउद्वयमित्येका यावती द्वे पयसो रेतऽइति गायत्र्यनवसाना चैकेत्यष्टत्रिᳪशे त्रयोदश चतुर्दश वा ऋचो यजूᳪषि द्वापञ्चाशत् ॥ १४ । ५२ ॥ एकोनचत्वारिᳪशत्तमेऽध्याये मनसः काममित्येकोग्रश्च भीमश्चेति च नवत्रिᳪशत्तमे ऋचो द्वे यजुषी सप्तोत्तरशतम् । २ । १०७ ॥ चत्वारिᳪश-

त्तमेऽध्याये इषा त्वास्यमिति चतुर्दशाग्ने नयेति च द्वे इति सप्तदशर्च्चौ वायुरनिलमिति द्वे यजुषी ओमिति वा गायत्री क्रतो इति त्रीणि यजूंषि हिरण्मयेन पात्रेणेति वा खम्ब्रह्मेति चत्वारिंशत्तमे यजूंषि सप्त, ऋग्यजुषोः सङ्ख्याविभागः ॥ १७ । ७ ॥ एकीकृत्वा ऋचः सर्वा मुनिषड्वेदभूमिताः । १४ । ६७ ॥ अग्निरामाथ वा ज्ञेया वसिष्ठेन च धीमता ॥ १ ॥ एवं सर्वाणि यजूंषि रामाश्विवसुयुग्मकाः ॥ २८२३ ॥ अथ वा पञ्चभिर्न्यूनाः संहितायां विभागतः ॥ २ ॥

इति ऋग्यजुर्विभागात्मिका वासिष्ठी शिक्षा समाप्ता ॥

---

# अथ कात्यायनीशिक्षा व्याख्यान युताऽऽरभ्यते ॥

अथ कात्यायनी शिक्षाऽतिदुर्विज्ञेयत्वात्स्वरित-स्यादौ लक्षणमाह ॥

यदुदात्तात्परं नीचं स्वार्य्यं तत्परतो न चेत्॥ उदात्तात्स्वरितं वा स्याद्यत्र स्यात्स्वरितं वदेत् । (१)॥ १ ॥

आद्यस्य पादत्रयस्यायमर्थः । पदकालीनं यदुदात्तात्परमनुदात्तमक्षरं दृश्यते तत्संहिताकाले स्वरितं कार्यम् । यदि तत्स्मात्परं सन्धिकाले पदकाले वा तत्स्वरितमुदात्तन्न भवति । अथोदाहरणम् । यथा (२)अग्निन्दुवस्यत ।(३ लँय्य्विष्ठठ । अन्त्यस्य पादस्यायमर्थः । न केवलमुदात्तात्परमनुदात्तमक्षरं स्वार्य्यम् किं तर्हि यत्पदकाले स्वरितं तदपि संहितायां स्वार्यमेव न चेत्स्वरितोदात्तात्परम् । यथा ४) देवस्य त्वा । (५)होताऽद्ध्वर्युः ऽ ॥ १ ॥

अथ स्वरितस्यापवादलक्षणान्तरमाह ॥

एकीभूतमुदात्तेन स्यादुदात्तमतः परम् ॥ नीचं

---

(१) उदात्तं स्वरितं तस्मादेवं स्यात्स्वरितं च यत् । इति 'ख' पुस्तकपाठः ॥

(२) ३ । १ ॥

(३) १३ । ५२ ॥

(४) १ । १० ॥

(५) २५ । २८ ॥

स्वार्य्यं यथोक्तं चेदन्न स्यात्स्वरितान्वितम् ॥ २ ॥

एकीभूतमुदात्तेन स्यादुदात्तमित्यर्थः । उक्तलक्षणं स्वरितं वक्ष्यमाणलक्षणमुदात्तप्रचयो वा यदा संहिताकाले उदात्तेन सहैकत्वं गच्छति तदोदात्तमेव भवति । ननु चात्यन्तभिन्नत्वात्स्वराणां न हि हृस्वत्वशिंशिपात्वयोरिवैकत्वं दृश्यतेऽतः कथमुच्यते । उदात्तेनैकीभूतमुदात्तं भवतीत्युच्यते । यत्पदकाले स्वरद्वयस्थाने संहितायामेकस्वरमुच्चार्यते स एकीभावोऽत्र विवक्षितो नान्यः सदा दृश्यतेऽतो न दोषः । उदात्तस्यानुदात्तेन सहैकीभावे उदात्तो भवति । उदाहरणानि यथा(१) प्रार्प्पयतु । (२)व्विव्याधि । स्वरितस्योदात्तेन सहैकीभावे उदाहरणं यथा(३) अद्यूत्येऽवसे । (४)अपामीवाम् । यथोक्तं चेदित्यस्यायमर्थः । एकीभूतं यदुदात्तमुक्तलक्षणमतऽउदात्तात्परमनुदात्तं संहितास्वरं तत्स्वार्यं यथोक्तं चेदिति । न चेत्स्वरितोदात्तमित्यर्थः । ननु यदुदात्तात्परन्नीचमित्यनेनैवात्र स्वरितस्य प्राप्तत्वादिदं न वक्तव्यमुच्यते, पदकालीनं यदुदात्तं ततः परमनुदात्तमक्षरं स्वार्य्यमिति पूर्वमुक्तमिदानीमेकीभूतेनेति लक्षणेन यत्संहितायामुदात्तमापादितं ततः परमनुदात्तं स्वार्य्यमित्युच्यतेऽतो न पुनरुक्तता । उदाहरणं यथा(५) प्रेतं । (६)एहिं । प्रचितस्योदात्तेन सहैकीभावोदाहरणं यथा ७) अश्विभ्योऽश्वपति-

---

(१) १ । १ ॥
(२) ३ । २ ॥
(३) ३४ । २२ ॥
(४) ३४ । २२ ॥
(५) १७ । ४६ ॥
(६) ३ । २७ ॥
(७) १६ । २४ ॥

भ्य: । (१)अमीमदन्तातीतृपन्त । यच्च स्यात्स्वरितान्वितमित्यस्यायमर्थ: । न केवलमेकीभावाद्विहितादुदात्तात्परमनुदात्तमक्षरं स्वार्य्यं किं तर्हि यदनुदात्तं स्वरितेन सहैकीभूतं भवति तदपि
स्वार्य्यं किं तर्हि यदनुदात्तं स्वरितेन सहैकीभूतं भवति तदपि
स्वार्य्यमेव । यथोक्तं चेदित्यनुवर्त्तते तत्रोदाहरणानि यथा(२) स्वाद्योद्याय॑ । (३)गायत्तं छन्दोऽसि । (४)इन्द्राश्विना । ननु स्वरितानुदात्तयोरेकीभावः स्वरितं भवतीत्युक्तिः कउपयोगः । उदात्तस्वरितयोरेकीभावे स्वरितस्योदाहरणे, (५)उपोपेत्यत्रैवास्याप्यनुदात्तत्वादुच्यते । तत्र एकपदगतस्य स्वरितादुपरितनस्योदात्तस्यानुदात्तसञ्ज्ञां वक्ष्यति । तेनास्याप्यनुदात्तत्वादत्रोदाहरणे तु भिन्नपदत्वमतो न विरुद्धमिदमेवाल्पं वैलक्षण्यमालोच्योदाहरणत्रितयमत्र दत्तम् ॥ एकीभूतमुदात्तेन स्यादुदात्तमित्यस्यापवादमाह ॥

**यदुदात्त इकारः स्यादनुदात्तेन संयुतम् ॥ इकारेण तदा स्वार्य्योऽभीन्धतामित्ययं यथा ॥ ३ ॥**

उदात्तो यदिकारः पूर्वः, परेणानुदात्तेनैकीभूतो भवति ह्रस्वेनैवेकारेण तदा स्वरितो भवति संहितायाम् । यदि स्वरितमुदात्तं वाऽतो न भवति, एतद्यावत्स्वरितलक्षणं तावदनुवर्त्तते । अत्रोदाहरणं यथा (६)अभीन्धताम् । एकीभूतमुदात्तेनेत्यस्य तत्परस्य चापवादकं लक्षणान्तरमाह ॥

---

(१) क्रमोदाहरणम् १९ । ३४ ॥

(२) ३५ । ११ ॥

(३) ३८ । ६ ॥

(४) पूर्वोक्तमुदाहरणं ज्ञेयम् ॥

(५) ३ । ३४ ॥ इमान्युदाहरणानि कुत्र चित्संहितायाः कुत्र चित्पदपाठस्य बोध्यानीति ॥

(६) ११ । ६१ ॥

पदकाले य एकार उदात्तः संहितोद्भवः ॥ ओकार-स्वरसंयुक्तोऽयं न च स्वार्य्य एव सः ॥ ४ ॥ अस्यार्थः स्पष्टः । उदाहरणे यथा संहितायाः ॥ (१)अभीन्धताम् । (२)तेऽश्वरसाम् । न पदकालीने इत्यर्थः । अत्रोदाहरणम् । (३)मारुतोऽसि । वेदोऽसि । (४) ॥

स्वरितं पदमध्यस्थमुदात्तेन समन्वितम् ॥ पदकाले न पूर्व्वेण ततः स्वार्य्यन्तु यत्परम् ॥ ५ ॥ स्पष्टार्थः । उदाहरणं यथा(५) मातेव(६)॥ पितेव ॥ अत्र इवकारे विशेषमाह ॥

एकीभूताविकारौ चेदुदात्तस्वरितौ पदे ॥ एकस्मिन्नेव तौ स्वार्य्यौ दीर्घपूर्व्वं तयोः परम् ॥ ६ ॥ स्पष्टार्थः ॥

पदस्य स्वरितस्थाने व्यञ्जनं जायते यदि ॥ सन्धिकाले तदा नीचः स्वार्य्यः स्यात्तत्परः स्थितः ॥ ७ ॥ स्पष्टार्थः ॥ उदाहरणे यथा(७) यदत्त्युप । (८)कत्त्वंस्य ॥

पदकाले यदा नादः स्वरितः स च इष्यते ॥ सन्धि-

(१) ११ । ६१ ॥
(२) २४ । ३७ ॥
(३) १७ । ४५ ॥
(४) २ । २१ ॥
(५) ११ । ६१ ॥
(६) ३ । २४ ॥
(७) ११ । ७४ ॥
(८) २३ । ५७ ॥

काले तदा तस्मात्स्वार्य्यः पूर्वपदे तु यः ॥८॥ स्पष्टार्थः ॥

व्यञ्जनं स्वरितात्पूर्वं पञ्चमेनान्वितं यदि ॥ स्वरितादुत्तरं तस्मात्स्वार्य्यो नादस्त्वनन्तरः ॥ ९ ॥

द्विविधं स्वरितं भवति एकः सन्धिकाले एकस्तु पदकालेऽपि एवं द्विविधादपि स्वरितात्परो यदि संहिताकाले वा पञ्चमव्यञ्जनयोः संयोगो भवति तदा स्वरितमुदात्तं कृत्वा तस्मात्स्वरितात्परतरे नादः स्वार्य्यः । (१)व्यसोमिन्द्रानमन्धसः । (२) यदेनंस्वक्रम । प्रागुत्क्रष्णोऽवौ भवेद्दौ परशाखिनौ । क्वचिदुदात्तस्याप्यनुदात्तसञ्ज्ञामाह ॥

तच्च नीचमिति ज्ञेयं यद्येकस्मिन्पदे भवेत् ॥ प्रचयं स्वरितादूर्ध्वमुपेपेदित्ययं यथा ॥१०॥ नीचात्प्रचयतस्तस्मात्स्वरिता संहिता भवेत् ॥ परेषां यत्तु पूर्वं स्यात्स्वरोच्चं नीचमेव तत् ॥ ११ ॥ अनयोरर्थकार्य्यानन्तरं प्रचयत्वं भवति। उभयत्रोदाहरणं यथा(३) रक्षाणोब्रह्मणस्पते । (४) स नो भुवनस्य पते । (५)योगक्षेमो नः कल्पताम् ॥ उदात्तलक्षणमाह ॥

उदात्तं पदकाले यत्संहितायां तथैव च ॥ तस्मात्पूर्वं तु यत्किञ्चिदनुदात्तं तदुच्यते ॥ १२ ॥

---

(१) २६ । ११ ॥

(२) २० । १३ ॥

(३) ३ । ३० ॥

(४) १८ । ४४ ॥

(५) २२ । २२ ॥ कात्यायनमहर्षिणा यत्स्पष्टतरा कारिका प्रतिपादिता तस्या व्याख्यानं व्याख्यानकर्त्रा जयन्तस्वामिना सुलभत्वान्न कृतेति सुधियो विभावयन्तु ॥

अत्रोदाहरणं यथा(१) अग्निन्दुवस्यत । (२)देवा देवानाम् ॥ तथा सति तस्मादुदात्तत्वमेव भवति न स्वरितानपि प्रचयम् । स्वरितस्यानुदात्तोदाहरणे(३) इन्द्रं देवीः । प्रचयस्यानुदात्तोदाहरणे(४) तिस्रो देवीः । (५)कल्पमानाऽइन्द्रम् । लक्षणान्तरमाह ॥

**यन्नीचं पदकाले तत्संहितायां तथैव च ॥ उक्तं वा नीचहीनं चेत्पिटश्रवणं तद्भवेत् ॥ १३ ॥**

पदकाले यदनुदात्तं तत्संहिताकालेऽपि भवति, यदुदात्तात्परं नीचमित्यादिना रहितं च अत्रोदाहरणे, पिटश्रवणं स्वरितलक्षणचतुष्टयस्य जात्याभिनिहितक्षैप्रप्रश्लिष्टस्य पिटदानवदस्तं कृत्वा-स्वरयितव्यमित्यर्थः ॥

इति जयन्तस्वामिनिर्मितव्याख्यानयुता महर्षिकात्यायनप्रणीता शिक्षा समाप्ता ॥

(१) ३ । १ ॥
(२) २१ । ५२ ॥
(३) १७ । ८५ ॥
(४) ११ । ५४ ॥
(५) १३ । २५ ॥

# अथ पाराशरोक्तक्रमीय चतुर्थी पाराशरी शिक्षाऽऽरभ्यते ॥

अथ शिक्षां प्रवक्ष्यामि पाराशरमतं यथा ॥ यथा देवेषु विश्वात्मा यथा तीर्थेषु पुष्करम् ॥ १ ॥ तथा पाराशरी शिक्षा सर्वशास्त्रेषु गीयते ॥ प्रणवं तु प्रवक्ष्यामि तिस्रो मात्रास्त्रिदैवतम् ॥ २ ॥ त्रिरूपं च त्रिवर्णं च त्रिस्थानं त्रिगुणं तथा ॥ अक्षराशीतिरेकश्च प्रथमा कण्डिका स्मृता ॥ ३ ॥ लक्षणोक्तप्रकारैस्तु (१)इषे त्वेति निदर्शनम् ॥ त्रीणि त्रीणि च चत्वारि दश पञ्चाष्टमं स्मृतम् ॥ ४ ॥ एकादशाक्षरं तद्वदुभयोरपि दृश्यते ॥ सप्तमं पञ्चमं चैव पुनश्चैकादशाक्षरम् ॥ ५ ॥ नवाक्षरं विजानीयाद्वाक्यं चैकादशाक्षरम् ॥ अन्त्यावसानाः षट्चैव पञ्चैतास्त्रिभिरर्द्धकाः ॥ ६ ॥ एका चतुर्थता ज्ञेया शेषा युग्मार्द्धकाः स्मृता ॥ उच्चादुच्चतरं नास्ति नीचान्नीचतरं तथा ॥ ७ ॥ एवं वर्णाः प्रयोक्तव्या(२)इषे त्वेति निदर्शनम् ॥ सप्त त्रीणि चतुष्कं च वसुवर्णाः प्रकीर्त्तिताः ॥ ८ ॥ षट् द्व्यष्टौ च प्रपद्यन्ते द्वितीया कण्डिका स्मृता ॥ प्रथमं क-

---

(१) १ । १ ॥

(२) पूर्वोक्तमुदाहरणं बोध्यम् ॥

द्रसङ्ख्या वै सप्तसङ्ख्या द्वितीयकम् ॥ ९ ॥ निधिसङ्ख्या तृतीयं स्याद्वसुसङ्ख्या चतुर्थकम् ॥ पञ्चमं वेदसङ्ख्या च तृतीया कण्डिका स्मृता ॥ १० ॥ अष्टौ वाक्यं तथा पञ्च द्वितीया च तृतीयका ॥ चत्वारिंशत्तथा सप्त चत्वारिंशत्तथा नव ॥ ११ ॥ अक्षराणां प्रमाणं च (१)व्र-सौर्हौ च विभाषया ॥ चतुस्त्रिंशच्चनवतिरक्षराणां प्रमाणतः ॥ १२ ॥ चतुर्थी कण्डिका प्रोक्ता मुनिः पाराशरोऽब्रवीत् ॥ सप्तमं नवमं चैव अष्टमं तु तथैव च ॥ १३ ॥ एवं वर्णाः प्रयोक्तव्या(२) व्वीतिर्होत्रं निदर्शनम् ॥ उभयोः कण्डिकामध्ये न चोष्ठ्यं विद्यते क्वचित् ॥ १४ ॥ अग्निश्चैव यजुश्चैव अर्द्धौ त्रीणि चतुष्टयम् ॥ दशाक्षराणि पञ्चैव(३) अग्निर्ज्योतिर्न्निदर्शनम् ॥ १५ ॥ सप्ताक्षराणि चत्वारि(४)जमदग्नेरिति स्मृतः ॥ दशाक्षरं च चत्वारि दशाक्षरं द्वादशाक्षरम् ॥ १६ ॥ अन्ते युग्माक्षरं वाक्य(५)माकूत्यै च निदर्शनम् ॥ नवाक्षरं त्रयश्चैव त्रयश्चैव षडक्षरम् ॥ १७ ॥ इति वाक्यानि विद्यन्ते(६) सिन्धु-

(१) १ । १ । २ ॥
(२) २ । ३ ॥
(३) ३ । ९ ॥
(४) ३ । ६२ ॥
(५) ४ । ७ ॥
(६) ५ । १० ॥

सीति निदर्शनम् ॥ (१)युम्मरिधि(२) मत्वं पितरो(३) अयं ते च(४) द्रुडे तथा ॥ १८ ॥ सकारेण विना चैव (५) यो देवेभ्यः पञ्चकण्डिका ॥ अकाराद्या हकारान्ताश्चतुर्विंशतिरक्षराः ॥ १९ ॥ गायत्त्रीसदृशी प्रोक्ता पवित्रा यज्ञमध्यगा ॥ (६)अग्निन्दूतं (७)वसन्ताय कपिञ्जलानां (८)प्रजापतये च द्वये ॥ २० ॥ ऊष्मान्ता प्रथमा शेषा स्वरान्तावर्त्तिका परा ॥ शुद्धा च प्रथमाऽध्यक्षा पीडयाध्यक्षा द्वितीयया ॥२१॥ (९)चिद्‌सि, प्रथमा ज्ञेया (१०)अस्मेभ्योऽथ परा भवेत् ॥ ध्यक्षा ध्यक्षान्तयोः सम्यगुभयोः कण्डिकाद्वयोः ॥२२॥ वकारे केवलो यत्र यत्र रेफोऽप्यधः स्थितः ॥ दन्त्यञ्चोपरि विज्ञेयं(११) यूपव्रस्केति निदर्शनम् ॥ २३ ॥ नानुस्वारं न सँय्योगं विसर्गं नैव दीर्घता ॥ केवलस्तत्र विज्ञेय एकारात्परतो

---

(१) २ । १७ ॥

(२) २ । ३१ ॥

(३) ३ । १४ ॥

(४) ८ । ४३ ॥

(५) ३१ । २० ॥

(६) २२ । १७ ॥

(७) २४ । २० ॥ इमान्युदाहरणानि संहितायां बोध्यानि ॥

(८) २४ । २९ । ३० ॥

(९) ४ । १९ ॥

(१०) ३० । ११ ॥

(११) २५ । २९ ॥

हि यः ॥ २४ ॥ मात्रा सह भवेद्दीर्घं ह्रस्वं मात्रां विना भवेत् ॥ इत्यक्षरं विजानीयात्क्षिप्रं दीर्घं भवेदिति ॥ २५ ॥ क्षिप्रं दीर्घं समाख्यातं अङ्गुल्यामेकमन्तरम् ॥ दीर्घस्यार्द्धं भवेत्क्षिप्रं नास्ति दीर्घस्य दीर्घता ॥ २६ ॥ यथा सङ्ख्या तु दीर्घस्य तथा चोष्मा प्रकीर्तिता ॥ ऊष्मा दीर्घं समत्वं च क्षिप्रं कुर्यात्तदर्द्धकम् ॥ २७ ॥ अनुस्वारस्योपरिष्टात्सँय्योगो दृश्यते यदि ॥ ह्रस्वत्वं विजानीयात्स्वँस्वभागास्येति(१) निदर्शनम् ॥ २८ ॥ अनुस्वारस्योपरिष्टात्संहृतं यत्र दृश्यते ॥ दीर्घं तं तु विजानीयाच्छ्रोता ग्रावाणो(२)ति निदर्शनम् ॥२९॥ अनुस्वारस्तु यो दीर्घोदक्षराच्च भवेत्ततः ॥ स तु ह्रस्वइति प्रोक्तो मन्त्रेष्वेव विभाषया ॥ ३० ॥ अनुस्वारो द्विमात्रः स्याद्दवर्णव्यञ्जनादिषु ॥ दीर्घं तं तु विजानीया (३)द्देवानाꣳ हृदयेभ्य इति निदर्शनम् ॥ ३१ ॥ अनुस्वाराच्च सँय्योगं परतो दृश्यते यदि ॥ ह्रस्वं तं तु विजानीयान्मन्त्रेषु ब्राह्मणेषु च ॥ ३२ ॥ ह्रस्वादग्रे भवेद्दीर्घो दीर्घादग्रे भवेल्लघुः ॥ ३३ ॥ अदीर्घो दीर्घतां याति नास्ति दीर्घस्य दीर्घता ॥ सँय्योगादिपरो नास्ति ह्रस्वो दीर्घस्य दीर्घता ॥ ३४ ॥ सँय्योगादिपरो यत्र

(१) २ । १८ ॥
(२) ६ । २५ ॥
(३) १६ । ४६ ॥

तत्र ह्रस्वं भवेद्ध्रुवम् ॥ अभिनीतं निपातं वा जात्यं वा स्वरितं विदुः ॥ ३५ ॥ वाक्यकाले भवत्येव पाठकाले यथा क्रमम् ॥ षडंगुलं तु जात्यस्य ह्रस्वस्यानुपथस्य च ॥ ३६ ॥ चतुर्थभागमात्रं स्याद्भूयस्तेनैव वर्त्तयेत् ॥ निपातं चाभिनीतं च शेषं नीचतरं क्रमात् ॥ ३७ ॥ त्रिस्वरं तं विजानीया(१) द्राज्यनेति निदर्शनम् ॥ नीचान्नीचतरं चैव पुनर्न्नीचं प्रयोजयेत् ॥ ३८ ॥ एवं वर्णाः प्रयोक्तव्या(२) ओजोनेति निदर्शनम् ॥ नादसञ्ज्ञा भवन्तीमे ङञणनमाश्चानुनासिकाः ॥ ३९ ॥ भवन्ति प्रत्यये येषामन्तस्थाः संयुतास्तथा ॥ हकारं चैव वर्गाणां तृतीयं च चतुर्थकम् ॥ ४० ॥ अथ दीर्घविसर्गान्ता अष्टौ ते नादसञ्ज्ञकाः ॥ नमौ गुरू नादसञ्ज्ञौ लघू चैवानुनासिकौ ॥ ४१ ॥ सँय्योगौ च विसर्गौ च नादावेतौ प्रकीर्त्तितौ ॥ पञ्चमा यत्र दृश्यन्ते पञ्चमे परतः स्थिते ॥ ४२ ॥ नासिक्यं तत्र कुर्वीत मात्रैकत्वेन संशयः ॥ सँय्युक्ताग्रे विरामस्तु विवृत्तिस्तु विशेषतः ॥ ४३ ॥ सँय्युक्ताग्रे ह्यघोषस्तु नासिकं तु विधीयते ॥ प्रत्यये च स्थिता ये च अघोषाः पञ्चमाः स्वराः ॥ ४४ ॥ पदान्ते सँय्युताह्रस्वाः पञ्चैवैतेऽनुनासिकाः ॥ विवृत्तौ चावसाने च ऋगर्द्धे च तथा परे ॥ ४५ ॥ पदेच पादसंस्थाने नासि-

(१) २।९॥
(२) २८।५॥

कं तु विधीयते ॥ हकारो रेफसँय्युक्तो नादो भवति नित्यश: ॥ ४६ ॥ द्वितयेन पदाऽऽक्रान्तो न तु नाद: कदा चन ॥ आद्यन्तस्थौ सकारौ द्वौ हकारो यत्र सध्यग: ॥ ४७ ॥ उभौ नादौ प्रयुज्येतां(१) अग्ने व्रतपते निदर्शनम् ॥ नकारस्य मकारस्य अनुस्वारो यदा भवेत् ॥ ४८ ॥ तदाऽनुनासिके विद्यादुभयोर्ह्रस्वदीर्घयो: ॥ नकारस्य मकारस्य अन्तस्थास्व समीपगा: ॥ ४९ ॥ नासिको नावमन्तव्यस्तत्र नाद: प्रकीर्त्तित: ॥ तवर्गान्ते पवर्गान्ते व्यञ्जनान्ते पदे परे ॥ ५० ॥ तत्र नादं प्रकर्त्तव्यं नान्तिमं त्विप्रकीर्त्तितम् ॥ पूर्वत: परतो वाऽपि हकारो यत्र दृश्यते ॥ ५१ ॥ तत्र नादो भवत्येव न विकल्प: कदा च न ॥ नकारात्परतो यत्र मकारात्परतस्तथा ॥ ५२ ॥ हकारो यत्र दृश्येत तत्र नादो भवेद्ध्रुवम् ॥ नमौ गुरू यत्र दृश्येते अघोषा: परत: स्थिता: ॥ ५३ ॥ नादं कुर्वीत यत्नेन तत्र घोषबलं न हि ॥ एकाक्षरं नकारस्य चोभयो: स्वरयोर्द्वयो: ॥ ५४ ॥ अर्द्धचन्द्रं तदुपरि ह्यघोषा: पुरत: स्थिता: ॥ पञ्चमं चार्द्धचन्द्रं च ऊष्मान्तस्वरयोर्द्वयो: ॥ ५५ ॥ नासिकं तु भवत्येव(२) नॄँ:ऽपाहीति निदर्शनम् ॥ वि-

(१) १ । ६ ॥ इमान्युदाहरणानि संहितापाठस्थानि बोध्यानीति ॥
(२) १३ । ५२ ॥

ठं॰श्रुतिर्घोषास्ते गजडदबा घझढधभा ङञणनमा य-
रलवहाश्चेति ॥ ५६ ॥ त्रयोदशावोषास्ते कचटतपाश्च
खछठथफाः शषसाश्चेति । मुखनासिकाभ्यामुच्चार्य-
माणोऽनुनासिकः ॥ ५७ ॥ जकारौ द्वौ मकारश्च रे-
फस्तदुपरि स्थितः॥ अशरीरं यमं विद्या(१)त्तस्मांज्ज्मीर्-
ति निदर्शनम् ॥ ५८ ॥ शून्यालये पिशाचोऽपि गर्ज्ज-
ते न च दृश्यते ॥ एवं वर्णाः प्रयोक्तव्या(२) उपज्ज्म-
न्निति निदर्शनम् ॥ ५९ ॥ एकाक्षरं वकारस्य निपा-
तस्थो यदा भवेत् ॥ संहितायां लघुर्ज्ञेतः पदकाले
गुरुर्भवेत् ॥ ६० ॥ वकारस्त्रिविधः प्रोक्तो गुरुर्लघुर्लघू-
तरः ॥ आदौ गुरुर्लघुर्मध्ये पदान्ते तु लघूतरः ॥
६१ ॥ पदान्ते पदमध्ये च वकारो दृश्यते यदा ॥ ल-
घुरेव समन्तव्यो ह्यन्यत्रापि लघूतरः॥ ६२॥ औकारा-
न्ते पदे पूर्वे अकारे परतः स्थिते ॥ लघूतरं विजानी-
या(३) दग्नावग्निश्चरेति निदर्शनम् ॥ ६३ ॥ यथा
पुत्रवती स्त्री हाचुम्बतीति पुनः पुनः ॥ एवं वर्णाः प्रयो-
क्तव्या(४) युञ्जानऽइति निदर्शनम् ॥ ६४ ॥ मूत्रं कु-
र्व्वीत वडवा योनिं करोति यादृशीम् ॥ तन्मुखं कु-

(१) १ । २९ ॥
(२) १७ । ५ ॥
(३) ५ । ४ ॥
(४) ११ । १ ॥

रुते प्राज्ञः(१) सदुन्दुभे निदर्शनम् ॥ ६५ ॥ उकारान्ते उकारे च दृश्यते चोभयोर्यदि ॥ द्विरौष्ठ्यं तु विजानीया(२) द्भूर्भुवः स्वर्निदर्शनम् ॥ ६६ ॥ एकपद्यो भवेद्यस्तु सकृदौष्ठ्यं तदुच्यते ॥ द्विस्त्रिभिश्च चतुष्कं च चतुरौष्ठ्यं ततः परम् ॥ ६७ ॥ यथा मर्कटयोर्युद्धं कुर्वन्मुखेन धावति ॥ एवं वर्णाः प्रयोक्तव्याः किकिदीवेति निदर्शनम् ॥ ६८ ॥ कुक्कुटः कामलुब्धोऽपि ककारद्वयमुच्चरेत् ॥ एवं वर्णाः प्रयोक्तव्याः(३) कुक्कुटोऽसि निदर्शनम् ॥ ६९ ॥ चतुर्दशाक्षरं वाक्यं पुनश्चैकादशाक्षरम् ॥ पुनर्द्दशाक्षरं वाक्यमष्टाक्षरमतः परम् ॥ ७० ॥ लक्षणैर्वा विहीनं तु भुक्तमव्यञ्जनं तथा ॥ तच्छब्दं कुरुते प्राज्ञः(४) सिंह्यसि निदर्शनम् ॥ ७१ ॥ हस्तहीनं तु योऽधीते वेदं वेदविदो विदुः ॥ तल्लक्षणविहीनस्तु भुक्तमव्यञ्जनं यथा ॥ ७२ ॥ एवं चतुष्टयं वाक्यं(५) श्रीश्च तेति निदर्शनम् ॥ वसुसङ्ख्याक्षरं वाक्यं त्रिपदा वा चतुष्पदा ॥ ७३ ॥ सप्ताक्षरं तु गायत्री(६) अग्निन्दूतं निदर्शनम् ॥ उभौ सप्ताक्षरं

(१) २२ । ५५ ॥
(२) ३ । ५ ॥
(३) १ । १६ ॥
(४) ५ । १० ॥
(५) ३१ । २२ ॥
(६) २२ । १७ ॥

वाक्यं पुनश्चैव नवाक्षरम् ॥ ७४ ॥ अष्टाक्षरं विजानीयाद्य(१) त्सुरूपेणेति निदर्शनम् ॥ अष्टाक्षरं चतुष्पादं(२) तदेवादि ऋचं त्रयम् ॥ ७५ ॥ अन्ते पूर्वा ऋचः सम्यक् स्वाहाकारं पृथक्पृथक् ॥ तदेव लक्षणं सम्यक् पाराशरमतं यथा ॥ ७६ ॥ याज्ञवल्की तु वासिष्ठी शिक्षा कात्यायनी तथा ॥ पाराशरी गौतमी तु माण्डव्यामोघनन्दिनी ॥७७॥ पाणिन्या सर्ववेदेषु सर्वशास्त्रेषु गीयते ॥ वाजसनेयशाखायां तत्र माध्यन्दिनी स्मृता ॥ ७८ ॥ एकादशाक्षरं वाक्यं द्वितीयं च नवाक्षरम् ॥ रुद्रसङ्ख्यं तृतीयं स्यान्निधिसङ्ख्यं चतुर्थकम् ॥ ७९ ॥ चत्वारिंशच्चाक्षराणां वाक्यं स्यात्तु चतुष्टयम् ॥ एवं वर्णाः प्रयोक्तव्या(३) एष वस्तोमेति निदर्शनम् ॥ ८० ॥ आद्यन्तह्रस्वयोर्मध्ये वकारो यत्र दृश्यते ॥ स तु ह्रस्वइति प्रोक्तोऽ(४)अभि युधेयेति निदर्शनम् ॥ ८१ ॥ अकारात्परतो यस्य नैव दीर्घं प्रयुज्यते ॥ अभि विध्येति विज्ञेयो मन्त्रब्राह्मणयोर्द्वयोः ॥ ८२ ॥ (५)वनेषु व्यन्तरिक्षं च, ह्यष्टौ व्यख्यत्तथैव च

(१) ३१ । १४ ॥
(२) ३२ । १ ॥
(३) ३४ । ४७ ॥
(४) ३४ । २३ ॥
(५) ४ । ३१ ॥

(१) ॥ नामग्रहणकालेषु गुरुरेव न संशयः ॥ ८३ ॥ पूर्व्वा तु कण्डिका दृष्टा अपराभिस्तु सँय्युता ॥ तदेव नामग्रहणं न विकल्पः कदा चन ॥ ८४ ॥ पूर्व्वा विद्वा परा चाथ कण्डिका यत्र दृश्यते ॥ चापल्लानीति सा ज्ञेया(२) आच्छच्छन्दो निदर्शनम् ॥ ८५ ॥ यथा भारभराक्रान्तो निश्वसेल्लघुचेतसः ॥ एवं वर्णाः प्रयोक्तव्या(३) होता यक्षन्निदर्शनम् ॥ ८६ ॥ वाक्यौ द्वौ च समुद्भूतौ अक्षरा ऊनविंशतिः ॥ त्रयोविꣳशतिस्त्वाक्षराणां होता मित्रा पृथिव्यया ॥ ८७ ॥ हꣳसः ऽ शुचिष(४) चैतद्द्वादशाक्षरसञ्ज्ञकः ॥ ऊनाशीतिश्चाक्षराणां अथैताँश्च प्रकीर्त्तिताः ॥ ८८ ॥ अकारादीनि वाक्यानि द्वादशैतानि सङ्ख्यया ॥ द्वादशाक्षरं प्रथमं पञ्चमं चेति सप्त वै ॥ ८९ ॥ षडक्षरं ततो वाक्यं पुनर्द्वादशकं स्मृतम् ॥ एकादशाक्षरं चैव अन्ते च द्वादशाक्षरम् ॥ ९० ॥ एवं वर्णाः प्रयोक्तव्या(५) अथैतानि निदर्शनम् ॥ तिस्रोऽअद्यौ(६) अभि त्यन्त्व तिस्रो

(१) ३४ । २४ ॥

(२) १५ । ५ ॥ इमान्युदाहरणान्यार्ष्याः संहितायां ज्ञेयानीति ॥

(३) २८ । १ ॥

(४) १० । २४ ॥

(५) २९ । २२ ॥

(६) ४ । २५ ॥

अद्वी(१) प्रजापतिः ॥ ६१ ॥ पुनन्तु मेति चत्वारि(२) व्वायुः पञ्च(३) ततः परम् ॥ (४)अनाधृष्टाऽव पञ्चैव (५)एषोऽस्यर्द्ध चतुष्टयम् ॥ ६२ ॥ सँव्वत्सरोऽसि(६) चत्वारि(७) द्यौः शान्तिश्चार्द्धयोर्द्वयोः ॥ क्वचित्स्वाहा पृथक्कुर्य्यात्क्वचिद्युक्तं तु कारयेत् ॥ ६३ ॥ क्वचिच्चादौ विजानीयात्क्वचिच्चान्ते विधीयते ॥ (८)पुनन्तु मा पितरो(९) व्वायुरनिलं(१०) प्रजापतये त्वा ॥ ६४ ॥ वाक्यकालेऽवसाने च स्वाहान्ते चाहुतिं क्षिपेत् ॥ मन्त्रभागं पृथक्कुर्य्यात्स्वाहाकारं पृथक् पृथक् ॥ ६५ ॥ स्वाहादौ च भवेद्वाक्यं(११) अग्निन्दूतं मनस्तथा ॥ अन्ते चादौ पुनश्चान्ते(१२) काय स्वाहेति दर्शनम् ॥ ६६ ॥

---

(१) २२ । ५ ॥

(२) १९ । ३७ ॥

(३) १० । ३१ ॥ अत्र सर्वानुक्रमसूत्रभाष्यकृतानन्तदेवयाज्ञिकेन पञ्च यजूंषि स्वीकृतानि ॥

(४) ३७ । १२ ॥

(५) २० । २३ ॥

(६) २७ । ४५ ॥

(७) ३६ । १७ ॥

(८) १९ । ३७ ॥

(९) ४० । २५ ॥

(१०) २२ । ४ ॥

(११) २२ । १७ ॥

(१२) २२ । २० ॥

मकारादौ भवेद्वाक्यं(१) अस्मिन्मदसं प्रकाश्यते ॥ आ-
विर्म्मर्य्या(२) अकारादौ स्वरान्तं प्रथमान्तरम् ॥ ६७॥
रससंङ्ख्या भवेद्वाक्यं वेदवाणौ पुनः पुनः ॥ युग्मवा-
णान्तयोः सप्त अन्ते चैव चतुर्द्दश ॥ ६८ ॥ पञ्चाशतं च
वर्णानां अक्षराणां प्रमाणतः ॥ इदमित्येव विज्ञेयं
वाक्यं तस्माद्भवेन्न च ॥ ६९ ॥ (३)अब्भिरसि ॥ (४)
अग्ने तमद्य ॥ (५)सहस्रस्य प्रमा ॥ (६) अग्नि-
र्द्देवता ॥ (७)इयमुपरि ॥ (८)मखस्य शिरः॥ (९)
अश्वस्य त्वा ॥ (१०)प्रथमा वाम् ॥ (११)अन्तरा मि-
त्रावरुणा ॥(१२)होता यक्षदग्निᳪस्वाहा ॥(१३)स्वा-
हा यज्ञम् ॥(१४)बर्हिरुर्सम्मदाः । एकाक्षरं पदं वा-

(१) २ । २ ॥
(२) १० । ९ ॥
(३) ११ । १० ॥
(४) १५ । ४४ ॥
(५) १५ । ६५ ॥
(६) १४ । २० ॥
(७) १३ । ५८ ॥
(८) ३७ । ७ ॥
(९) ३७ । ८ ॥
(१०) २९ । ७ ॥
(११) २९ । ६ ॥
(१२) २१ । ४० ॥
(१३) ४ । ५ ॥
(१४) २१ । ३३ ॥

क्यं न चार्द्धायुग्मयोरपि ॥ मध्ये चैकाक्षरं वाक्यं द्वे द्वे चार्द्धावसानयोः ॥ १०० ॥ एवं वर्णाः प्रयोक्तव्या लोकतस्तु प्रकीर्त्तिताः ॥ विभक्त्यन्तं विजानीयाद्गुरुतः शास्त्रतोऽपि वा ॥ १०१ ॥ लोपागमविकाराभ्यां वाक्यानामेष निर्णयः ॥ द्वादशैतानि वाक्यानि द्वादशैतानि शान्तिके ॥ १०२ ॥ देवादीनां भवन्त्येते द्वादशैतानि सङ्ख्यया ॥ छाया (१) छिद्रा (२) तथा छन्द (३) श्छकारा लघुसङ्ख्यया ॥ १०३ ॥ ह्रस्वो वा यदि वा दीर्घः शेषा द्वित्वे प्रतिष्ठिताः ॥ दीर्घादग्रे छकारोऽपि ह्रस्वादग्रे तथैव च ॥ १०४ ॥ द्वित्वाक्षरं विजानीयादिति शास्त्रविधानतः ॥ दीर्घादग्रे तु यो दीर्घो (४) गिरिष्ठा (५) वर्म्मणा तथा ॥ १०५ ॥ द्वित्वाक्षरं विजानीयाच्छादयामि (६) निदर्शनम् ॥ बकारस्य भकाराभ्यां छकारस्य चकारयोः ॥ १०६ ॥ धकारस्य दकाराभ्यां थकारस्य मकारयोः ॥ कवर्गस्य चवर्गस्य टवर्गस्य पवर्गयोः ॥ १०७ ॥ द्वित्त्वं चैव यमं चैव भवत्येव न संशयः ॥ ओष्ठ्यं चैव वकारस्य मकारेण सहायवा-

(१) २५ । १३ ॥
(२) २५ । ४३ ॥
(३) ३४ । ४९ ॥
(४) १६ । ४ ॥
(५) १७ । ४९ ॥
(६) अत्र पूर्वोक्तोदाहरणं बोध्यम् ॥

त् ॥ १०८ ॥ ॥ तम्बधान(१) तथा चाम्बि(२) सँय्योगो-ऽप्यतिदुर्लभः ॥ तँव्वश्चैव(३) घृतँव्वश्च(४) सँय्योगोऽत्यन्तदुर्लभः ॥ १०९ ॥ अनुस्वारं पृथक्कुर्य्यादसंप्राज्ञविचक्षणाः ॥ वकारस्य यकारस्य मध्ये बिन्दुः प्रतिष्ठितः ॥ ११० ॥ अन्त्यबिन्दुं विना ये च शेषान्तस्थाः प्रकीर्त्तिताः ॥ शृङ्गवद्बालवत्सस्य कुमार्य्यास्तनयुग्मवत् ॥ १११ ॥ नेत्रवत्कृष्णसर्पस्य स विसर्ग इति स्मृतः ॥ विस्फुलिङ्गा इव स्फोटा वेदस्याङ्गानि सन्ति हि ॥ ११२ ॥ अशुद्धपठनाच्चैव नैव मोक्षं प्रपेदिरे ॥ तस्मात्सर्वप्रयत्नेन शुद्धपाठी भवेद्द्विजः ॥ ११३ ॥ अन्यथा निरयं यान्ति कुम्भीपाकं च दारुणम् ॥ सप्ताक्षरं च चत्वारि पुनरष्टाक्षरं तथा ॥ ११४(५) ऋचँव्वाचमिति ज्ञेया अन्ते चैव चतुष्टयम् ॥ एकादशाक्षरं वाक्यं पुनरेव चतुष्टयम् ॥ ११५ ॥ त्रयोदशं द्वादशं च(६) यन्म इति निदर्शनम् ॥ व्याहृत्या सह गायत्री तिस्र अर्द्धी भवेदिह ॥ ११६ ॥ प्रणवाश्चैव चत्वारो भवन्त्येव न संशयः ॥ ऋचँव्वाचं

(१) २२ । ४ ॥
(२) २३ । १० ॥
(३) २६ । ११ ॥
(४) १२ । ७६ ॥
(५) ३६ । १ ॥
(६) ३६ । २ ॥ एतान्युदाहरणानि संहिताकण्डिकाङ्केन बोध्यानीति वेदाङ्कपाठिभिरिति ॥

त्रयश्चैव प्रारम्भे च चतुष्टयम् ॥११७॥ इति पाराशरेणो-क्तं प्रमाणं वेदसम्मितम् ॥ पूर्वा चतुर्द्दशास्तिस्रो द्वादौ युग्मार्द्धषड्दश ॥ ११८ ॥ एवं वर्णाः प्रयोक्तव्या(१) अ-ग्निश्चेति विनिर्द्दिशेत् ॥ पूर्व्वमष्टाक्षरं वाक्यं परतो द्वादशाक्षरम् ॥ ११९ ॥ द्विपादान् वा विनिश्चित्य(२) इन्द्रो विश्वस्य राजति ॥ (३)अहानि शं त्रयश्चैव त्र-यश्चैव तथा परे ॥ १२० ॥ अन्त्यावसाना दुर्भिक्ष शेषा द्वे द्वे प्रकीर्त्तिताः ॥ कण्डिकापञ्च युग्मार्द्धं च-तुः पञ्च नवं नवम् ॥ १२१ ॥ पुनश्चतुस्त्रयश्चैव त्रय-श्चैव पुनः पुनः ॥ शेषा युग्मार्द्धकं विद्याद्देवस्य त्वा(४) निदर्शनम् ॥ १२२ ॥ एवं ज्ञात्वा पठेद्यस्तु स गच्छेद्वै-ष्णवं पदम् ॥ त्रयश्चैव त्रयश्चैव त्रयश्चैव चतुष्टयम् ॥ १२३ ॥ षडर्द्धं च त्रयश्चैव द्विपञ्चान्त्यावसानयोः ॥ शेषाश्च कण्डिकाः सर्वा द्वे द्वे अर्द्धे प्रकीर्त्तिताः ॥ १२४ ॥ न मे प्रियो द्विजः कश्चिच्छ्रद्धावानतिथिप्रि-यः ॥ इति पाराशरेणोक्तं विप्राणां हितकाम्यया ॥ १२५ ॥ शिष्याणामुपकाराय परलोकहिताय वै ॥(५)

---

(१) २६ । १ ॥
(२) ३६ । ७ ॥
(३) ३६ । ११ ॥
(४) १ । १० ॥
(५) ३९ । १ ॥

स्वाहां प्राणेभ्यस्त्रयश्च(१) लोमभ्यश्च त्रयस्तथा ॥ १२६ ॥ शेषाश्च कण्डिकाः सर्वा द्वे द्वे अर्द्धे प्रकीर्त्तिताः ॥ अष्टौ वाक्यं तयोः सप्त पञ्च द्वादश वै पुनः ॥ १२७ ॥ चतुर्थं दश एका च अष्टादश ततः परम् ॥ नवमं चाष्टमं चैव सप्तमं च ततः परम् ॥ १२८ ॥ इति वाक्यविधिं सम्यक्(२) प्राणेभ्यश्च निदर्शनम् ॥ (३) वायुः पञ्च भवेदर्द्धा अर्द्धे द्वे च हिरण्मये ॥ १२९ ॥ (४) ईशा वास्यं तु मन्त्रस्य शेषा द्वे द्वे प्रकीर्त्तिताः ॥ अष्टादशाक्षरं वाक्यं नाकपृष्ठे तु पञ्च वै ॥ १३० ॥ सप्तदशाक्षरं चैतद्वैश्वदेवं विनिर्द्दिशेत् ॥ सप्तदशाक्षरं वाक्यं पुनरष्टादशाक्षरम् ॥ १३१ ॥ अष्टादशाक्षरं सम्यगुभयोः षोडशाक्षरम् ॥ एवं वर्णाः प्रयोक्तव्या(५) ग्रामण्यौ तु सुपञ्चयोः ॥ १३२ ॥ उभौ सप्ताक्षरं वाक्यमष्टाक्षरमतः परम् ॥ नवाक्षरं विजानीया(६) द्वाभिषुं चेति निदर्शनम् ॥ १३३ ॥ एकैकस्य नमस्काराः शङ्कराय महात्मने ॥ स्वर्भ्यस्वादौ च वर्णान्ते वाक्य-

(१) ३९ । १० ॥
(२) ३९ । १ ॥
(३) ४० । १५ ॥
(४) ४० । १ ॥
(५) १५ । १५ । १६ । १७ । १८ । १९ ॥
(६) १७ । १ ॥

काले भवेदिति ॥ १३४ ॥ नमकं चमकं चैव पुरुषसू-क्तं तु नित्यशः ॥ प्रविश्यते महादेवो गृहे गृहपतिर्य्य-था ॥ १३५ ॥ रुद्राध्यायः स्वरेणैव कण्डिकादशकेन तु ॥ ततो वाक्यं प्रकुर्वीत ऋचान्ते षोडशाक्षरम् ॥ १३६ ॥ अष्टादशाक्षरं वाक्यं पुनः षोडशकैः शुभैः ॥ एवं वर्णाः प्रयोक्तव्या अश्मन्नूर्ज्जं(१) विनिर्द्दिशेत् ॥ १३७ ॥ पुँश्चलूं(२) पुँश्चली चेति सञ्ज्ञया यत्र यत्र च ॥ (३) दृङ्क्ष्णवंश्च विज्ञेया अर्द्धचन्द्रस्तु षट्सु च ॥१३८॥ मकाराग्रे छकारादावनुस्वारेण संयुतौ॥ तन्द्रञ्छन्दो-(४)विजानीया(५) दम्नि.' पशुन्निर्दर्शनम् ॥ १३९ ॥ तकारान्ते पदे पूर्व्वे शकारे परतः स्थिते ॥ चणिकं तं विजानीया(६) तच्छकेयं निदर्शनम् ॥ १४० ॥ पा-ठकाले भवेद्ध्रस्वो वाक्यकाले तु दीर्घता ॥ एवं वर्णाः प्रयोक्तव्या(७) नक्षत्रेभ्यः स्वाहेति निदर्शनम् ॥१४१॥

---

(१) ३० । २७ ॥
(२) ३० । २२ ॥
(३) १५ ॥
(४) १६ । ५ ॥
(५) २२ । १४ ॥
(६) १ । ५ ॥
(७) २२ । २८ ॥

(१)धर्म्म च स्त्यस्तथो(२) पप्राग्ात्समुद्द्रस्य त्वेति च (३) ॥ स्वरितो वाक्यकालेऽपि उदात्तं नोपपद्यते ॥ १४२ ॥ एह्यूषु(४) ऋजीते(५) अभित्वां(६) गोमदूषुणां सत्या ॥ स्वरितो वाक्यकाले तु न चोर्ध्वं नीयते करम् ॥ १४३ ॥ सद्यो जातः(७) समुद्द्रोऽसि(८) प्रथमार्द्धस्य तु द्वया ॥ एवं वर्णाः प्रयोक्तव्या गुरुरेव न संशयः ॥ १४४ ॥ अन्तस्थैः सह सँय्योगे स्पर्शो वा दृश्यते क्वचित् ॥ ऋवर्णेन तदा ग्रस्तो न लघुर्न्न लघूतरः ॥१४५॥ ऋकारो गुरुतां यातः सँय्युक्तो हरयैः सह ॥ ऋवर्णे न परस्यैव(९)व्यंद्या इति निदर्शनम् ॥ १४६ ॥(१०)क्रतून्(११)जहि शत्रून्(१२) वनस्पतीन् (१३)परिधींश्चेति॥ चतुर्वेदोऽपि यो विप्रो यावद्ब्रह्म

(१) ११ । ३० ॥
(२) २९ । २३ ॥
(३) १७ । ४ ॥
(४) २६ । १३ ॥
(५) २९ । ४९ ॥
(६) २० । २१ ॥
(७) २९ । ३६ ॥
(८) ५ । ३३ ॥
(९) ३० । १८ ॥
(१०) १९ । ४० ॥
(११) ७ । ३७ ॥
(१२) १९ । ५३ ॥ इमान्युदाहरणान्यार्ष्याः संहिताया बोध्यानीति ॥

न विन्दति॥१४७॥ तावद्भ्रमति संसारे ह्यसारे दुरतिक्रमे॥ पठित्वा चतुरो वेदान्सर्वशास्त्रमनेकधा ॥ १४८॥ यो हि ब्रह्म न जानाति मूर्खः पाठे शठो यथा॥ ज्ञात्वैव ब्रह्मसायुज्यं लभते नात्र संशयः ॥१४६॥ यथा खरश्चन्दनभारवाही भारस्य वेत्ता न तु चन्दनस्य॥ तथा हि विप्राः स्मृतिवेदपूर्णा ज्ञानेन हीनाः खरवद्वहन्ति॥ १५०॥ आहारनिद्राभयमैथुनं च समानमेतत्पशुभिर्नराणाम् ॥ ज्ञानं नराणामधिको विशेषो ज्ञानेन हीनाः पशुभिः समानाः॥ १५१ ॥ प्रातर्मूत्रपुरीषाभ्यां मध्याह्ने क्षुत्पिपासया ॥ तृप्ताः कामेन बध्यन्ते जन्तवो निशि तद्दशाः॥ १५२॥ नादबिन्दुसहस्राणि तथा कोटिशतानि च॥ सर्वाता रश्मयो यान्ति यत्र वेदो निरामयः॥ १५३॥ गवामनेकवर्णानां क्षीरं स्यादेकवर्णकम्॥ क्षीरं यथा तथा ज्ञानं लिङ्गनस्य गवां यथा॥ १५४॥ द्वे पदे चैव मोक्षाय न ममेति ममेति च॥ स ममेति क्षिणन्ती च शत्रूँ२॥ रनपव्ययन्तः॥ १५५॥ अरञ्जनाः पञ्च अर्द्धी अर्द्ध मात्रा भवन्ति च॥ पूषा मित्रो वसुश्चैव अञ्जनाश्च प्रकीर्त्तिताः॥ १५६॥ पूषा मित्रो वसून्पञ्चानुरञ्जनाः प्रकीर्त्तिताः॥ एकार्द्धमात्रिकाश्चैव पञ्चैते चानुरञ्जनाः॥ १५७॥ वच्ययच्च्यकच्च्यभच्च्यमाणा इत्येवमाद-

यः ॥ इमे वर्णास्तु तालव्याः परा मूर्द्धन्यजाः स्मृताः ॥ १५८ ॥ एवं ज्ञात्वा पठेद्यस्तु स गच्छेद्वैष्णवं पदम् ॥ न मे प्रियो द्विजः कश्चिच्छुद्धपाठी त्वतिप्रियः ॥ १५९ ॥ इति पाराशरेणोक्तं विप्राणां हितकाम्यया ॥ शिष्याणामुपकाराय परलोकहिताय च ॥ १६० ॥

इति श्रीपाराशरीशिक्षा समाप्ता ॥

---

# अथ माण्डव्यमहर्षिप्रणीता शिक्षाऽऽरभ्यते ॥

अथातः संप्रवक्ष्यामि शिष्याणां हितकाम्यया ॥ माण्डव्येन यथा प्रोक्ता ओष्ठ्यसङ्ख्या समाहृता ॥ १ ॥ (१)इषे त्वा, बर्हीः । प्रथमाक्षरम् ॥ (२)बाहुभ्यां, तिस्रः ॥ (३)पृथुबुध्नः ॥ (४)बृहद्ग्रावासि ॥ (५)ब्रह्मवनिं त्वा ॥ (६)इन्द्रस्य बाहुरसि, ॥ (७)बधान देव तिस्रः ॥ (८)ऊर्ज्जे त्वा दब्धेन ॥ पञ्चदश ॥ १ ॥ (९) कृष्णोऽसि बर्हिषे त्वा ॥ बर्हिरसि स्रुग्भ्यः ॥(१०)बृहन्तमध्वरे ॥(११)सवितुर्बाहू स्थः ॥(१२)बाहुभ्याम् ॥ (१३)

---

(१) १ । १ ॥
(२) १ । १० ॥
(३) १ । १९ ॥
(४) १ । १५ ॥
(५) १ । १७ ॥
(६) १ । २३ ॥
(७) १ । २४ ॥
(८) १ । २५ ॥
(९) २ । १६ ॥
(१०) २ । ४ ॥
(११) २ । ५ ॥
(१२) २ । ११ ॥
(१३) २ । १२ ॥

बृहस्पतये ब्रह्मणे ॥ (१) बृहस्पतिर्यज्ञमिमम् ॥ (२) बर्हिषि मादयध्वम् ॥ (३) अग्ने दब्धायो ॥ (४) सम्बर्हिस्तयोदश ॥ २ ॥ समिधाग्निं, घृतैर्बोधयत ॥ बृहच्छोच ॥ (५) अदब्धासः ॥ (६) स नो बोधि ॥ (७) ब्रह्मद्वयम् ॥ (८) गृहा मा बिभीत ॥ (९) ऊर्जम्बिभ्रतं द्वयम् ॥ (१०) सौमनसो बभ्रुः ॥ (११) मनस्तनूषु बिभ्रतः ॥ (१२) सह स्वस्राम्बिकया ॥ (१३) देवन्त्र्यम्बकम् ॥ (१४) उर्वारुकमिव बन्धनात्सप्तदश ॥ ३ ॥ (१५) एदं, मापो देवीर्बृहतीः ॥ (१६) बृहस्पतये ॥ (१७)

---

(१) २ । १३ ॥
(२) २ । १८ ॥
(३) २ । २० ॥
(४) २ । २२ ॥
(५) ३ । १ ॥
(६) ३ । ३ ॥
(७) ३ । १८ ॥
(८) ३ । २६ ॥
(९) ३ । ३० ॥
(१०) ३ । ४१ ॥
(११) ३ । ५७ ॥
(१२) ३ । ५८ ॥
(१३) त्र्यम्बकद्वयं बन्धनाद्द्वयं चै ३ । ६० । कस्मिन्नुदाहरणे बोध्यम् ॥
(१४) इदमुदाहरणद्वयमेकस्मिन्मन्त्रे ४ । ७ । बोध्यम् ॥
(१५) ४ । ७ ॥
(१६) ४ । ७ ॥
(१७) ४ । ११ ॥

ब्रह्माग्निः ॥ (१)प्रबुधे ॥ (२)अदब्धस्तनूपाः ॥ (३) बध्नीताम् ॥ (४)बृहस्पतिष्ट्वा ॥ (५)अस्मै ते बन्धुः ॥ (६)चतस्रो ब्रूतात् ॥ (७)अङ्घारे बम्भारे ॥ (८) ब्रह्मद्वयम् ॥ पञ्चदश ॥ ४ ॥ (९)अग्नेस्तनू, ब्र्हिर्द्वौ यज्ञात् ॥ (१०) ब्रह्मत्रयं(११) विप्रस्य बृहतो (१२) बाहुभ्यां बृहन्नसि बृहद्ग्रावा बृहतीमिन्द्राय॥(१३)यस्मै सबन्धुर्य्यमसबन्धुः । (१४)बम्भारिरसि । (१५)बुघ्न्यो।(१६)घृतयोने पिब द्वौ षोडश ॥५॥ देवस्य त्वा

---

(१) ४ । १४ ॥
(२) ४ । १५ ॥
(३) ४ । १९ ॥
(४) ४ । २१ ॥
(५) ४ । २२ ॥
(६) ४ । २४ ॥
(७) ४ । ३७ ॥
(८) ४ । ३३ ॥
(९) ५ । ११ ॥
(१०) ५ । १२ ॥
(११) ५ । ११ ॥ अस्मिन्मन्त्रे उदाहरणत्रयं बोध्यम् ॥
(१२) ५ । २२ ॥ उदाहरणद्वयमेकस्मिन्मन्त्रे बोध्यम् ॥
(१३) ५ । २३ ॥
(१४) ५ । ३२ ॥
(१५) ५ । ३३ ॥
(१६) ५ । ३८ ॥

(१)वाङ्गभ्यान्तिस्वः ॥(२)ब्रह्मद्वयं (३)बृहस्पते धारय ।
(४) रचोऽवंबाधे ॥ (५)पिबत द्वयम् ॥ (६) सोमस्य पिबता (७)म्बं निष्परे (८) न्द्र ब्रवीमि द्वादश ॥ ६ ॥
व्वाचस्पतये, (९)ज्येष्ठतातिम्बर्हिषदं (१०)म्बृहस्पतिस्त्रिस्वो (११)ब्रह्मद्वय (१२)म्बृहद्वते यत्तऽइन्द्रबृहद्वयंस्तृ (१३)णन्ति बर्हिर (१४)पिबः(१५) ॥ सोमम्पिब(१६) पिबा सोम (१७)सुत द्विबर्हास्त्विवतुर्ह्रश ॥७॥ (१८)

---

(१) ६ । १ ॥
(२) ६ । ३ ॥
(३) ६ । ८ ॥
(४) ६ १६ ॥
(५) ६ । १९ ॥
(६) ६ । ३४ ॥
(७) ६ । ३६ ॥
(८) ६ । ३७ ॥
(९) ७ । १२ ॥
(१०) ७ । १५ ॥
(११) ७ । २१ ॥
(१२) ७ । २२ ॥ उदाहरणद्वयमेकस्मिन्नेव मन्त्रे बोध्यम् ॥
(१३) ७ । ३२ ॥
(१४) ७ । ३५ ॥
(१५) ७ । ३७ ॥
(१६) ७ । ३८ ॥
(१७) ७ । ३९ ॥
(१८) ८ । ८ ॥

उपयाम गृहीतोसि बृहदुच्चाय (१)बृहस्पतिं सुतस्येति (२)सोमम्पिब (३)बह्मद्वयं (४)सुम्नतम्बिभ्रत (५)सुक्तंमब्रूता (६)द्वबृहच्छुक्रोऽष्टौ ॥ ८ ॥ देवं सवित (७) र्व्वलंवाम्बलेन (८)बृहस्पतिः षोडश (९)ग्रीवायां- म्बद्धः ॥ (१०) पिबत मादयध्वं (११)प्रसवऽआबभूव (१२)बह्मद्वयं (१३) बाहूब्यांन्द्वयं पञ्चविंशतिः ॥ ९ ॥ अपो देवा (१४)बृहस्पतिर्द्वयं (१५)बन्धुस्तपोजाः (१६)चत्वस्योल्बं (१७)द्वबासिं (१८)ब्रह्मष-

(१) ८ । ९ ॥
(२) ८ । १० ॥
(३) ८ । १५ ॥
(४) ८ । २६ ॥
(५) ८ । ४३ ॥
(६) ८ । ४९ ॥
(७) ९ । ९ ॥
(८) ९ । १० ॥
(९) ९ । १४ ॥
(१०) ९ । १८ ॥
(११) ९ । २५ ॥
(१२) ९ । २६ ॥
(१३) ९ । ३० ॥
(१४) १० । ५ ॥
(१५) १० । ६ ॥
(१६) १० । ८ ॥
(१७) इदमुदाहरणं पूर्वोक्तं मन्त्रस्थं बोध्यम् ॥
(१८) १० । १० ॥

(१) उहिम्बुधन्यम्(२) परिता बभूवा(३) जा गोजाऽ-
त्टतम्बृहत्बा (४)ह्यऽभ्युपावहरामि (५)बङ्कार स्थेयं
स्कार (६)बर्हिषं÷(७)अपिब: शचीभिर्विठं० शति: ॥१०॥
युञ्जान:ऽप्रथमं (८)बृहते दश (९)बह्मवयं (१०)बाङ्ग-
बह्यान्त्विस्रो(११)बिभ्रदर्भिं(१२)बङ्कलेऽउभे (१३) अदं-
ब्धव्रतप्रमति (१४)बाधस्व द्विष: (१५)साग्निर्बिभर्त्तु
(१६) बिलङ्भ्याव (१७)सुबाङ्करता (१८)म्ब घृष्णु
(१९)बलद्वयं (२०)येषाम्बाह्व एकोनत्रिठं० शत ॥११॥

(१) १० । १९ ॥
(२) १० । २० ॥
(३) १० । २४ ॥
(४) १० । २५ ॥
(५) १० । २८ ॥
(६) १० । ३२ ॥
(७) १० । ३४ ॥
(८) ११ । ३ ॥
(९) ११ । ५ ॥
(१०) ११ । ९ ॥
(११) ११ । ११ ॥
(१२) ११ । ३० ॥
(१३) ११ । ३६ ॥
(१४) ११ । ४९ ॥
(१५) ११ । ५७ ॥
(१६) ११ । ५९ ॥
(१७) ११ । ६३ ॥
(१८) ११ । ६८ ॥
(१९) ११ । ८१ ॥
(२०) ११ । ८२ ॥

इखानो ख़क्कमो (१) बृहद्भा गोजा (२) घृतैं
र्व्वांधयत (३) विस्ंतास्त्वेन(४) द्योर्धा मे(५)स बोंधि(६)
ब्रह्मद्वयं(७) बृहस्पतिः पञ्च(८) बन्धमेतं(९) बन्धानां-
मवसर्ज्जनाया(१०)ववन्धे(११)ह्व बोजठ॑०(१२)सजूरब्दों
(१३)बभ्रूणामह(१४)मंब धामां(१५) न्युपंब्रुवे द्वयं(१६)
विबाधद्वं(१७)पड्वीशात्सर्व्वस्माद्देव किल्बिषा(१८)द्वह्वीः
प्रथमाच्चरं(१९) नाशयित्री बलासस्य द्वाच्चिठ॑०शात् ॥

---

(१) १२ । १३ ॥
(२) १२ । ३० ॥ इमान्युदाहरणानि संहिताया बोध्यानीति ॥
(३) १२ । ३५ ।
(४) १२ । ४२ ॥
(५) १२ । ४३ ॥
(६) १२ । ५६ ॥
(७) १२ । ५३ ॥
(८) १२ । ६४ ॥
(९) १२ । ६५ ॥
(१०) १३ । ६८ ॥
(११) १३ । ६८ ॥
(१२) १२ । ७४ ॥
(१३) १२ । ७५ ॥
(१४) १२ । ७६ ॥
(१५) १२ । ७८ ॥
(१६) १२ । ८६ ॥
(१७) १२ । ९० ॥
(१८) १२ । ९२ ॥
(१९) १२ । ९७ ॥

१२ ॥ मयि गृह्णामि(१) ब्रह्मं यज्ञानं(२) स बुध्न्या(३) अदब्धो(४) धत्त बृहस्पते (५)द्विबर्हं (६) त्रिष्टुब्ग्रैष्मी पञ्चदश (७)बृहत् ॥ १३ ॥ ध्रुवच्चिति(८) ब्रह्म चत्वारि(९) बृहतो पञ्च(१०) बस्तो वयः प्रथमं(११)विबाधसे(१२)बृहस्पतिश्चयं(१३)ब्रभस्य पञ्चदश॥१४॥अग्ने जातान्ब्रूहि(१४)द्वयं,(१५)बृहत्पञ्च(१६)बृहस्पतिद्वयम(१७)बोध्यग्निः(१८)सुब्रह्मा यज्ञो

(१) १३ । ३ ॥
(२) १३ । अस्मिन्नेव मन्त्रे उदाहरणद्वयं बोध्यम् ॥
(३) १३ । ११ ॥
(४) १३ । २३ ॥
(५) १३ । ४२ ॥
(६) १३ । ५५ ॥
(७) १३ । अस्मिन्नध्याये पूर्वोक्तमन्त्रस्योदाहरणं ज्ञेयम् ॥
(८) १४ । २ ॥
(९) १४ । ३ ॥
(१०) १४ । ९ ॥
(११) १४ । ११ ॥
(१२) १४ । २० ॥
(१३) १४ । २३ ॥
(१४) १५ । २ । ३ ॥
(१५) १५ । ११ ॥
(१६) १५ । १४ ॥
(१७) १५ । २४ ॥
(१८) १५ । ३४ ॥

(१) बभूर्थ(२) स्तोसम्बर्हिषं(३) मुद्दबुध्नस्य चतुर्दश ॥ १५ ॥ नमस्ते(४) बाहुभ्यांमुत ते(५) विभर्ष्यस्त्वे (६) उत बभ्रु(७) वींणवा(८) न्बभूवं ते(९) बाहु-भ्यान्तवं(१०) हिरंण्यबाहवे(११) बभ्लुशायं(१२) बृह-ते(१३)बुध्न्याय(१४)बिल्मिने(१५) पिनाकम्बिभ्रदागंहि (१६)बाह्वोस्तवं(१७)प्रथमस्मैलबृदाः(१८) पिबंतो जना-

---

(१) १५ । ४५ ॥
(२) १५ । ४९ ॥
(३) १५ । ५४ ॥
(४) १६ । १ ॥
(५) १६ । ३ ॥
(६) १६ । ६ ॥
(७) १६ । १० ॥
(८) १६ । ११ ॥
(९) १६ । १४ ॥
(१०) १६ । १७ ॥
(११) १६ । १८ ॥
(१२) १६ । ३० ॥
(१३) १६ । ३२ ॥
(१४) १६ । ३५ ॥
(१५) १६ । ५१ ॥
(१६) १६ । ५३ ॥
(१७) १६ । ६० ॥
(१८) १६ । ६२ ॥

नृपञ्चदश ॥ १६ ॥ अश्मन्नूर्ज्जंम (१) वेदिश्च(२)बर्हिः-षदे (३) स्वयम्भिबन्तु (४) ब्रह्म (५) यत्र बाणाः (६) प्रजया च बहुङ्कृधि (७) ब्रुवन् (८) बाध-माना (९) हस्तेषु बिभ्रतः (१०) प्रब्रवाम (११) त्रिधा बद्धः सप्तविंशतिः ॥ १७॥ वाजश्च मे (१२) ब-लं चमे (१३) बृहस्पतिश्चयं (१४) बर्हिश्चयं (१५) बृ-हच्चयं (१६) ब्रह्मैकादश (१७) बाहुभ्यामिह (१८)

---

(१) १७ । २ ॥
(२) १७ । १२ ॥
(३) १७ । १३ ॥
(४) १७ । ४५ ॥
(५) १७ । ४८ ॥
(६) १७ । ५० ॥
(७) १७ । ५२ ॥
(८) १७ । ५४ ॥
(९) १७ । ६५ ॥
(१०) १७ । ९० ॥
(११) १७ । ९१ ॥
(१२) १८ । २ ॥
(१३) १८ । १६ ॥
(१४) १८ । २१ ॥
(१५) १८ । २३ ॥
(१६) १८ । २९ ॥
(१७) १८ । ३७ ॥
(१८) १८ । ४९ ॥

बोधि (१) ब्रह्मस्यो (२) द्युर्ध्यस्व चतुर्विंशतिः ॥ १८ ॥ स्वाहीन्त्वां (३) बह्वं चत्वारि (४) बर्हिर्हंभ (५) बलं चत्वारि (६) रूपम्बदंरं (७) पिब षडा (८) दे बाधस्व (९) वह्यस्तन्न्व÷ (१०) प्रथमम्बङ्गलाम्से (११) अधिं ब्रुवन्द्वय (१२) सुलंबञ्जहाति (१३) बङ्कधा न (१४) बाधमानाः (१५) सब्वन्त (१६) ब्रदरैः (१७) सुक्ततं बिभर्ति षट्त्रिंशत् ॥ १९ ॥ त्र्नस्य योनिं (१८)

---

(१) १८ । ५१ ॥
(२) १८ । ६१ ॥
(३) १९ । ५ ॥
(४) १९ । १७ ॥
(५) १९ । ८ ॥
(६) १९ । २२ ॥
(७) १९ । ३५ ॥
(८) १९ । ३८ ॥
(९) १९ । ४४ ॥
(१०) १९ । ४८ ॥
(११) १९ । ५७ ॥
(१२) १९ । ७६ ॥
(१३) १९ । ८१ ॥
(१४) १९ । ८४ ॥
(१५) अस्मिन्पूर्वोक्तमन्त्रस्योदाहरणं द्रष्टव्यम् ॥
(१६) १९ । ९० ॥
(१७) १९ । ९४ ॥
(१८) २० । ३ ॥

बाङ्कभ्यां (१) बलं षड् (२) बाह्व मे (३) बृहस्पति पुरोहिता (४) बभ्रुवैमदे (५) बृहच्चत्वारि बाह्व चत्वारि (६) बर्हिर्द्वयं (७) सबिभेद (८) बाधतान्द्वेषः (९) पिब द्वयमष्टाविंशतिः ॥ २० ॥ द्रुमर्मो (१०) व्वरुणेह बोधि (११) बह्मां द्वयं (१२) प्रबाहवा (१३) पिब द्वयं (१४) बर्हिः सप्त (१५) बृहत्त्रयं (१६) बृहस्पतिर्बलं चत्वारि (१७) बर्दैर्द्दा (१८) बधनन्नश्विभ्यां (१९)

---

(१) २० । ३ ॥
(२) २० । ७ ॥
(३) २० । ११ ॥
(४) २० । २८ ॥
(५) २० । ३० ॥
(६) २० । ३९ ॥
(७) २० । ६८ ॥
(८) २० । ५१ ॥
(९) २० । ७७ ॥
(१०) २१ । २ ॥
(११) २१ । ९ ॥
(१२) २१ । ११ ॥
(१३) २१ । १५ ॥
(१४) तथा ॥
(१५) २१ । १६ ॥
(१६) २१ । ३० ॥
(१७) २१ । ५९ ॥
(१८) २१ । ६१ ॥
(१९) तथा ॥

बङ्ङ्भ्यः (१) ख्वन्ना ब्रूहि षड्विंशतिः ॥ २१ ॥ तेजोऽसि (२) बाङ्ङ्भ्यां (३) सुतऽग्रा बभूव (४) ब्रह्म त्रयं (५) तम्बधान (६) बृहस्पतये (७) प्रबुद्धाय (८) बलाय (९) पिबति(१०) बोधयो (११) पब्रुवे (१२)बृहत्यै स्वाहा त्रयोदश ॥ २२ ॥ हिरण्यगर्भः (१३)सम्बभूव सप्त(१४) युञ्जन्ति ब्रध्नं(१५) बृहत्सप्त(१६) ब्रह्म षट् (१७) पिब चत्वा (१८) य्यम्बेऽम्बिकेऽम्बालि-

(१) तथा ॥
(२) २२ । १ ॥
(३) २२ । २ ॥
(४) २२ । ३ ॥
(५) तथा ॥
(६) २२ । ६ ॥
(७) २२ । ७ ॥
(८) २२ । ८ ॥
(९) तथा ॥
(१०) २२ । १५ ॥
(११) २२ । १७ ॥
(१२) २२ । २० ॥
(१३) २३ । २ ॥
(१४) २३ । ५ ॥
(१५) २३ । ११ ॥
(१६) २३ । १३ ॥
(१७) २३ । १७ ॥
(१८) २३ । १८ ॥

के (१) बङ्क द्वयं (२) ये बर्हिषः (३) प्रब्रवीमि (४) परिता बभूव त्रयस्त्रिंशत् ॥ २३ ॥ अश्वस्तूपरो (५) बाह्वोः प्रथमो (६) बभ्रुः सप्त (७) बाह्व चत्वारि (८) बार्हस्पत्या (९) द्वय (१०) बृहद्वयं (११) बलं चत्वारि (१२) बाङ्कद्वयं (१३) बर्हिषदं (१४) बैयबकाः (१५) सोमाय लवा (१६) बृहस्पतिर्द्वयमष्टाविंशतिः ॥ २४ ॥ बार्दन्द्वङ्गि (१७) बर्मृदम्बस्त्रैं (१८) र-

---

(१) २३ । २५ ॥
(२) २३ । ३८ ॥
(३) २३ । ५८ ॥
(४) २३ । ६५ ॥
(५) २४ । १ ॥
(६) २४ । २ ॥
(७) पूर्वस्मिन्तदुदाहरणं ज्ञेयम् ॥
(८) २४ । ७ ॥
(९) २४ । १३ ॥
(१०) २४ । ३२ ॥
(११) २४ । ७ ॥
(१२) २४ । १८ ॥
(१३) इदमुदाहरणं पूर्वमन्त्रस्थं बोध्यम् ॥
(१४) २४ । २४ ॥
(१५) २४ । २८ ॥
(१६) २५ । १ ॥
(१७) २५ । २ ॥
(१८) इदमपि पूर्वोक्तमन्त्रे ॥

नूकाशेन बाह्व (१) न्निर्बाधेन (२) बृहस्पतिस्त्वा (३) य्यंद्वानम्बाजुभ्यां जाम्बीलेन (४) बलद्वयं (५) जुम्बकाय (६) जगतो बभूव (७) यस्य बाहू (८) अर्द्ध्यद्वयं (९) बन्धुं पञ्च (१०) पड्वीशद्वयं (११) ब्रह्मणां स्तृदयामि (१२) देवबन्धोर्वङ्क्रीरभ्मस्य पञ्चविंशतिः ॥ २५ ॥ अग्निश्च (१३) ब्रह्मराजन्याभ्यां (१४) बृहस्पतिर्वयं (१५) पिब वयं (१६) बृहद्दर्च (१७) ब्रवाणि ते (१८) बर्हिर्द्वयमेकादश ॥ २६ ॥ समास्त्वा (१९) बो-

(१) २५ । ४ ॥
(२) अस्मिन्नुदाहरणे वकारद्वयं २५ । ३ ॥ द्रष्टव्यम् ॥
(३) २५ । ६ ॥
(४) २५ । ९ ॥
(५) २५ । ११ ॥
(६) २५ । १२ ॥
(७) २५ । १४ ॥
(८) २५ । ३० ॥
(९) २५ । ३८ ॥
(१०) २५ । ४० ॥
(११) २५ । ४१ ॥
(१२) २६ । २ ॥
(१३) २६ । ३ ॥
(१४) २६ । ४ ॥
(१५) २६ । १२ ॥
(१६) २६ । १३ ॥
(१७) २६ । २३ ॥
(१८) २७ । २ ॥
(१९) २७ । ३ ॥

धय द्वयं (१) बह्म द्वयं (२) बृहस्पते द्वयं (३) ब-
र्हिरेदं (४) यद्बृहतीरष्टौ ॥ २७ ॥ होता यच्चबर्हि
(५) ईम (६) बृहतीमेकं (७) बध्नं द्वयं (८) बृ-
हती त्रयं (९) ब्रह्माणं (१०) बिभ्रद्द्वयं (११) बृहद्द्वयं
बध्नं द्वाविंशतिः ॥ २८ ॥ समिद्धोऽअग्ने (१२) न्बर्हि-
स्त्रयं (१३) बहोः कर्त्तार (१४) म्बाह्व (१५) बन्धनानि द्व-
यं (१६) बृहद्द्वयं (१७) पुत्त्रं बिभ्रता (१८) बह्वीनाम्पिता

---

(१) २७ । ८ ॥
(२) २७ । १९ ॥
(३) २७ । २५ ॥
(४) २८ । ४ ॥
(५) २८ । २७ ॥
(६) २८ ॥ २३ ॥
(७) २८ । ३१ ॥
(८) २८ । २८ ॥
(९) २८ । ३२ ॥
(१०) २८ । ३४ ॥
(११) २९ । ४ ॥
(१२) २९ । ९ ॥
(१३) २९ । १२ ॥
(१४) २९ । १४ ॥
(१५) २९ । ३० ॥
(१६) २९ । ४१ ॥
(१७) २९ । ४२ ॥
(१८) २९ । ४३ ॥

प्रथमं बङ्करस्य पुत्र॰ (१) इषुंबला (२) ब्राह्मणा-सः (३) सोमोऽग्रधिंब्रवीतु (४) पर्य्येति बाङ्ग (५) म्बाधमाना द्वयं (६) बलमोजो (७) बभ्रुः सौम्यो बार्हस्पत्यो (८) बार्हताय (९) बृहस्पतये सप्तवि-ठ॰शतिः ॥ २९ ॥ देवं सवित(१०) ब्रह्मणे ब्राह्मणत्रयं (११) क्लीबत्रयं(१२) बिदलकारीं(१३) बलद्वय (१४) मु-त्वादेश्व्यं÷कुब्जमधर्म्माय बधिरं(१५) बभ्रस्य(१६) ब-धाय(१७) बङ्कवादिनठ॰(१८) भल्लायाडम्बराघातठ॰

---

(१) २९ । ४६ ॥
(२) २९ । ५७ ॥
(३) २९ । ४९ ॥
(४) २९ । ५१ ॥
(५) इदमुदाहरणं पूर्वोक्तमन्त्रस्थं बोध्यम् ॥
(६) २९ । ५६ ॥
(७) २९ । ५८ ॥
(८) तथा ॥
(९) २९ । ६० ॥
(१०) पूर्वोक्तोदाहरणं बोध्यम् ॥
(११) ३० । ५ ॥
(१२) पूर्वोक्तमन्त्रस्थोदाहरणं बोध्यम् ॥
(१३) ३० । ८ ॥
(१४) ३० । इदमप्युदाहरणं प्राङ्मन्त्रस्थं बोध्यम् ॥
(१५) ३० । १० ॥
(१६) अस्मिन्पूर्वोक्तमन्त्रे उदाहरणद्वयं ज्ञेयम् ॥
(१७) ३० । १२ ॥
(१८) अस्मिन्पूर्वोक्तमन्त्रोदाहरणम् ॥

(१) शांबल्या(२)ङ्क्लीबअष्टादश॥३०॥ सहस्त्रंशीर्षा(३) तँय्यज्ञं बर्हिषि (४) ब्रह्मं चत्वारि (५) द्वौ बाहू राजन्योऽ (६) बध्नन्पुरुषं, जायमानो (७) बहुधा (८) तदब्रुवन्दश ॥ ३१ ॥ तदेव (९) ब्रह्मंहृदय(१०) माबभूव (११) यद्वृबृं, हतीः (१२) स नो बन्धुः पञ्च ॥ ३२॥ अस्याजरासो(१३)बृहत्त्वयं(१४)बर्हिर्द्वयं (१५) पिबत्त्रयं(१६) बर्हिषि द्वयं (१७) बृहद्द्वयं (१८) बृह-

---

(१) ३० । २० ॥
(२) ३० । २२ ॥
(३) ३१ । १ ॥
(४) ३१ । १० ॥
(५) ३१ । ११ ॥
(६) ३१ । १५ ॥
(७) ३१ । १९ ॥
(८) ३१ । २१ ॥
(९) ३२ । १ ॥
(१०) ३२ । ५ ॥
(११) ३२ । ७ ॥
(१२) ३२ । १० ॥
(१३) ३३ । ३ ॥
(१४) ३३ । ७ ॥
(१५) ३३ । १० ॥
(१६) ३३ । १५ ॥
(१७) ३३ । २४ ॥
(१८) ३३ । २८ ॥

तों (१) पिबतु (२) बट्त्रयं (३) वबीरिटे (४) बृह-स्पतिं (५) ब्रह्मणो द्वयं (६) बृहती (७) बर्हिषि । (८) शाम्बरे (९) बज्ञ्लाऽ (१०) दब्भेभि र्द्वयं (११) ब्रह्माणि (१२) पिबत (१३) बज्ञ्लं (१४) बाधते (१५) बृंह्णानो (१६) बृहते (१७) ब्रह्म चतुस्त्रिंशंऽमत् ॥ ३३॥ युञ्जाग्रतो (१८) बाधते (१९) ब्रूहि (२०) पिबतं (२१)

---

(१) ३३ । ३० ॥
(२) ३३ । ३२ ॥
(३) ३३ । ४४ ॥
(४) ३३ । ४५ ॥
(५) ३३ । ४२ ॥
(६) ३३ । ५५ ॥
(७) ३३ । ५३ ॥
(८) ३३ । ६३ ॥
(९) ३३ । ६४ ॥
(१०) ३३ । ६९ ॥
(११) ३३ । ८४ ॥
(१२) ३३ । ७८ ॥
(१३) ३३ । ८८ ॥
(१४) ३३ । ९० ॥
(१५) ३३ । ९५ ॥
(१६) ३३ । ९६ ॥
(१७) ३३ । ९६ ॥
(१८) ३४ । २५ ॥
(१९) ३४ । २७ ॥
(२०) ३४ । २८ ॥
(२१) ३४ । ३२ ॥

बृहतो(१) ब्रह्मणस्त्व (२) बधामहे (३) बिभर्त्यं (४) बध्नन् बध्नामि(५) बुध्न्यो (६) बोधि (७) बृहत्पञ्चदश॥ ३४ ॥ अपेतो (८) ब्रवीमि प्रथमाक्षरं (९) किल्बिषं (१०) बाधस्व तृतीयम् ॥ ३५ ॥ ऋचँव्वाचं (११) बृहस्पतिर्द्वियं (१२) ब्रह्म (१३) ब्रवाम प्रथमाक्षरं चतुर्थम् ॥ ३६ ॥ देवस्य त्वा(१४) बाहुभ्यां (१५) बृहतो (१६) ब्रह्मणो (१७) बृहस्पते (१८) बोधि । पञ्च ॥ ३७ ॥ देवस्य त्वा (१९) बाहुभ्यां (२०) बृहस्पतये

(१) ३४ । ५८ ॥
(२) ३४ । ४६ ॥
(३) ३४ । ५१ ॥
(४) ३४ । ५२ ॥
(५) ३४ । ५३ ॥ अस्मिन्मन्त्रे उदाहरणद्वयमस्ति ॥
(६) ३४ । ५८ ॥
(७) ३४ । ५८ ॥
(८) ३५ । ७ ॥
(९) ३५ । ११ ॥
(१०) ३५ । १६ ॥
(११) ३६ । २ ॥
(१२) ३६ । १७ ॥
(१३) ३६ । २४ ॥
(१४) ३७ । १ ॥
(१५) ३७ । २ ॥
(१६) ३७ । ७ ॥
(१७) ३७ । १२ ॥
(१८) ३७ । २० ॥
(१९) ३८ । १ ॥
(२०) ३८ । ८ ॥

(१) पिबत (२) ब्रह्मणे (३) ब्रह्मोर्ध्वं (४) बर्हिर्भ्यो (५) बभूव (६)ब्रह्मणो (७) बृहद्ध (८) ब्रह्मणा दश ॥ ३८ ॥ स्वाहा प्राणेभ्यो (९) बृहस्पति (१०) ब्बलेन (११) ब्रह्मणे ब्रह्महत्यायै चतुर्थः ॥ ३९ ॥ ईशा वास्य ४ (१२) क्लिवएकः ॥ ४० ॥

इति श्री माण्डवीशिक्षा समाप्ता ॥

(१) ३८ । १० ॥
(२) ३८ । १४ ॥
(३) ३८ । १४ ॥
(४) ३८ । १५ ॥
(५) ३८ । १७ ॥
(६) ३८ । १९ ॥
(७) ३८ । २७ ॥
(८) ३८ । २७ ॥
(९) ३९ । ६ ॥
(१०) ३९ । ९ ॥
(११) ३९ । १३ ॥ अस्मिन्नपि मन्त्रे उदाहरणद्वयं बोध्यम् ॥
(१२) ४० । १५ ॥ एतेषूदाहरणेषु आर्ष्याः संहितायां अङ्का बोध्याः ॥

# अथामोघानन्दिनी शिक्षाऽऽरभ्यते ॥

अथ शिक्षां प्रवक्ष्यामि ह्यमोघानन्दकारिणीम् ॥ यस्याः श्रवणमात्रेण सर्वत्र विजयी भवेत् ॥ १ ॥ ओष्ठ्या दन्त्या लघुश्चैव पुनरेव लघूतरः ॥ नादनासिक्यसहिताँ लक्षणानि पृथक् पृथक् ॥ २ ॥ ब्रह्मबाहू बृहद्बद्धो बृहती द्यौर्बधान यः ॥ बर्हिर्बृहस्पते बिभ्राड्बिभितो बद्ध बोधय ॥ ३ ॥ बर्हिषा च पिब ब्रूते त्र्यम्बकं बाध बुध्नयः ॥ बन्धुस्तब्भ्नो च बध्नीताम्बिकया बभ्लुशाय च ॥ ४ ॥ ब्रवीद्बासि बभ्रारे अम्बश्चैव बभुर्बद्धः ॥ चत्वस्तोलबं तथाऽब्दं च शतम्बस्त्यज्यते बुधैः ॥ ५ ॥ प्रथमाक्षरन्न वर्ज्जीत द्वितीयं परिवर्ज्जयेत् ॥ एवं बद्धीस्तथा बाह्वोः पूर्णबन्धुं परित्यजेत् ॥ ६ ॥ बिभ्रतं बिभ्रता स्वेनद्विलं गृह्णातूप ब्रुवे ॥ आवबन्धं च बीजं च बभ्रुः पड्वीशकिल्बिषात् ॥ ७ ॥ मूर्द्धा व्ययसि यद्बस्तो बध्नाऽबोध्यग्निर्वाणवान् ॥ उद्बुध्यैलबृदा बद्धो बाहवे बिलिमने यथा ॥ ८ ॥ कुबलं विबलं चैव स बिभेद बलं तथा ॥ रक्षोहणं बलं त्याज्यमन्त्योष्ठो बल उच्यते ॥ ९ ॥ अन्तस्थायवकारोऽपि इत्येतैः सँयुतो मतः ॥ अर्बुदन्न्यर्बुदं बभ्रुः शुल्बं चोल्बं जहाति च ॥ १० ॥ बीभत्सं च बद्धर्ब्रूहि बडवा स्वंबधारयन् ॥ प्रबोधयाम्बिके

ऽम्बेऽम्बालिके वलायका ॥ ११ ॥ अम्बिके बष्कि-
हा बाह्यं बलं बाधध्ववर्हितः ॥ बिभ्रतामपि बेदस्य ब-
रस्यैते ब्रवाणि ते ॥ १२ ॥ क्लिबे विदलकारीं च बो-
धि बद्धं च जुम्बकः ॥ बीभत्सायै च शाबल्यां शब्दाया-
डम्बरा बभूत् ॥ १३ ॥ बरामहांश्च बडादित्य बट्सूर्य्य-
स्य सुबोरये ॥ येषाम्बरेषु बञ्जलं प्रब्रवाम बिभर्त्ति
च ॥ १४ ॥ विभर्षि बिभर्थ्यस्तवे संहितायां क्रमेण तु ॥
एते ओष्ठ्याः समाख्याताः शेषा दन्त्याः प्रकीर्त्तिताः ॥
१५ ॥ विष्णुर्वायुस्तथा वह्निर्वरुणस्य विषूचिका ॥
वसोर्विभाति विश्वस्य ह्यष्टौ दन्त्याः प्रकीर्त्तिताः ॥ १६ ॥
व्यामभद्य विनश्चैव ब्रेशीनां वृषभस्तथा ॥ वन्द्यमानश्च
वृत्तं च वाचः सत्यमशीय च ॥ १७ ॥ वृष्णो वम्रयो
वधोऽसीति वपा उर्व्वी वहन्ति च ॥ वेदी वर्व्वी वराहश्च
ह्यमी दन्त्याः प्रकीर्त्तिताः ॥ १८ ॥ वलो वस्तिर्वलं वा-
हनं बुरीतं च विब्रुः । कुवलं विवलं चापावीणम-
मी दश दन्त्याः ॥ १९ ॥ वत्य मुदत्र तथा वक्ष्यमाणं
तु यद्भवेत्तदा ॥ वक्ष्यमाणास्तु हीत्येतां पीडयश्च
स्तामुदाहृताः ॥ २० ॥ व्वेत्वा व्वीतां तथा व्व्य-
न्तु उपे यह्वी तथैव च ॥ व्विशल्यो व्वाणी वृष्णश्च-
द्रुमे दन्त्याः प्रकीर्त्तिताः ॥ २१ ॥ विद्मा ते (१) वि-

(१) २२ । १९ ॥

श्च्तेश्चितौ प्रतद्वो चेद्वित्तस्य च ॥ विभ्राष्टि विभ्रा-
ड्विभ्राजमाना दन्त्याः स्मृता बुधैः ॥ २२ ॥ न त-
द्वेवीरापऽआपो देवी तु (१)विम्नतान्तथा ॥ रचोहणं ब-
लं दन्त्यं स विभेद वलन्तथा ॥ २३ ॥ सामवेदं जातवेदा
नवाऽउऽएतन्म्रियसे । पर्सन्न वे रनुवाति प्रगर्द्धिनऽअ-
मी दन्त्याः ॥२४॥ इषुबला बलं चौष्ठ्यं न विकल्पः कदा
चन ॥ संहितायां तथा वर्णा लघवो वै भवन्ति हि ॥
२५ ॥ एकाक्षरं वकार (२) श्च निपातस्थो यदा भ-
वेत् ॥ संहितायां लघुर्ज्ञातः पदकाले गुरुर्भवेत् ॥
२६ ॥ वकारस्त्रिविधः प्रोक्तो गुरुर्लघुलघूतरः ॥ आ-
दौ गुरुर्लघुर्मध्ये पदान्ते च लघूतरः ॥ २७ ॥ पदान्ते
पदमध्ये च वकारो दृश्यते यदि ॥ लघुरेव स मन्तव्यो
ह्यन्यत्रापि लघूतरः ॥ २८ ॥ औकारे च पदे पूर्वे
अकारे परतः स्थिते ॥ लघूतरं विजानीयादग्नाव-
ग्निर्निदर्शनम् ॥ २९ ॥ नादसञ्ज्ञाभवन्तीमे ङञण-
नमाश्चानुनासिकाः ॥ भवन्ति प्रत्यये येषामन्तस्थासं-
युताः स्वराः ॥ ३० ॥ हकारं चैव वर्गाणां तृतीयं च
चतुर्थकम् ॥ (३) अथ दीर्घा विसर्गान्ता अष्टौ ते ना-
दसञ्ज्ञकाः ॥ ३१ ॥ आद्यन्तयोर्म्मकारौ द्वौ हकारो

(१) देवी चेति 'ख' पुस्तकपाठः ॥
(२) वकारस्येति 'ख' पुस्तकपाठश्च ॥
(३) नादसञ्ज्ञका इति 'ख' पुस्तकपाठः ॥

यत्र मध्यतः (१) ॥ तत्र नादं प्रकुर्वीत (२) अग्ने व्र-तपते निदर्शनम् ॥ ३२ ॥ मकारान्ते पदे पूर्वे अका-रे परतः स्थिते ॥ तत्र नादं प्रकुर्वीत (३) मच्चिकेति निदर्शनम् ॥ ३३ ॥ नमौ गुरू नादसञ्ज्ञौ लघू चै-वानुनासिकौ ॥ (४) सँय्युक्तौ, च विसर्गौ च नादावे-तौ प्रकीर्त्तितौ ॥ ३४ ॥ पञ्चमा यत्र दृश्यन्ते पञ्चमे परतः स्थिते ॥ नासिकं तत्र कुर्वीत (५) मात्रिकत्वेन संशयः ॥ ३५ ॥ सँय्युक्ताग्रे विरामस्तु विवृत्तिस्तु विशे-षतः ॥ प्रत्यये च स्थिता ये च अघोषाः पञ्चमाः स्व-राः ॥ ३६ पदान्ते सँय्युता ह्रस्वाः पञ्चैते ह्यनुना-सिकाः ॥ विवृत्तौ चावसाने वा ऋचार्द्धे तु तथाऽपरे ॥ ३७ ॥ क्षिप्रे दीर्घे च सँय्युक्ते यकारो यत्र दृश्यते ॥ प-दे च पादसंस्थाने नासिकं तु विधीयते ॥ ३८ ॥ क-कारान्ते पदे पूर्वे ऋवर्णे परतः स्थिते ॥ नासिकन्तु विजानीयात्तमुत्त्वेति (६) निदर्शनम् ॥ ३९ ॥ हकारो रेफसँय्युक्तो नादिर्भवति नित्यशः ॥ द्वितीयेन पदाक्रा-

---

(१) यत्र मध्यमः । इति 'क' पुस्तकपाठश्च ॥

(२) अग्ने व्रतपतेति, अपपाठः ॥

(३) २५ । ३२ ॥

(४) संयोगौ चेति 'ख' पुस्तकपाठः ॥

(५) नमस्तेति निदर्शनमिति 'ग' पुस्तकपाठः ॥

(६) ११ । ३३ ॥

न्तो न तु नादः कदा च न ॥ ४० ॥ नहि शत्रून् क्रातून् वनस्पतीन् परिधीन् छिणन्ति शत्रूँ र रनपव्ययन्तः ॥ अनुरङ्गाः पञ्चैकार्द्धमात्रिका भवन्ति ॥ ४१ ॥ पूषा मित्रो वसुश्चैव अञ्जनाः परिकीर्त्तिताः॥ एकार्द्धमात्रिकां स्थित्वा पञ्चैते चानुनासिकाः ॥ ४२ ॥ पञ्च रङ्गाः प्रवर्त्तन्ते घातनिर्घोतवज्रिणः ॥ अहिणः प्रहिणो ज्ञेयो यथाऽऽईउक्त निदर्शनम् ॥ ४३ ॥ (१) देवाँ २ ॥ ऽआसादयेति घातः । (२) देवाँ २ ॥ ऽइदेषीति निर्घातः । (३) देवाँ २ ॥ ऽउपागादृति वज्रिणः । (४) देवाँ २ ॥ ऽऋतुभिरिति अहिणः । (५) अमित्राँ २ऽ॥ ओषतादिति प्रहिणः ॥ द्विमात्रो मात्रिको वाऽपि नासामूलं समाश्रितः ॥ अन्ते प्रयुज्यते रङ्गः पञ्चमैः सर्वनासिकैः ॥ ४ ४॥ बरमहाँश्च बडादित्यो ह्यद्धा देव महाँ २॥ ऽअसि॥ बट्सूर्यस्य तु सचातो महारङ्गाः प्रकीर्त्तिताः ॥ ४५ ॥ परिते परिमाग्ने च अदृश्यं परिकीर्त्तिताः ॥ यस्माद्वयं प्रदृश्यन्ते अतिरङ्गाः प्रकीर्त्तिताः ।

(१) २२ । १७ ॥
(२) २३ । १६ ॥
(३) ५ । ३९ ॥
(४) १८ । ३३ ॥
(५) १३ । १२ ।

४६ ॥ (१) अग्ना३ इ पत्नीवन्त्सजूर्जी३ङ्काचीनिति द्विः ॥ तिरश्चीनो विततः पृच्छामि त्वां वायुरनिलमिति सप्त प्लुता भवन्ति ह्यष्टमो न विद्यते ॥ ४७ ॥ मनो जूतिश्च वायुश्च प्लुतमेकं द्विधाकृतम् ॥ ओकाराद्याः प्लुताः सर्वे न विकल्पः कदाचन ॥ ४८ ॥ षडङ्गुलं तु जात्यस्य ह्रस्वस्यानुपथस्य च ॥ चतुर्थभागमात्रं स्याद्गूयस्तेनैव वर्त्तते ॥ ४९ ॥ शून्ये गृहे पिशाचोऽपि गर्जति न च दृश्यते ॥ एवं वर्णाः प्रयोक्तव्या (२) उपजग्मन्निति दर्शनम् ॥ ५० ॥ स्फुरितं चिबुकोन्मूलं वायुना सम्प्रपूरितम् ॥ मण्डूकस्फुरणं नाम (३) अपाम्केनै निदर्शनम् ॥ ५१ ॥ इडे रन्तेऽभिष्वनं कृतस्य ते, पातन्नो, यस्ते युवर्ठं० सुराम्मम् । इडऽएहि ॥ पदकाले तु वाक्ये च ह्रस्वाः पञ्च सरस्वति ॥ नकारौ द्वौ मकारश्च रेफस्तदुपरि स्थितः ॥ अशरीरं यमं विद्यात्सम्राऽङ्र्जीति-(४) निदर्शनम् ॥ (५) इयन्ते, द्याम्मां, सुवीरान् सुप्रजाः । प्रजाः । रश्मिनां सत्याय । प-

---

(१) इदं गद्यात्मकं पद्यं केचिन्मतमवलम्ब्याङ्को लिखितः ॥ उदाहरणाङ्काः प्रातिशाख्यतो ज्ञेयाः ॥

(२) १७ । ६ ॥

(३) १९ । ७१ ॥

(४) २ । १४ ॥

(५) मूलस्थोदाहरणानि संहितातो ज्ञेयानि बुधैरिति ॥

रो द्विवा पृथिव्या इति षट् पृथिव्याः स्वरान्ताः ॥ लोहकारइवा, कर्म भस्मसात्कुरुते यदि ॥ एवं वर्णाः प्रयोक्तव्याः सँव्वत्सरो निदर्शनम् ॥ ५३ ॥ आयसं च यथा तप्तं निःक्षिपेदाप्सु मध्यतः ॥ तच्छब्दं कुरुते प्राज्ञः परिवत्सरो निदर्शनम् ॥ ५४ ॥ ऊष्माकारं पठेद्यस्तु कूर्मपृष्ठो विधीयते ॥ एवं च कुरुते प्राज्ञः (१) कल्ल्याण्य इति दर्शनम् ॥ ५५ ॥ यथा मीनार्थिनः पक्षिणऽ उत्पतन्ति पतन्ति च ॥ एवं वर्णाः प्रयोक्तव्याः (२) कल्ल्याण्य इति दर्शनम् ॥ ५६ ॥ कूर्मपृष्ठं परित्यज्य कर्त्तव्यमश्वत्थपत्त्रवत् ॥ एवं हि कुरुतेऽभिज्ञो (३) देवस्य त्वेति दर्शनम् ॥ ५७ ॥ कुक्कुटः कामलुब्धो वा ककारद्वयमुच्चरेत् ॥ एवं वर्णाः प्रयोक्तव्याः (४) कुक्कुटोऽसि निदर्शनम् ॥ ५८ ॥ कुक्कुटी कामलुब्धा च कुक्कुहन्ती पुनः पुनः ॥ तन्मुखं कुरुते प्राज्ञः कुक्कुटोऽसि निदर्शनम् ॥ ५९ ॥ यथा भारभराक्रान्तो निश्श्वासो लघुचेतसः ॥ एवं वर्णाः प्रयोक्तव्या (५) होता यक्षन्निदर्शनम् ॥ ६० ॥ यथा बा-

---

(१) १७ । ९६ ॥

(२) द्वितीयोदाहरणं 'ख' पुस्तकपाठश्च ॥

(३) १ । १० ॥

(४) १ । १६ ॥

(५) २१ । २२ ॥

त्तस्य सर्पस्य निश्श्वासो लघुचेतसः ॥ एवमूष्मा प्रयो-क्तव्यो ह्कारपरिवर्ज्जितः ॥ ६१ ॥ यथा पुत्त्रवती स्ने-हाच्चुम्बती च पुनः पुनः ॥ तन्मुखं कुरुते प्राज्ञो(१)यु-ञ्जानऽइति दर्शनम् ॥ ६२ ॥ यथा कामातुरा नारी श-ब्दं करोति यादृशम् ॥ तच्छब्दं कुरुते प्राज्ञः (२) सिꣳह्यसि निदर्शनम् ॥ ६३ ॥ यथा मर्कटयोर्य्युद्धं रोषेण प्रतिधावति ॥ एवं वर्णाः प्रयोक्तव्याः (३) कि-क्रिदीविना, दर्शनम् ॥ ६४ ॥ मूत्रं करोति बडवा यो-निं कुर्वीत यादृशीम् ॥ तन्मुखं कुरुते प्राज्ञः (४) स-दुन्दुभे निदर्शनम् ॥ ६५ ॥ उकारान्ते उकारे च दृश्य-ते चोभयोर्यदि ॥ द्विरौष्ठ्यन्तु विजानीया (५) भूर्भु-वः स्वर्न्निदर्शनम् ॥ ६६ ॥ एकयत्नो भवेद्यस्तु सकृदौ-ष्ठ्यन्तदुच्यते ॥ द्वित्रिभिश्च चतुष्कं च चतुरौष्ठ्यं ततः परम् ॥ ६७ ॥ अथ सादृश्यविज्ञेयः समानस्वरवर्णा-योः ॥ न्यूनाधिकानि तान्येव चक्षुषीति विनिर्द्दिशेत् ॥ ६८ ॥ विश्वेदेवास्तमुत्वा च असौ यस्तु कदा चन ॥ ये देवा नमस्तेऽस्तु वाजोनः सप्त चक्षुषी ॥ ६९ ॥ स-

(१) ११ । १ ॥
(२) ५ । १० ॥
(३) १२ । ८७ ॥
(४) २९ । ५५ ॥
(५) ३ । ३७ ॥

मानाचरबाधे च सन्ध्येकाचरचक्षुषी ॥ समानवर्णयोगं च सम्प्रधानैव चक्षुषी ॥ ७० ॥ अग्नो मित्रस्तथा वातो ऊर्द्धमेनं प्रचते ॥ मानस्तोके तनये तु चक्षुषी च चतुष्टयम् ॥ ७१ ॥ पूर्वायां कण्डिकां दृष्ट्वा अपरा सह सँय्युता ॥ तदेव नामग्रहणं न विकल्पः कदा चन ॥ ७२ ॥ पूर्वा विद्धा परान्त्या च कण्डिका यत्र दृश्यते ॥ चपला चैव सा ज्ञेया (१) आच्छच्छन्दो निदर्शनम् ॥ ७३ ॥ तिस्रो ह्यर्द्धा अभित्यं च तिस्रोऽअर्द्धा प्रजापतिः ॥ पुनन्तु मेति चत्वारि वायुः पञ्च ततः परम् ॥ ७४ ॥ अनाधृष्टा त्रयस्त्रैव एधोस्यर्द्ध चतुष्टयम् ॥ सँव्वत्सरोऽसि चत्वारि द्यौःशान्तिस्त्वार्द्धयोर्द्धयोः ॥ ७५ ॥ क्वचित्स्वाहा पृथक्कुर्य्यात्क्वचिद्युक्तां तु कारयेत् ॥ क्वचिन्त्वादौ विजानीयात्क्वचित्त्वान्ते विधीयते ॥ ७६ ॥ वाक्यकालेऽवसाने वा स्वाहान्ते चाहुतिं क्षिपेत् ॥ मन्त्रभागं पृथक्कुर्य्यात्स्वाहाकारं पृथक्पृथक् ॥७७॥ स्वाहादौ च भवेद्वाक्यं (२) नृमणा नृमणास्तथा ॥ अन्ते चादौ पुनस्त्वान्ते (३) काय स्वाहेति दर्शनम् ॥ ७८ ॥ अष्टाशीतिरेकस्य प्रथमा कण्डिका स्मृता ॥ लक्षणोक्त-

(१) १५ । ५ ॥
(२) १२ । २० ॥
(३) २२ । २० ॥

प्रकारैस्तु (१) इषेत्वेति निदर्शनम् ॥ ७९ ॥ त्रीणि त्रीणि च चत्वारि दश पञ्चाष्टमं स्मृतम् ॥ एकादशाक्षरं तद्वदुभयोरपि दृश्यते ॥ ८० ॥ सप्तमं पञ्चमञ्चैव पुनश्चैकादशाक्षरम् ॥ नवाक्षरं विजानीयाद्वाक्यं चैकादशं स्मृतम् ॥ ८१ ॥ उच्चादुच्चतरन्नास्ति नीचान्नीचतरं तथा ॥ एवं वर्णाः प्रयोक्तव्या इषे त्वेति निदर्शनम् ॥ ८२ ॥ मकारादौ भवेद्वाक्यं सदाऽऽऊर्जंप्रशस्यते ॥ आविर्मर्य्योऽकारादौ स्वरान्ते प्रथमस्वराः ॥ ८३ ॥ रुद्रसङ्ख्या भवेद्वाक्यं वेदसङ्ख्या पुनः पुनः ॥ युग्मबाणानयोः सप्त अन्ते चैव चतुर्दश ॥ ८४ ॥ पञ्चाशत्पञ्चवर्णानि अक्षराणां प्रमाणतः ॥ इन्द्रादित्ये च विज्ञेयं वाक्यं तस्य भवेत्त्रयम् ॥ ८५ ॥ सुधा च प्रथमाध्यक्षा पीडयाध्यक्षा द्वितीयका ॥ ऊष्मान्ता प्रथमा ज्ञेया स्वरान्ता वर्णिका स्वराः ॥ ८६ ॥ चिदसि, प्रथमा ज्ञेया अग्ने-र्व्योऽथ परा भवेत् ॥ ध्यक्षाऽध्यक्षातयोः सम्यगुभयोः कण्डिकाद्वयोः ॥ ८७ ॥ अभिरग्निस्ततस्तु पदाद्यन्त विधीयते ॥ एकाक्षरं पदं वाक्यं नवाब्धियुग्ममेव च ॥ ८८ ॥ मध्ये चैकाक्षरं वाक्यं द्वे द्वेऽग्रध्न्याऽवसानयोः ॥ एवं वर्णाः प्रयोक्तव्या, लोकं तास्य, प्रकीर्त्तिताः ॥ ८९ ॥ विभक्त्यन्तं विजानीयाद्गुरुतः शास्त्रतोऽपि वा ॥ लो-

(१) १।१॥

पागमविकाराभ्यां वाक्यानामेष निर्णयः ॥९०॥ व्वनेषु-
व्यन्तरिच्चं च, अष्टौ व्यव्यत्तथैव च ॥ (१) नामग्रह-
णकाले तु गुरुरेव न संशयः ॥ ९१॥ शर्म्म च स्यस्तथा
चित्रऽउपप्राागात्समुद्द्रवः ॥ स्वरितो वाक्यकालेषु उ-
दात्तं नोपपद्यते ॥ ९२ ॥ एच्छूषु शुक्रा जाते च अ-
भित्त्वा गोमंदूषुणा ॥ स्वरितो वाक्यकालेषु न चोर्ध्व-
न्नीयते करम् ॥ ९३ ॥ अत्सन्नमीमदन्त च अहरहस्व-
तथैव च ॥ वाक्यं च स्वरितं विद्यात्पाठकाले यथा क्र-
मम् ॥ ९४ ॥ ऊष्माणो यत्र दृश्यन्ते ह्यन्तस्थास्व तथैव च ॥
गुरुस्तत्रैव विज्ञेयऽऋवर्णसह सँय्युतः ॥९५॥ अन्तस्थपद-
सँय्योगे विशेषो नोपपद्यते ॥ अशरीरं यमं विद्यादन्तस्थः
पिण्डनायकः ॥९६॥ सद्यो जातः समुद्द्रोऽसि प्रथमाय
व्यूध्यया ॥ एवं वर्णाः प्रयोक्तव्या गुरवोऽत्र न संशयः ॥
९७ ॥ अभिनीतं निपातं वा जात्यं वा स्वरितं विदुः ॥
पदकाले भवन्त्येवं पाठकाले यथाक्रमम् ॥ ९८ ॥ त-
व व्वायो मह्नोऽअग्ने वृणीत्यत्रैव दृश्यते ॥ प्रथमोऽत्र
लघुर्ज्ञेयो द्वितीयस्व गुरुर्भवेत् ॥ ९९ ॥ द्वादशैतानि
नामानि देवता च तथैव च ॥ अन्यथा निरयं याति
सम्यक् पाठमजानतः ॥ १०० ॥ (२) छाया च्छिद्रा त-

---

(१) इमान्युदाहरणानि संहितापाठस्थानि बोध्यानि । अन्येषामुदाहरणानामङ्काः शिक्षान्तरादग्राह्याः ॥

(२) इदं पद्यं 'ख' पुस्तके पूर्वापरीभावेण दृश्यते ॥

था छन्दस्छकारा लघुसञ्ज्ञकाः ॥ ह्रस्वा वा यदि वा दीर्घाः शेषा द्वित्वे प्रतिष्ठिताः ॥ १०१ ॥ दीर्घादग्रे छकारोऽपि ह्रस्वादग्रे तथैव च ॥ द्वित्वाक्षरं विजानीयादिति शास्त्रविधानतः ॥ १०२ ॥ दीर्घादग्रे तु यो दीर्घो गिरिशा वर्म्मणा तथा ॥ गुरुरेव स मन्तव्यश्छादयामि निदर्शनम् ॥ १०३ ॥ मा त्त्वा यऽश्वांक्तमदाश्चैव सहस्त्रोमास्तथैव च ॥ पाठमध्ये लघुर्ज्ञेयो पदकाले गुरुर्भवेत् ॥ १०४ ॥ पशुभिर्य्यजुर्भिराप्यन्ते तस्माद्दृयच्चात्तथैव च ॥ ऋचार्द्धे तु छकारो न त्रिसँय्योगं कदाचन ॥ १०५ ॥ न सँय्योगं न द्विर्भावश्छकारो म्रदुरुच्यते ॥ अवसाने गुरुं विद्याच्छौनको वाक्यमब्रवीत् ॥ १०६ ॥ निपातं चाभिनीतं च शेषं नीचतरं क्रमात् ॥ त्रिस्वरं तं विजानीयाद्धोता श्रोजो निदर्शनम् ॥ १०७ ॥ द्वौ ककारौ स्वरौ द्वौ च नैव मात्रा विधीयते ॥ स्वरे प्रतिस्वरं दद्याद्द्विवेशीनान्त्वा निदर्श नम् ॥ १०८ ॥ चतुर्द्दशाक्षरं चादौ पुनश्चैकादशाक्षरम् ॥ पुनर्द्दशाक्षरं वाक्यमष्टाक्षरमतः परम् ॥ १०९ ॥ लक्षणैर्वा विहीनस्तु भुक्तमव्यञ्जनं यथा ॥ एवं वर्णाः प्रयोक्तव्याः शीघ्रश्च ते च निदर्शनम् ॥ ११० ॥ वसुसङ्ख्याक्षरं वाक्यं त्रिपदी वा चतुष्पदी ॥ सप्तांशासन्हि गायत्री अग्निन्दूतं, सुधी हवम ॥ १११ ॥ उभौ सप्ताक्षरं वाक्यं पुनश्चैव नवाक्षरम् ॥ अष्टाक्षरं वि-

जानीयाद्यत्पुरुषं च निर्द्दिशेत् ॥११२॥ जनाशीति तु वर्णानि अथै तांश्च प्रकीर्त्तिताः ॥ एकाक्षरादिवाक्यानि द्वादशैतानि सङ्ख्यया॥११३॥ द्वादशाक्षरं प्रथमं पञ्चमे पञ्च सप्त वै ॥ षडक्षरं ततो वाक्यं पुनर्द्वादशकं स्मृतम्॥११४॥एकादशाक्षरम्प्राहुरन्ते च द्वादशाक्षरम्॥ एवं वर्णाः प्रयोक्तव्या अथैतानिति दर्शनम् ॥११५॥ अष्टादशाक्षरं वाक्यं नाकपृष्ठे च पञ्चधा ॥ सप्तदशाक्षरं चैव वैश्वदेवी निदर्शनम् ॥ ११६ ॥ रौद्राध्यायोत्तरे चैव कण्डिकाशतकेन तु ॥ ततो वाक्यं प्रकुर्वीत ऋचार्द्धे षोडशाक्षरम् ॥ ११७ ॥ अष्टादशाक्षरं वाक्यं पुनः षोडशकैः शुभैः ॥ एवं वर्णाः प्रयोक्तव्या अश्मन्नूर्ज्जं विनिर्द्दिशेत् ॥ ११८ ॥ पुस्तके (१) प्रत्ययाऽधीतं नाधीतं गुरुसन्निधौ ॥ न भ्राजन्ते सभामध्ये जारगर्भा इव स्त्रियः ॥ ११९ ॥ एकः सर्वं न जानाति सर्वमेकं न विन्दति ॥ एवं मत्वा न मुह्यन्ति पण्डिताः शुद्धभाविनः ॥ १२० ॥ (२) श्रुत्वा वेदविनाशं तु सम्यग्ब्रूयान्न वै बुधः ॥ आहूय तं विविक्ते वै तस्य धर्म्मो न हीयते ॥ १२१ ॥ मन्त्रो हीनः स्वरतो वर्णतो वा मिथ्याप्रयुक्तो न तमर्थमाह ॥ स वाग्वज्रो यजमा-

---

(१) प्रत्ययाधीतमिति 'ख' पुस्तकपाठश्च ॥

(२) शुभभाजिनइति 'क' 'ग' पुस्तकयोः पाठः ॥

नं हिनस्ति यथेन्द्रशत्रुः स्वरतोऽपराधात् ॥ १२२ ॥ लक्षणं न त्यजेद्धीमान्सम्प्रदायोऽन्यथा भवेत् ॥ लक्षणेन विना शिष्यः सम्प्रदायो विनाशवान् ॥ १२३ ॥ नासौ तत्फलमाप्नोति सम्यक्पाठमजानतः ॥ उत्तमो लक्षणज्ञानी लक्ष्यज्ञानी तु मध्यमः ॥ १२४ ॥ लक्ष्यलक्षणयोर्ज्ञानी तद्धि मात्रं (१) प्रचक्षते ॥ लक्षणेन विना वाणी निर्मलाऽपि न शुद्ध्यति ॥ १२५ ॥ प्रमदा रूपसम्पन्ना दरिद्रस्येव योषिता ॥ स्वरहीना यथा वाणी वस्त्रहीनास्तु योषितः ॥ १२६ ॥ एवं वर्णा न शोभन्ते प्राणहीनाः शरीरिणः ॥ वेदपाठी सदा सम्यग्विचार्य्यैवं पुनः पठेत् ॥ १२७ ॥ विश्वा रूपाण्यबोध्यग्निरेधोऽसीति तथाऽपरः ॥ केतुङ्कृण्वन्निति च ते षकारा मूर्द्धजाः स्मृताः ॥ १२८ ॥ अग्नेरनीकं, य्युदवा हि, विश्वे देवा, द्वितीयकम् ॥ उदग्ने चायमुत्तरा, न्नमो वन्न्याय, हीत्ययम् ॥ १२९ ॥ देवस्वर्हि, य्यंदापोऽस्ति त्वामद्य, स्वस्ति न स्तथा ॥ मा नो मित्रो हि वक्ष्यन्ती चकारा ययुतास्तथा ॥ १३० ॥ इत्यमोघानन्दिनी शिक्षा समाप्ता ॥

(१) तद्धि पात्रं प्रशस्यते इति 'क' पुस्तकपाठश्च ॥

# अथ लघ्वमोघानन्दिनी शिक्षाऽऽरभ्यते ॥

पादादौ च पदादौ च सँय्योगावग्रहेषु च ॥ जः शब्द इति विज्ञेयो योऽन्यः स य इति स्मृतः ॥ १ ॥ युक्तेन मनसा तद्वत्त्वा यामि तथाऽपरम् ॥ अनूकाशेन बाह्यं च तुरीयमनुया पदे ॥ २ ॥ पदादावप्यविच्छेदे सँय्योगान्ते च तिष्ठताम् ॥ वर्ज्जयित्वा रहौ यानामीषत्स्पृष्टत्वमिष्यते ॥ ३ ॥ विदद्यदी, न्यमित्राँश्च रोचनास्य यथा भवेत् ॥ तथा पार्य्याय सूर्य्यश्च मुह्यन्त्वन्ये समूह्यत् ॥ ४ ॥ उपसर्गपरो यस्तु पदादिरपि दृश्यते ॥ ईषत्स्पृष्टो यथा विद्यात्पदच्छेदात्परो भवेत् ॥ ५ ॥ विभाषया यकारस्य नित्यमाम्रेडितेऽपि च ॥ यत्र यत्रेति मा यज्ञं तथा येति पदादपि ॥ ६ ॥ अथातऽउत्तरो यः स्यात्तथा नेति पदात्परः ॥ भवन्त्येतेऽपि पूर्वंच तथा च स पदादपि ॥ ७ ॥ अथा वयमादित्यादावथोयेऽअस्य दृश्यते ॥ न यत्परो यथा च स्यात्स पदे तदुदाहृताः ॥ ८ ॥ वो वां वा वै वि वौ पाठे उपसर्गात्परो लघुः ॥ अथ मा स न शब्देभ्यो विभाषाऽऽम्रेडिते यवौ ॥ ९ ॥ यदेव लक्षणं यस्य वकारस्यापि तद्भवेत् ।

यत्र यत्र विशेषः स्यात्तदिदानीं तु कथ्यते ॥ १० ॥ त्वदर्थवाचिनौ वो वां, वा वै यदि निपातजौ ॥ आदेशाश्च विकल्पार्था ईषत्स्पृष्टाश्च ते स्मृताः ॥ ११ ॥ देवो वः सविता या वां, व्वातो वेति तथा न तत् ॥ तत्र व्वायष्टतस्मते तानऽ आवेति कीर्तिताः ॥ १२ ॥ यत्कृतं सूत्रकारेण तद्वत्स्यात्सम्प्रसारणम् ॥ तज्ज्ञेयं सर्वशाखासु न तु वाजसनेयिनाम् ॥ १३ ॥ लक्षणस्य विरोधेऽपि पाठैक्यं यदि दृश्यते ॥ तत्तथा प्रतिपत्तव्यँय्यज्ञायज्ञा वऽइत्यथ ॥ १४ ॥ अनुस्वारो द्विमात्रः स्याद्दवर्णव्यञ्जनोदये ॥ ह्रस्वाद्वा यदि वा दीर्घाद्देवानाꣳ हृदयेभ्यः ॥ १५ ॥ स ꣳ स्पष्टा सि ꣳ ह्यसि सँय्योगे ह्रस्व इष्यते ॥ मध्यम ꣳ श्थायेति सँय्योगो न द्विरुच्यते ॥ १६ ॥ ज्ञात्वा वेदविनाशं तु सम्यग् ब्रूयान्न वै बुधः ॥ आहूय तं विविक्ते वै तस्य धर्म्मो न हीयते ॥ १७ ॥ (१) इति श्री लघ्वमोघानन्दिनी शिक्षा समाप्ता ॥

---

(१) इदं पद्यं प्राक् शिक्षायां लिखितं तथाऽपि सम्प्रदायविदोऽत्रापि लिखन्त्यतो मया लिखितम् ॥

# अथ माध्यन्दिनमहर्षिप्रणीता शिक्षाऽऽरभ्यते ॥

मन्त्रो हीनः स्वरतो वर्णतो वा मिथ्या प्रयुक्तो न तमर्थमाह ॥ स वाग्वज्रो यजमानं हिनस्ति यथेन्द्रशत्रुः स्वरतोऽपराधात् ॥ १ ॥ स्वराद्द्वित्वमवाप्नोति व्यञ्जनं व्यञ्जने परे ॥ हरौ न यद्यचः पूर्वौ निमित्तं व्यञ्जनस्य च ॥ २ ॥ इ॒षे त्वो॒र्ज्जे त्वा॑ ॥ स्वरपूर्वाः शषसहा अन्तस्थाश्च तथा यदि ॥ निमित्तभूता द्वित्वस्य स्पर्श एव न संशयः ॥३॥ अश्म॑न् ॥ स्पर्शपूर्वा यरलवाः स्पर्शपूर्वाः शरस्तथा ॥ व्यञ्जनञ्च ततः पूर्वं द्वेधाभावं न चाप्नुयात् ॥ ४ ॥ अ॒यक्ष्मा॒ः ॥ विसर्गाच्च परः कादिर्व्यञ्जनात्किल पूर्वगः ॥ ह्रस्वपूर्वौ नङौ द्वित्वमापद्येते पदान्तगौ ॥ अपि स्वरतरावेव श्लिष्टौ भवति नान्यथा ॥ ५ ॥ विष्णो॒ः क्र्म॑÷ ॥ द॒ध्यङ्ङृ॒षि॑÷ ॥ अश्मन्नू॒र्ज्ज॑म् ॥ अत्र येन निमित्तेन द्वित्वं व्यञ्जनमश्नु॒ते ॥ द्वितीयस्य च प्रथमस्तुरीयस्य तृतीयकः ॥ ६ ॥ बा॒ह्व॒भ्याम् ॥ स्ववर्गे च परे चैवापञ्चमे परतः स्थि॒ते ॥ सवर्णे च यमे चैव ऋवर्णे न तथा शलि ॥ ७ ॥ तद्दे॒वाना॑म् । ऋद्धि॑÷ । तन्न॑÷ । अ॒ग्निः॑ । पि॒तृ॒णाम्॥

अत्र कवर्गीयखकारा निर्दिश्यन्ते ॥ आखरेष्ठाः १ । आखुस्ते । २ । मयूखैः । ३ । द्याम्मा लेखीः । ४ । ततः खनेम । ५ । उखाङ्कृणोतु । ६ । उखाम्परिददामि । ७ । खनत्ववट । ८ । दधतूखे । ९ । मित्रैतान्तऽउखाम् । १० । त्वङ्खाद । ११ । सुखादितान् । १२ । अभारुखा । १३ । गन्धर्वोऽअखनन् । १४ । आखिदते । १५ । प्रखिदते । १६ । विशिखाऽइव । १७ । श्रियै शिखा । १८ । भूम्याऽआखून् । १९ । ऋतूनामाखुः । २० । खड्गो वैश्वदेवः । २१ । नखेषु । २२ । मोखा भ्राजन्ती । २३ । उखायाः सदने स्वे । २४ । मधु शाखः । २५ । स्त्रीषखम् । २६ । शङ्खधमम् । २७ । मखस्य शिरोऽसि । २८ । मखाय त्वा । २९ । अथ गलितर्चानां निर्णयः ॥ इषे त्वा एदम् । अश्मन्वस्थूपरः । समिद्धोऽअञ्जन् । सहस्रशीर्षा पुरुषः । तदेव । स्वाहा प्राणेभ्यस्त्वैष्वध्यायेषु न गलिता ऋचः ॥ १ ॥ द्वितीयेऽध्याये अग्ने व्रतपते इति प्रविष्टास्त्रयस्त्रिंशत् । २ । तृतीयेऽयमग्निः पुरीष्यऽइति प्रविष्टा द्वाषष्टिः । ३ । पञ्चमेऽग्ने व्रतपाऽउरु विष्णोऽइति प्रविष्टे एकचत्वारिंशत् । ५ । षष्ठे प्रथमा ऋग्गलिता रेवतीरमध्वमित्यतः परा देवस्य त्वान्तः पञ्चविंशत् । ६ । वाच-

स्पतये स्वाङ्कृतोऽसि आत्मने मे अग्ने नयायन्नो लु-
प्ते चतुश्चत्वारिंशत् । ७ । आदित्येभ्यस्त्वेत्यत्र कदा
चन सँव्वर्चसा देवा गातुविद ऽ उदुत्यमवभृथ निचु-
म्पुण मिलिता अष्टपञ्चाशत् । ८ । देव सवितरित्यत्र
देवस्याहं एकोनचत्वारिंशत् । ९ । अपो देवा इत्यत्र
सोमस्य त्विषिरिमं देवा इति लुप्ते द्वात्रिंशत् । १० ।
युञ्जानः प्रथममित्यत्र युञ्जते देव सवितः पृथिव्याः
सधस्थाद्वसवस्त्वाच्छृन्दन्तु मिलिताऽष्टसप्ततिः । ११ ।
दृशानो रुक्मऽ इत्यत्र हꣳ सः शुचिषदक्रन्ददग्निरीशा-
नो रुक्मः समिधाग्निं सहरय्या पुनरूर्ज्जाऽ अयन्ते
भवतन्नऽअष्टोत्तरशतम् ॥ १२ ॥ मयि गृह्णामीत्यत्रा-
ग्निर्म्मूर्द्धाऽपाम्पृष्ठम्मही द्यौर्व्विष्णोः कर्म्माणि चित्रं दे-
वानां त्रिपञ्चाशत् ॥ १३ ॥ ध्रुवक्षितिरित्यत्र शुक्रश्च
व्विश्वकर्म्मा त्वा द्वे नभश्चेषश्चेति पञ्चविंशतिः ॥१४॥ अ-
ग्ने जातानित्यत्राग्नेर्मूर्द्धा त्वामग्ने पुष्कराङ्गुवो यज्ञ-
स्यायमिहायन्ते लोकं पृण ताऽअस्येन्द्रँव्विश्वा नवैता
लुप्यन्ते परमेष्ठी त्वाद्वे मिलिते चतुःपञ्चाशत् ॥ १५ ॥
नमस्ते इत्यत्र नीलग्रीवा द्वितीया नमोऽस्तु द्वे मिलिता-
स्त्रयस्त्रिषष्टिः ॥ १६ ॥ अश्मन्नूर्ज्जमित्यत्र हिमस्य त्वा-
व्वाचस्पतिं विश्वकर्म्मंन्हविषोदुत्त्वाऽइन्द्रँव्विश्वा न
वोषासाऽग्नेत्वं सप्त द्वानवतिः ॥ १७ ॥ व्वाजश्चेत्यत्र

व्वाजस्य नु देवस्य त्वा यास्ते या वऽउद्‌बुध्यस्व येन व्वह-
सि व्विनस्त्वँय्यविष्ठेत्यष्टमिलिता एकोनसप्ततिः । १८ ।
स्वाहीन्त्वेत्यत्र व्वायोः पूतः कुविदङ्गेति द्वे त्रिनवतिः ।१९।
च्चवस्य योनिरित्यत्र समुद्रे ते उताप: पुत्रमिव पितरौ
निषसाद यदि जाग्रद्यदापो यदि द्दिवेति यद्ग्रामे सु:
मित्त्रियानो यत् सुरामं नवैकाशीतिः ॥ २० ॥ इममि
इत्यत्र तत्त्वा शन्नो व्वाजेवाजेऽवत होतायक्षदिन्द्रम्ब-
षभस्य सरस्वतीमेषस्येति प्रविष्टाः सप्तपञ्चाशत् ॥२१॥
तेजोऽसीत्यत्र तत्सवितुर्व्विश्वो देवस्य ष्टथिव्यै स्वाहा म-
घवे स्वाहा व्वाजाय स्वाहाऽसवे स्वाहेति प्रविष्टाऽएक-
विंशतिः ॥२२॥ हिरण्यगर्भऽइत्यत्र कः स्वित्सूर्य्यऽएका-
की का स्विद्द्यौरासीत्प्रजापते न सप्तपञ्चाशत् ॥२३॥
शादन्दद्भिरित्यत्र हिरण्यगर्भः सँय्यः प्राणतोऽग्ने
त्वं चतुश्चत्वारिंशत् ॥ २५ ॥ अग्निश्चेत्यत्र व्वैश्वा-
नरो नः पञ्चविंशत् ॥ २६ ॥ समास्त्वेत्यत्र उ-
द्वयं चतुश्चत्वारिंशत् ॥ २७ ॥ होता यक्षदित्यत्र दे-
वा दैव्या होतारा शुचिसुष्मिाहानन्तरं सर्वे लुप्ता
अन्त्स्त्रिपञ्चाशत् ॥ २८ ॥ देव सवितरित्यत्र तत्सवि-
तुर्विंशत् ॥ ३० ॥ अस्याजरासऽइत्यत्र युद्वा हि अय-
मिह मूर्द्धानन्दिवऽऊर्द्धुत्त्यं विश्वेऽअद्येन्द्रवायूऽइमे यज्ञो
देवानां गावऽउप दैव्यावध्वर्य्यूऽअद्भेभिः सवितः सप्ता-

शीतिः। ३३। यज्जाग्रतऽइत्यत्राष्टपञ्चाशन सप्तपञ्चाश-त्। ३४। अपेतऽइत्यत्राश्वत्थे वः सुमित्रिया नऽउदय-मग्नऽआयूꣳषीत्यष्टादश। ३५। ऋचँवाचमित्यत्र भू-र्भुवः कया नः कस्त्वा स्योना पृथिव्यापोहिष्ठेति त्रि-र्नमस्ते हरसे सुमित्रिया नोऽभीषुणो हते हꣳह्मेति त्रयोदश। ३६। देवस्य त्वेत्यत्र देवी द्यावापृथिवीन्द्र-स्यौजोऽस्यस्य त्वेयत्यग्ने हृदे त्वा युञ्जते मनः प्रैतु म-खस्य शिरस्त्रयोदश। ३७। द्वितीयदेवस्य त्वेत्यत्र सु-मित्रिया न ऽउदयमेधो ऽसीड ऽएह्यदित्यै रास्नासीन्द्रा-यत्वा षड्द्वाविंशतिः। ३८। ईशा वास्यमित्यत्रान्धन्त-मोऽन्यदेवासम्भूतिमिलितास्त्रयोऽग्नेनय त्रयोदश। ४०। एवं चतुष्षष्ट्युत्तरशतं लोपाः। एकादशोत्तर मष्टादशशतैः सहेति॥ इति प्रथमा माध्यन्दिनीयशि-क्षा समाप्ता॥

---

# अथ द्वितीया लघुमाध्यन्दिनीय-शिक्षा प्रारभ्यते ॥

---

अथ शिक्षां प्रवक्ष्यामि माध्यन्दिनमतँय्यथा ॥ षकारस्य खकारः स्याट्टुकयोगे तु नो भवेत् ॥ १ ॥ इषे लक्ष्यं कृष्णोऽखा समुद्रः प्रत्युदाहृतिः ॥ पदादौ विद्यमानस्य ह्यसँय्युक्तस्य यस्य च ॥ २ ॥ आदेशो हि जकारः स्याद्युक्तः सन्तूहरणेन तु ॥ यज्ञेन यज्ञं वैलक्ष्यं मयूरे प्रत्युदाहृतिः ॥ ३ तस्माद्यज्ञात्सर्व्वहुतः समस्माद्यत्तथैव च ॥ रेफेणाथ हकारेण युक्तस्य सर्वथा भवेत् ॥ ४ ॥ सूर्य्यो बाह्यन्तु वै लक्ष्यं शष्प्याय प्रत्युदाहृतिः ॥ यकारकोरयुक्तस्य जकारः सर्वथा भवेत् ॥ ५ ॥ सहरय्या तथा व्यृद्ध्या चोपसर्गपरस्य न ॥ उपयच्छन्मानुषाणामपि यन्तीत्युदाहृतिः ॥ ६ ॥ गुरुर्व्वकारो विज्ञेयः पदादौ पठितो भवेत् ॥ विभ्राडुदाहृतिर्ज्ञेया सवितान्तर्लघुः स्मृतः ॥ ७ ॥ पदान्ते वै लघुतरस्तव वायष्टतस्पते ॥ उपसर्गपरो यस्तु सवकारो लघुर्मतः ॥ ८ ॥ वो वां वा वै मन्त्रपाठे लघवो गुरवः पदे ॥ प्रवायुमच्छा बृहती वातो वेति निदर्शनम् ॥ ९ ॥ रेफो रेकत्त्वमाप्नोति शषहेषु परेषु च ॥

दर्दर्शं वर्षो ऽग्रर्हाँश्च सँय्योगे नैव कारयेत् ॥ १० ॥ व्वर्ष्मन्वर्ष्यीयान्तर्हंदा तत्र तावदुदाहृतिः ॥ लकारो ऽपि च सावर्ण्यादेकारसदृशो भवेत् ॥११॥ शतवल्शाः च वल्हा च तत्र तावदुदाहृतिः ॥ अनुस्वारो यत्र कुत्र ठँ०कारो भवति ध्रुवम् ॥ १२ ॥ ह्रस्वो दीर्घो गुरुश्चेति त्रिविधः परिकीर्त्तितः ॥ ह्रस्वात्परो भवेद्दीर्घो हठँ०स ऽइति दर्शनम् ॥१३ ॥ दीर्घात्परो भवेद्ध्रस्वो मा ँ से-ध्यऽइति दर्शनम् ॥ गुरौ परे ह्यनुस्वारो गुरुरेव हि स स्मृतः ॥ १४ ॥ सि ँ ह्यसीति तत्र तावत्ककारे दी-र्घऽएव सः ॥ देवाना ँ हृदये तद्वत्तस्कराणां तथा सृके ॥ १५ ॥ अथायोगवाहानाह ॥ अवर्णाच्च ऋका-राच्च विसर्गः कण्ठ्य एव सः ॥ इवर्णाच्च तथोवर्णात्तथा चैकारपूर्वकः ॥१६॥ औकारपूर्वकश्चैव तालव्यो भवति-ध्रुवम् ॥ एकाराच्च कण्ठतालुर्विसर्गो भवति ध्रुव-म् ॥ १७ ॥ कण्ठोष्ठ्यस्तु तथौकाराद्विसर्गो भवति ध्रु-वम् ॥ देवो वः सविता चात्र हकारसदृशो भवेत् ॥ १८ ॥ देवीस्तिस्रो विसर्गस्तु हिकारसदृशो भवेत् ॥ आखुस्ते पशुरित्यादौ हुकारसदृशो भवेत् ॥ १९ ॥ विसर्गस्त्वाग्नेरित्यादौ हेकारसदृशो भवेत् ॥ विसर्गो बाह्वोरित्यादौ होकारसदृशो भवेत् ॥ २० ॥ अथ स्वैहंचैरित्यादौ हिकारसदृशो भवेत् ॥ विसर्गो द्यौ-

ष्पितेत्यादौ ङकारसदृशो भवेत् ॥ २१ ॥ इकारो नैव मन्तव्य इति शास्त्रव्यवस्थितिः ॥ फणिनिश्श्वाससदृशो विसर्गो भवति ध्रुवम् ॥ २२ ॥ कनिष्ठिका मोचनं तु नीचे च प्रचये सति ॥ नमः कूप्याय प्रथमो द्वितीयो नाग्रतस्तथा ॥ २३ ॥ तर्जनीमोचनं कुर्य्यादुदात्ते तु विसर्गके ॥ देवो घर्म्मस्तथा ह्रस्वे स्वरिते तूभयं क्षिपेत् ॥ २४ ॥ अश्श्वो मर्त्यो भवेल्लच्यं स्वारे दीर्घे कनिष्ठिकाम् ॥ उभयोरपि ह्रस्वे च वकारे स्वरिते सति ॥ २५ ॥ दीर्घे ऽपि चोभयोः चेपऽइति शास्त्रव्यवस्थितिः ॥ यथा स्फटिकदण्डादिरुपाधिवशतो भवेत् ॥ २६ ॥ तद्वदूष्मा प्रयोक्तव्यो ह्निङ्ह्नो निदर्शनम् ॥ व्वसोः पवित्रं वै तत्र ह्युदाहरणमुच्यते ॥ २७ ॥ ऋकारः खलु सर्वत्र ह्येकारसदृशो भवेत् ॥ हृदे त्वगस्तृतीया च ऋचँव्वाचमथापरम् ॥ २८ ॥ इति लघुमाध्यन्दिनीयशिक्षा समाप्ता ॥

---

# अथामरेशनिर्म्मिता वर्णरत्नप्रदी-
# पिका शिक्षा प्रारभ्यते ॥

श्रेयो दिशतु नः कृष्णः कंसमातङ्गकेसरी ॥ राधा-
केलिकलाऽभिज्ञो गोपीवादकुतूहली ॥ १ ॥ उत्पन्नो
यः श्रुते वंशे बुद्धिमान्कृतनिश्चयः ॥ अमरेशइति ख्या-
तो भारद्वाजकुलोद्वहः ॥ २ सोऽहं शिक्षां प्रवक्ष्या-
मि प्रातिशाख्यानुसारिणीम् ॥ बालानां पाठशुद्ध्यर्थं
वर्णज्ञानादिहेतवे ॥ ३ ॥ जपादिशुभकार्य्येषु पुमान्ना-
धिकृतो भवेत् ॥ सम्यक्पाठं विना यस्मात्तं निमित्तं व-
दाम्यहम् ॥ ४ ॥ स्वरसंस्कारयोर्व्वेदे नियमः कथितो
यतः ॥ ततो विचार्य्य वक्तव्यो वर्णसङ्घातऽउत्तमः ॥ ५ ॥
मन्त्रो यः स्वरतो हीनो वर्णतो वाऽपि कुत्र चित् ॥
निष्फलं तं विजानीयात्तथैवाशुभसूचकम् ॥ ६ ॥ वेदस्या-
ध्ययनाद्धर्म्मः सम्प्रदानात्तथा श्रुतेः ॥ वर्णशोऽक्षरशो
ज्ञानाद्विभक्तिपदशोऽपि च ॥ ७ ॥ स्वरो वर्णोऽक्षरं
मात्रा तत्प्रयोगाऽर्थऽएव च ॥ मन्त्रं जिज्ञासमानेन
वेदितव्यं पदे पदे ॥ ८ ॥ स्थानं च करणं मात्रा स-
म्यगुच्चारणं तथा ॥ यो न वेद स निर्लज्जः पठामीति

कथं व्वदेत् ॥ ९ ॥ अथ प्रथमतो वर्णसञ्ज्ञाऽधिक्रियते मया ॥ यया विना न सिद्ध्यन्ति व्यवहारा नृणामिह ॥ १० ॥ एकविंशतिरुच्यन्ते स्वराः शब्दार्थचिन्तकैः ॥ द्विगुणानि व्यञ्जनानि ह्येतावान्वर्णसङ्ग्रहः ॥ ११ ॥ ऋपर्य्यन्ताः स्वरास्त्रेधा ऌकारो ह्रस्वएव च ॥ सन्ध्यक्षराण्यह्रस्वानि ते चैवमेकविंशतिः ॥ १२ ॥ ककारादिमकारान्ताः स्पर्शाः स्युः पञ्चविंशतिः ॥ चतस्रो यादयोऽन्तस्था ऊष्माणः शषसाः (१) सहाः ॥ १३ स्पर्शानां पञ्चमैर्य्योगे चत्वारश्च यमाः स्मृताः ॥ अनुस्वारो विसर्गश्च जिह्वामूलीयऽएव च ॥ १४ ॥ उपध्मानीय इति च द्विस्स्पृष्टश्च तथाऽपरः ॥ द्विस्स्पृष्टता च विज्ञेया डढयोः स्वरमध्ययोः ॥ १५ ॥ पदकाले वियुज्येत द्विस्स्पृष्टो न भवेत्तदा ॥ सव्यञ्जनः सानुस्वारः शुद्धो वाऽपि स्वरोऽक्षरम् ॥ १६ ॥ चतुर्णां पञ्चमैर्य्योगे उत्पद्यन्ते यमाश्च ये ॥ कुँ खुँ गुँ घुँ इति च ते चत्वारोनात्र पञ्चमः ॥ १७ ॥ वर्गाणां प्रथमौ द्वौ द्वावूष्माणश्च हवर्जिताः ॥ जित्सञ्ज्ञा भवन्त्येते शेषा धिसञ्ज्ञकाः स्मृताः ॥ १८ ॥ शषसा मुत्समाख्याता अवर्णः कण्ठ्यसञ्ज्ञकः ॥ सिम्सञ्ज्ञका ऋपर्य्यन्ता भावी स्यात्कराद्यवर्ज्जितः ॥ १९ ॥ अन्त्यादवर्णाद्विवेद्वर्णः पूर्वः स उ-

---

(१) हकारसहिता इत्यर्थः ॥

प्रध्माभिधः ॥ एताः सञ्ज्ञा बुधैर्ज्ञेया व्यवहारप्रसिद्धये ॥ २० ॥ ललहजिह्वामूलभवोपध्मानीयस्तथैव च ॥ नासिक्याश्च तथा चास्मिन्वर्णा वर्ज्याः सदैव हि ॥ २१ ॥ एकमात्रो भवेद्ध्रस्वो द्विमात्रो दीर्घ उच्यते ॥ त्रिमात्रस्तु प्लुतो ज्ञेयो व्यञ्जनं चार्द्धमात्रिकम् ॥ २२ ॥ तदर्द्धमणु तस्यार्द्धं परमाण्वभिधीयते ॥ वर्णग्रहे सवर्णोऽपि सङ्ख्या स्पर्शेषु कीर्त्तिता ॥ २३ ॥ अथ वर्णसमाम्नाये स्थानं करणसंयुतम् ॥ आत्मशक्त्या प्रवक्ष्येऽहं तच्चान्तव्यमघं बुधैः ॥ २४ ॥ अष्टौ स्थानानि वर्णानामुरः कण्ठशिरस्तथा ॥ जिह्वामूलं च दन्ताश्च नासिकोष्ठौ च तालु च ॥ २५ ॥ हकारः पञ्चमैर्युक्तो योऽन्तस्थाभिरथाऽपि वा ॥ औरस्यं तं विदुः प्राज्ञाः कण्ठ्यं शुद्धं प्रचक्षते ॥ २६ ॥ ऋवर्णोऽथ कवर्गश्च जिह्वामूलीय एव च ॥ जिह्वामूले भवन्त्येषां जिह्वामूलं चकारणम् ॥ २७ ॥ इवर्णोऽथ चवर्गश्च एऐकारौ यशैः सह ॥ तालुस्थाना भवन्त्येषां जिह्वामध्यं तु कारणम् ॥ २८ ॥ षकारोऽथ टवर्गश्च मूर्द्धन्याः परिकीर्त्तिताः ॥ जिह्वायाः प्रतिवेष्ट्याग्रमेतेषां कारणं स्मृतम् ॥ २९ ॥ लृलसिताः स्मृता दन्त्या जिह्वाग्रकरणा हि ते ॥ रेफश्च दन्तमूलोत्थो जिह्वाग्रेण विधीयते ॥ ३० ॥ उवर्णोऽथपवर्गश्च ओऔकारौ तथा च वः ॥ ओष्ठ्या एते

स्मृता वर्णा उपध्मानीय एव च ॥ ३१ ॥ समानस्थानकरणा नासिक्यौष्ठ्याः प्रकीर्त्तिताः ॥ वकार ओष्ठसम्भूतो दन्ताग्रकरणः स्मृतः ॥ ३२ ॥ अवर्णश्च विसर्गश्च हकारश्चापि केवलः ॥ कण्ठ्या वर्णाः स्मृता ह्येषां हनुमध्यं तु कारणम् ॥ ३३ ॥ यमानुस्वारनासिक्या नासामूलभवा दृष्टा ॥ मुखनासिकाकरणोऽनुनासिकइति स्मृतः ॥ ३४ ॥ पूर्वा मात्रा तु कण्ठ्यस्य एकारौकारयोर्भवेत् ॥ तालव्यस्य तथौष्ठ्यस्य परा प्रोक्ता यथा क्रमम् ॥ ३५ ॥ ऐकारौकारयोश्चैवं तत्त्वं ज्ञेयं विचक्षणैः ॥ एऐ तु कण्ठ्यतालव्यौ ओऔ कण्ठोष्ठजौ स्मृतौ ॥ ३६ ॥ एतद्वर्णसमाम्नायस्थानं करणसँय्युतम् ॥ ज्ञातव्यं तन्मया प्रोक्तं शास्त्रतत्त्वार्थदर्शनम् ॥ ३७ ॥ यद्यद्यस्य भवेत्स्थानं करणं वा विशेषणम् ॥ सवर्णत्वेन सङ्ग्राह्य आस्ययत्नस्तु भिद्यते ॥ ३८ ॥ संवृतं विवृतं तद्वदस्पृष्टं स्पृष्टमेव च ॥ ईषत्स्पृष्टं चार्द्धस्पृष्टमास्ययत्नस्तु षड्विधः ॥ ३९ ॥ अकारः संवृतो ज्ञेयो विवृतास्त्वितरे स्वराः ॥ अस्पृष्टास्यप्रयत्नाश्च स्वराः सर्व्वे भवन्ति हि ॥ ४० ॥ स्पृष्टाः स्पर्शास्तु विज्ञेया अन्तस्था ईषदुत्स्पृशः ॥ अर्द्धस्पृष्टाश्च विज्ञेया ऊष्माणो वर्णवेदिभिः ॥ ४१ ॥ ऋलोर्मध्ये भवत्यर्द्धमात्रा रेफलकारयोः ॥ तस्मादस्पृष्टता न स्यात्सम्भवे ऋलृकारयोः ॥ ४२ ॥ द्वि-

मात्रस्यैकमात्रस्य सँवृतादिप्रयत्नतः ॥ भिन्नस्याप्यस्तु सावर्ण्यं तदर्थमिदमुच्यते ॥ ४३ ॥ अथातोऽवरतो वच्मि चर्चां पूर्वपराङ्गयोः ॥ स्वारप्रयोजना चासौ वेदितव्या विचक्षणैः ॥ ४४ ॥ सँय्योगस्यादिभूतो यः स पूर्व्वाङ्गं भवेद्यथा ॥ अश्वः भ्राववसँय्योगे भ्रः पूर्व्वाङ्गः भ्रवोऽन्यतः ॥ ४५ ॥ यमस्य पूर्वस्याङ्गं स्याद्वकारात्पूर्व्वसंय्युतः ॥ रुक्मः पूर्वस्य कयमावुत्तरस्य तु मः स्मृतः ॥४६॥ सँय्योगादिपरद्वित्वे पूर्व्वाङ्गं क्रमजं यथा ॥ पार्श्वं रभ्रौ तु पूर्वस्य परस्य शवयात्मकम् ॥ ४७ ॥ क्रमजाच्चोत्तरं स्पर्शे परे पूर्व्वाङ्गकँय्यथा ॥ पार्ष्ण्यां पूर्व्वस्य रषषाः परस्याङ्गं णयात्मकम् ॥ ४८ ॥ यद्व्यञ्जनं च यस्याङ्गं तत्तेन सस्वरं भवेत् ॥ एतदर्थमिदं प्रोक्तं स्वारसन्देहभेदकम् ॥ ४९ ॥ अनुस्वारो विसर्गश्च नासिक्योऽथ यमास्तथा ॥ जिह्वामूलमुपध्मा च नवैते स्युः पराश्रयाः ॥ ५० सँय्योगवाह्या एवैते निजस्वरविवर्जिताः ॥ पूर्व्वस्याङ्गं भवन्त्येते स्वर एतेषु पूर्ववत् ॥ ५१ ॥ स्वरभक्तिश्च पूर्व्वाङ्गं देवम्बर्हिरुदाहृतिः ॥ इकारे च तथोकाकारे तां यत्नेन विवर्ज्जयेत् ॥ ५२ ॥ रेफो वाऽथ लकारो वा यत्रोष्मणि स्वरोदये ॥ स्वरभक्तिर्भवेत्तत्र पूर्व्वमाक्रम्य पठ्यते ॥ ५३ ॥ ऊष्मणामुपरिस्थस्तु रेफो याति रेवर्णताम् ॥ रेफत्वं पुनरायाति यद्यूष्माणोऽन्य-

सँय्युता: ॥ ५४ ॥ ऊष्मणां स्वरभक्तिस्तु द्विभीवं बाधते यथा ॥ व्वर्षो व्वर्षीयसि ह्वार्षोच्छतवल्शोऽपि सिध्यति ॥ ५५ अष्टौ स्वरान्प्रवक्ष्यामि तेषामेव च लक्षणम् ॥ जात्योऽभिनिहितः क्षैप्रः प्रश्लिष्टस्तदनन्तरम् ॥ ५६ ॥ तैरोव्यञ्जनऽएवाथ तैरोविराम एव च ॥ पादवृत्तस्ततस्तद्वत्ताथाभाव्यस्तथाऽष्टमः ॥ ५७ ॥ एकपदे निपूर्वस्तु सयवो जात्यदृष्यते ॥ अपूर्वोऽपि परस्तद्वद्वान्यं कन्या स्वरित्यपि ॥ ५८ ॥ सप्तोदात्तादयो ज्ञेया परेऽभिनिहितादयः ॥ चयो नीचपरास्तत्र प्रश्लिष्टान्तं निदर्शनम् ॥ ५९ ॥ एओ आभ्यामुदात्ताभ्यामकारो नीच एव च ॥ लुप्यते सन्धिकार्य्ये यत्तं चाभिनिहितं विदुः ॥ ६० ॥ तेऽप्सरसां च तेऽवन्तु व्वेदोऽसीति तथोऽस्यपि ॥ इउ वर्णावुदात्तौ चेदनुदात्तस्वरोदयौ ॥ ६१ ॥ यवाभ्यां चैव सँयुक्तौ तदा क्षैप्रः स्वरो भवेत् ॥ व्वाज्यर्व्वं त्र्यम्बकँय्यदद्धव्नो योजान्विन्द्रेति च ॥ ६२ ॥ उभः पूर्व्वः परो नीच इकारोऽन्योऽन्यसङ्गतः ॥ प्रश्लिष्टः सस्वरो ज्ञेयः स्रुचीवाभीन्धताँय्यथा ॥ ६३ ॥ उदात्तपूर्वो यत्र स्यान्नीचो व्यञ्जनसँय्युतः ॥ स तैरोव्यञ्जनइति स्वरो भवति तद्यथा ॥ ६४ ॥ इडे रन्ते हव्ये काम्ये चन्द्रे ज्योते निदर्शनम् ॥ उदात्तावग्रहो यत्र स तु तैरोविरामकः ॥ ६५ ॥ स्वरो ज्ञेयः पदेऽन्यत्र तैरोव्य-

व्यञ्जनएव तु॥ यथा गोपताविति गोपतौ यज्ञपतिस्त-
था॥ ६६॥ स्वरयोरन्तरे यत्र विवृत्तिर्य्यदि दृश्यते॥
स पादवृत्त इत्याख्यः काईमरे निदर्शनम्॥ ६७॥ उ-
दात्तादिरुदात्तान्तो नीचोऽवग्रह एव च॥ तथाभा-
व्यो भवेत्कम्पस्तनूनप्त्रे निदर्शनम्॥ ६८॥ माध्यन्दि-
नविरोधी स्यात्तथाभाव्यस्तु यः स्वरः॥ भिन्नो यतो-
ऽत्र दृश्येते तावुदात्तानुदात्तकौ॥ ६९॥ तस्मान्माध्य-
न्दिनीयानां पदे कम्पो विधीयते॥ तथोक्तमौज्जिहा-
यनकैर्माध्यन्दिनानुसारिभिः ७०॥ अवग्रहो यदा नी-
चप्रोच्चयोर्म्मध्यतः क्वचित्॥ तथाभाव्यो भवेत्कम्पस्तनू-
नप्त्रे निदर्शनम्॥ ७१॥ जात्याभिनिहितक्षैप्रप्रश्लिष्टाः
स्वरिता इमे॥ नीचपूर्वा यदा त्वेते तिर्य्यक्स्वारस्तदा
भवेत्॥ ७२॥ जात्योऽभिनिहितः क्षैप्रः प्रश्लिष्टश्च च-
तुर्थकः॥ एते स्वराः प्रकम्पन्ते दृष्ट्वोदात्तं पुरः स्थित-
म्॥ ७३॥ यथा व्वरुणः पस्त्या स्वा युद्धोऽस्माकन्त-
थाऽपरम्॥ परमेष्ठ्यभिधीतोऽभीममित्यादि निदर्श-
नम्॥ ७४॥ नीचपूर्वोदात्तपरः स्वरोऽसौ प्रणिहन्यते॥
अन्यथा नीचएव स्यात्स्वर्णं घर्म्मादिकँय्यथा॥ ७५॥
स्वरितादनुदात्तं यत्तत्सर्वं प्रचयाह्वयम्॥ स्यादुदात्त-
मयं चैव त्वामद्येत्यादिकँय्यथा॥ ७६॥ तिर्य्यक्स्थान-
गते ह्रस्वेऽनुदात्तो दृश्यतेऽपरः॥ प्रचितं तँव्विजानी-
यादुदात्तं स्वरमाप्नुयात्॥ ७७॥ जात्यं दृष्ट्वा ततः

पश्चात्प्रचितो दृश्यते यदि ॥ तन्तु तत्रैव निर्वर्त्य पश्चा-द्धस्तं प्रचालयेत् ॥ ७८ ॥ नोदात्तस्वरितात्पूर्वं प्रचितं स्यादुदात्तवत् ॥ कृत्वानुदात्तमथ तमुदात्तस्वरमाचरेत् ॥ ७९ ॥ यथा स्यात्स्वरितात्स्वारो व्वाजे वाजेऽवतेति च ॥ स्वरितोदये सेनानी ग्रामण्यौ, सहस्राय च॥ ८० ॥ तैरोव्यञ्जनवज्ज्ञेयो जात्योऽभिनिहितः प्रश्लः ॥ यथा धान्यं कन्या इव व्वेदोऽसीति तथोऽस्यपि ॥ ८१ ॥ व्वत्सरोऽसि भवेत्तद्वदाज्ज्यर्व्वंश्च स्रुचीव च ॥ उदात्तस्वरितपरप्रचितस्यापि नित्यशः ॥ ८२ ॥ भवेन्नीचतरादेशो वैयाकरणसम्मतः ॥ स्वरिताद्वाऽनुदात्ताद्वा उदात्तो दृश्यते यदि ॥ ८३॥ शून्यं प्रचालयेद्धस्तं स्वरितात्स्वरितेऽपि च ॥ शून्यं प्रचालयेद्धस्तं यदुक्तं केन चित्क्वचित् ॥ ८४ ॥ तत्स्वातीयविरोधी स्यात्सम्प्रदायविरोधकृत् ॥ उक्तं च याज्ञवल्क्येन मन्त्रे वाजसनेयके ॥ ८५ ॥ स्वर उच्चः स्वरो नीचः स्वरः स्वरित एव च ॥ स्वरप्रधाने त्रैस्वर्य्यँ व्यञ्जनं तेन सस्वरम् ॥ ८६ ॥ मणिवद्व्यञ्जनान्याहुः सूत्रवत्स्वर इष्यते ॥ व्यञ्जनान्यनुवर्त्तन्ते यत्र तिष्ठति सस्वरः ॥ ८७ ॥ वर्णेषूच्चार्य्यमाणेषु विकाराः स्युस्त्रयस्तनोः ॥ आयाममार्द्दवौ चोभौ तृतीयश्चाभिघातकः ॥ ८८ ॥ गात्रस्योच्चमधस्तिर्य्यग्गमनं स्याद्यतः क्रमात् ॥ तत्रोदात्तेऽनुदात्ते च

स्वरिते च प्रकीर्त्तितम् ॥ ८६ ॥ उभयवांश्च स्वरित एकीभावेऽन्ययोर्भवेत् ॥ यथा पत्थ्येव चम्वीव ब्रह्माऽसृज्यत स्त्वये ॥ ९० ॥ अथोदात्तोनुदात्तस्य स्वरितस्यापि सङ्गमे ॥ उदात्त एकी भवति षट् प्रकारः स नान्यथा ॥ ९१ ॥ द्वयोस्तु स्वरयोस्सन्धावेकीभावो यदा भवेत् ॥ तदा नीचोऽप्युदात्तस्य वशं गच्छति सान्वयः ॥ ९२ ॥ उदात्तयोरथैकत्वे भवेदुदात्तएव च ॥ स पुरस्तात्परस्ताद्वा यथा स्वात्प्राप्यंयत्विति ॥ ९३ ॥ एमे तन्नैजति परं विश्वाभ्यस्त्वा पुनस्तथा ॥ नाभिरस्याथ मेऽङ्गानि जयन्तन्त्वां तथैव च ॥ ९४ ॥ पाणिनोऽति देवाऽगात्पूर्व्वोऽगाद्बर्हिराऽसदत् ॥ आऽरुहा माऽदधुरास्याद्विद्यादेवं निदर्शनम् ॥ ९५ ॥ अस्यापवादरूपं यदुदाहरणमुच्यते ॥ आख्यातानां प्रयोगेषु पूर्वं पदमुपस्थितम् ॥ ९६ ॥ षोडशाक्षरपर्यन्तं तद्योगि स्वरमुद्धरेत् ॥ याँ २ ॥ ऽ आऽवक्षो यदाबद्न्यो नः पिता तथाऽपरम् ॥ ९७ ॥ यत्पुरुषँ व्यदधुश्च विद्यादेवं निदर्शनम् ॥ जात्यपूर्वोदात्तपरो ह्युञ्चो भवति नित्यशः ॥ ९८ ॥ यथाऽद्यूरयेऽवसेऽपि स्याज् ज्ञातव्यं स्वरवेदिभिः ॥ स्वर्व्वीय स्वरितपरोदात्तपूर्वो यथा भवेत् ॥ ९९ ॥ स्वरितोदात्तयोः सन्धावुदात्तो बलवान्स्मृतः ॥ हित्वाऽभिनिहितक्षैप्रप्रश्लिष्टांस्त्रीनिमान्स्वरा-

न् ॥ १०० ॥ क्षीद्दध्यथानुदात्तपूर्वोदात्तपरो यथा भवेत् ॥ स्वर्व्याय स्वरितपरोदात्तपूर्व्वः पदे यथा ॥ १०१ ॥ सर्वतीक्ष्णो ऽभिनिहितः प्रश्लिष्टस्तदनन्तरम् ॥ ततो मृदुतरौ स्वारौ जात्यक्षैप्रावुभौ स्मृतौ ॥ १०२ ॥ ततो मृदुतरः स्वारस्तैरोव्यञ्जनउच्यते ॥ पादवृत्तो मृदुतरस्त्वेतत्स्वारबलाबलम् ॥ १०३॥ द्वयोस्तु स्वरयोस्सन्धौ स्वरितः स्यात्परो यदि ॥ उदात्तस्यान्तस्थीभावे प्रोच्यते त्र्यम्बकँय्यथा ॥ १०४ ॥ योजान्न्विन्द्र क्षीड्वङ्को द्वन्नः सर्प्पिस्तथाऽपरः॥ नियमः स्वरसन्धेस्तु समाप्तो विदुषां प्रियः॥१०५॥अथाऽतः संस्कारविधिः कथ्यते यो मयाऽधुना ॥ लोपागमौ विकारश्च प्रकृत्या भवनं तथा ॥ १०६ ॥ ज्ञातव्यो निपुणैरेवं संस्कारोऽसौ चतुर्विधः॥ स्वरयोर्वा हलोर्वाऽपि स्वरव्यञ्जनयोस्तत॥१०७॥ ते नोऽवन्त्वय देवासऽएदमापोऽअपान्नपात् ॥ देवानऽआयुः प्राङ्क् सोमस्तन्नश्चिकित्वान्वँय्यथा॥ १०८ ॥ प्रथमात्तु हकारोऽयं तच्चतुर्थत्वमाप्नुयात् ॥ उद्वर्षयावाड्ढव्यानि स्रग्यमेवं निदर्शनम् ॥ १०९ ॥ आद्यः स्वरे तृतीयत्वं घोषवत्सु त्वपञ्चमः ॥ अघोषे प्रथमत्वं वा उदेनं यज्ञामे अपि ॥ ११० ॥ पदान्ताः प्रथमा वर्णाः परतोः स्वरघोषिणोः ॥ भजन्ते स्वतृतीयत्वं स्वोत्तमत्वं यथोत्तमे ॥ १११ ॥ आद्योत्तमाः पदान्तीयास्त्ववर्गे प-

रिहाय च ॥ स्युर्व्वरमहाँस्तन्मित्रस्य विन्द्यादेवं निदर्शनम् ॥ ११२ ॥ कखयोः परयोर्न्नित्यं पफयोः परयोरपि ॥ विसर्गस्य यदुक्तन्तल्लक्षणान्नात्र सिद्ध्यति ॥ ११३ ॥ सयि वः कामधरणं ततः खनेम चाऽप्यथ ॥ अग्निः पशुर्य्याः फलिनीर्विद्यादेवं निदर्शनम् ॥ ११४ ॥ अस्वनिष्पारसमरीर्दीर्घाऽष्पिता च वसुष्कविः ॥ आविष्कृणुष्वेव तथा पर्से वो व्यसतिष्कृता ॥ ११५ ॥ एव मादौ विसर्गस्य षत्वमिच्छन्ति सूरयः ॥ पूर्वोक्तस्यापवादोऽयं ज्ञातव्यः कृतबुद्धिभिः ॥ ११६ ॥ कण्ठ्योपधः सकारः स्याद्भाव्युधः ष एव च ॥ अघोषे घोषवति तु लोपो रेफो यथाक्रमम् ॥ ११७ ॥ इडस्पदेडायास्पदं ज्योतिष्कृदिष्कृतिस्तथा ॥ तन्न ऽइन्द्रोऽयच्छा मा हविर्हीतन्निदर्शनम् ॥ ११८ ॥ भाव्युधः षत्वमेति वर्जयित्वा क्रषीस्कृधिम् ॥ प्रत्ययस्य सवर्णत्वं यातीति शाकटायनः ॥ ११९ ॥ अविकारं च शाकल्यो मन्यते शषसेषु च ॥ आसुः शिशानो वृषभो देवोवः सविता तथा ॥ १२० ॥ अदितिः षोडशेत्यादिर्विज्ञेयोदाहृतिर्विदा ॥ पदान्ताः प्रथमा वर्णाः शषसेषु परेषु तान् ॥ १२१ ॥ शौनको द्वितीयानिच्छेत्प्रकृत्या शाकटायनः ॥ असमानस्थलस्थांश्चेच्छौनकोऽपि वदेत्तदा ॥ १२२ ॥ सम्यक्स्रवन्ती वट्सूर्य्यानुष्टुप्शारद्यथापरम् ॥

तत्त्ववित्तुश्च तत्सत्यन्द्वितीयं नात्र कर्हि चित् ॥ १२३ ॥ असस्थानस्थितत्त्वाच्च तैलाणां तु न तन्मतम् ॥ पदान्तस्य तवर्गस्य चवर्गे परतः स्थिते ॥ १२४ ॥ चवर्गः स्यात्तकारस्य चछयोः शागमः स्मृतः ॥ शकारश्छत्वमाप्नोति तवर्गात्स्पर्शवर्ज्जितः ॥ १२५ ॥ तच्चच्छुरुज्जिह्वानाञ्च तच्छ्केयमतः परम् ॥ बृहच्छोचा यविष्ठ्येति वाजाञ्जयत्त्वथापरम् ॥ १२६ ॥ तकारस्य पदान्तस्य शकारे परतः स्थिते ॥ चवर्गपञ्चमत्वं स्यान्नच्छादेशे तु शागमः ॥ १२७ ॥ स्वधावाञ्छुक्रः पिशङ्गाञ्छिशिरायेति वै तथा ॥ आदित्याञ्श्मश्रुभिन्नीत्र छत्वं स्यात्स्पर्शशङ्कया ॥ १२८ ॥ दधन्वान्स्ववान्यकारे नकारो लोपमाप्नुयात् ॥ पीवोऽअन्नान् रयिवृधे परे वाऽपि तथा पुनः ॥ १२९ ॥ स्वराणामानुनासिक्यं प्रतिजानन्ति सर्वतः ॥ वर्ज्जयित्वा तमाकारं(१) मकारो यत्र लुप्यते ॥ १३० ॥ उपधारञ्जनं कुर्यात्स्वरे विकरणे सति ॥ लोपे प्रकृतिभावे च नोपधारञ्जनं भवेत् ॥ १३१ ॥ पदान्तस्थो नकारो यः सोऽनुनासिकपूर्वकः ॥ लकारे लत्वमाप्नोति शसत्वं चतकारयोः ॥ १३२ ॥ यथाऽस्मिँल्लोके चीँल्लोकानहीँश्च सर्वानप्युत ॥ गवयाँस्त्वष्ट्रे पशूँस्ताँश्चक्रे चैव निदर्शनम् ॥ १३३ ॥ स्पर्शे परे नका-

(१) यत्र लोपो विधीयते । इति 'ग'पुस्तकपाठः ॥

रस्य विकारो नोपलभ्यते ॥ चतौ विज्ञाय तत्राऽपि प्र-
कृत्या भवनं क्वचित् ॥ १३४ ॥ यथाऽस्मिन्नमीष्ठेऽङ्क्क-
र्म्मे देवान्दिवमथापरम् ॥ पशून्नपाहीति जानीयान्न-
कारस्यैकरूपताम् ॥ १३५ ॥ धामन्ते पतयिष्णवर्व्वन्
शत्रूनाढि तथाऽपरम् ॥ मित्र सहश्चिकित्वान्त्वम्पूषन्तव
व्रते तथा ॥ १३६ ॥ मदिन्तमानां च मधुन्तमानां
तद्विते तमे ॥ निर्व्वंगन्त्वान्तमसि च न विकारो भवे-
दिह ॥ १३७ ॥ एते निपातसिद्धत्वान्न विकारमवा-
प्नुयुः ॥ नॄन्पकारे विसर्गत्वमुपधारञ्जनं लभेत् ॥
१३८ ॥ शत्रून्क्रतून्वनस्पतीन्परिधीँश्च चतुर्थकम् ॥ स्व-
रे रेफत्वमाप्नोति नासिक्यं चोपधा तथा ॥ १३९ ॥ अ-
नुस्वारस्य रोष्मसु मकारस्येति यो विधिः ॥ पदयो-
रन्तरे सः स्यात्पदमध्ये तु नस्य च ॥ १४० ॥ यथाऽपा-
ऌ रसं चैव त्वाऌ शश्वन्तऽएव च ॥ यजूऌषि तपूऌषि-
ष्वर्ठ०हीति निदर्शनम् ॥ १४१ ॥ पदान्तीयमकारस्य
त्वन्तस्थाः परतो यदि ॥ नासिक्यमुपधापूर्वं सोऽन्त-
स्थात्वमवाप्नुयात् ॥ १४२ ॥ सँय्यौमि संव्वपामीति तँ-
ल्लोकं च यथा भवेत् ॥ अपदान्तस्य रेफे न यद्दम्नोऽ-
प्रतिसर्प्पति ॥ १४३ ॥ एकमात्रो द्विमात्रः स्यात्त्रिमा-
त्रान्मात्रिको यथा ॥ त्वर्ठ० सोम हवीऌषि सऌस्रष्टा
न संय्युजि ॥ १४४ ॥ अनुस्वारो द्विमात्रः स्यादवर्ण

व्यञ्जनोदयः ॥ ह्रस्वाद्वा यदि वा दीर्घाद्द्वेवानार्ठ० हृदये यथा ॥ १४५ ॥ मकारः प्रत्यये स्पर्शे भवेत्तद्वर्गपञ्चमः ॥ व्रजङ्गच्छ ब्रूतञ्चरिष्यामि ग्रगडस्तथा पुनः ॥ १४६ ॥ एतन्नेदम्पितृव्यस्य यच्छन्ताम्पञ्च वै यथा ॥ संयोगादिः स्वराद्वृद्धित्वं प्राप्नोतीति विदुर्बुधाः ॥ १४७ ॥ तत्पदान्तपदाद्योर्वा पदमध्येऽपि सर्वतः ॥ सम्यक्स्रवन्ति सरितः सन्धौ तु पदयोर्यथा ॥ १४८ ॥ अनुष्टुप्प्रभारदी तद्वत्प्रथमस्तु द्विरुक्तिजः ॥ मध्येऽश्वस्तूपरो यद्वदश्वस्य त्वा तथाऽपरम् ॥ १४९ ॥ अस्वरान्न भवत्येतत् अधि अत्कर्संवद्यथा ॥ परं रेफहकाराभ्यां व्यञ्जनं तूष्मवर्ज्जितम् ॥ १५० ॥ द्वित्वमापद्यते रेफहकारौ तु न कुत्र चित् ॥ यथा सूर्य्योऽथ सर्व्वेभ्यो बाह्वोर्गृह्णामि चैव हि ॥ १५१ ॥ ऊष्माणो रेफसङ्क्रान्ता न द्विः स्युश्चेत्स्वरोदयाः ॥ यथाऽर्शसदुपचितां वर्षो वर्षीयसीति च ॥ १५२ ॥ सहस्रशीर्षा पुरुषो देवम्बर्हिर्य्यथा स्मृतम् ॥ अन्तस्थाभिर्य्यदा युक्ता ऊष्माणो रेफपूर्व्वकाः ॥ १५३ ॥ व्वर्ष्यीय चान्तः पार्श्व्यञ्च रेफाद्द्वित्वं भजन्ति ते ॥ ऊष्मान्तस्थापरः स्पर्शो द्वित्वमापद्यते यथा ॥ १५४ ॥ अश्मन्नूर्जं सस्नितमं धिष्ण्या राष्ट्रं च गृह्णते ॥ यकारात्स्पर्शसँयोगो नोपलभ्येत कुत्र चित् ॥ १५५ ॥ ग्रत्मसि-

स्व दधिक्राऽव्णः पुरुराऽव्णस्तथैव च ॥ यदि चास्वरपूर्वाः स्युरूष्माणान्तस्था न तत्परः ॥ १५६ ॥ स्पर्शो द्वित्वमवाप्नोति स्थालीभिर्द्दिवः स्कम्भनीः ॥ यत्र चोभयतः स्पर्शैः संय्युक्ताः शषसाः सहाः ॥ १५७ ॥ तत्र नाद्यः क्रमो ज्ञेयो नापरो बोधितो बुधैः ॥ पक्ष्माणि वाऽथ सूक्ष्मा च विश्वप्सन्या च तथा पुनः ॥ १५८ ॥ नेदृशेषु द्विरुक्तिः स्यादिति प्राहुर्मनीषिणः ॥ जिह्वामूलीयतः स्पर्श उपध्मानीयतस्तथा ॥ १५९ ॥ सऽद्रधानो व्यसुष्क्रविद्यौष्पितेत्यादिकँय्यथा ॥ विसर्जनीयाच्च परो यः स्पर्शो व्यञ्जनोदयः ॥ १६० ॥ सोऽपि द्वित्वमवाप्नोति युञ्जानः प्रथमँय्यथा ॥ सकारस्य द्विरुक्तिर्या सा द्वयोरेव नान्यतः ॥ १६१ ॥ स्रा च शास्त्रा च रास्वेयत्सकारोऽत्र द्विरुक्तितः ॥ ह्रस्वपूर्वा ङनौ स्यातां पदान्तौ द्विः स्वरोदयौ ॥ १६२ ॥ युङ्ङ्सीति तथा चाग्मन्नूर्जमित्यादिकँय्यथा ॥ प्रथमैस्स्ववर्गीयैर्द्वितीया द्विर्भवन्ति हि ॥ १६३ ॥ तृतीयैस्तु चतुर्थास्स्युर्विकख्यायाजिग्घकँय्यथा ॥ उखग्रं सख्यं च मुख्यं च वर्जयित्वा पदत्रयम् ॥ १६४ ॥ ख्याधातोः खययोः स्यातां कशौ गार्ग्यमते यथा ॥ विक्ख्याऽऽक्शातमित्येतन्माध्यन्दिनविरोधकृत् ॥ १६५ ॥ विकख्याय कखया युक्तास्खया श्राच्छ्यतीति वत् ॥ गोष्ठानं षटढा एवं पाठ्यं तथ

यसँय्युतम् ॥ १६६ ॥ ष्विष्प्फुरन्ती च षपफा युक्ता-श्चैवं चतुर्थकाः ॥ आजिग्घ्रगघरायुक्ता मीड्ढ्वश्च ड्ढवास्तथा ॥ १६७ ॥ अद्ध्नो दधवाश्चैवं ष्विब्भाड् ड्भरसँय्युतम् ॥ ऋवर्णे न द्विरुक्तिः स्यात् ङनकारौ विहाय च ॥ १६८ ॥ लृवर्णेऽपि तथैव स्यात् क्लृप्तं चानिष्टृतँय्यथा ॥ अवसानस्थितं चापि व्यञ्जनं न द्विरुच्यते ॥ १६९ ॥ ऊर्क्क् सूनृता पदे एवं संहितायां न वार्य्यते ॥ स्वरात्परश्छकारस्तु सर्वत्र द्वित्वमाप्नुयात् ॥ १७० ॥ यस्यातिहाय सहेति पदत्रयपरं विना ॥ द्विरुक्तिं वर्ज्जयेन्नित्यं यमेऽपि परतः स्थिते ॥ १७१ ॥ सक्थ्ना देदिश्यते नारी ककारोऽत्रैकऽएव हि ॥ यमे परे निषेधस्तु पुनर्द्वित्वनिवारकः ॥ १७२ ॥ ये रुक्कमप्राप्य्मप्रभृतिप्राज्ञस्तेषां मनीषिणाम् ॥ सँय्योगादिश्च पूर्व्वाङ्गं यमस्येति विरोधकृत् ॥ १७३ ॥ तस्माद्यदुक्तं तत्साधु नत्वन्यत्कल्पनाक्षमम् ॥ अपञ्चमात्पदे नित्यं पञ्चमेषु परेषु च ॥ १७४ ॥ यमोत्पत्तिर्भवेत्तत्र रुक्क्मः प्राप्य्मा निदर्शनम् ॥ स्वरात्संय्योगपूर्व्वस्य द्वित्वाज्जातो द्वितीयकः ॥ १७५ ॥ तस्यैव यमसञ्ज्ञा स्यात्पञ्चमैरन्वितो यदि ॥ स्पर्शानां पञ्चमैर्य्योगे चत्वारो ये यमाः स्मृताः ॥ १७६ ॥ अयस्मिण्डेन ते तुल्या घनवत्स्थाः प्रकीर्त्तिताः ॥ यमास्तदा निवर्त्तन्ते ऊष्म-

मध्ये भवेद्यदि ॥ १७७ ॥ ऊर्णापिण्डेन ते तुल्याः
पार्श्वैस्तमन्व्या निदर्शनम् ॥ स्पर्शाऽपञ्चमा ये च अ-
न्तस्थाभिश्च सँय्युताः ॥ १७८ ॥ दारुपिण्डेन ते तु-
ल्याः स्तथबन्धाः प्रकीर्त्तिताः ॥ अपञ्चमे स्ववर्गीये न
प्राग्वर्णो द्विरुक्तिभाक् ॥ १७९ ॥ तद्देवानां च यद्दे-
वाऽन्तरिक्षम्पुरीतता ॥ ईड्यवाड्नीनसावेतावुद्रश्चापि
तथैव च ॥ १८० ॥ चरद्द्रव्यस्य वचनो द्वित्वं नैवात्र
विद्यते ॥ चचट्टचस्तथा श्वित्र चित्र सत्र तथैव च ॥१८१॥
यत्र तत्र पदेष्वेषु व्यञ्जनं न द्विरुच्यते ॥ उपोत्थित-
मुत्तम्भनमुत्तभानोत्थिताय च ॥ १८२ ॥ उत्थाय बृ-
हती चैषु त्रयः स्पर्शा भवन्ति हि ॥ वर्णं द्विवर्णसँय्योगे-
एकवर्णवदुच्यते ॥ १८३ ॥ स्वरमध्ये सजातीये वि-
जातीये द्वयोः श्रुतिः ॥ कुक्कुटोऽसि तथा तन्नऽआज्ज्यं
भुज्ज्युः श्रुतिर्द्वयोः ॥ १८४ ॥ स्पर्शात्परककारस्य
स्फोटनं दोषकृन्न वा ॥ अत्राचार्य्याश्रयाद्वित्वं स्फो-
टनं द्वित्वनाशनम् ॥ १८५ ॥ अयस्पिण्डेन तत्तुल्यं
तस्मादुच्चारणं तथा ॥ काण्डात्काण्डाद्वषट्कृतं यक्ष्-
क्ष्मोमादिकँय्यथा ॥१८६॥ स्ववर्गीयैस्तु सँय्योगः स्पर्शा-
नां सम्भवेद्यदि ॥ तत्पूर्वस्य श्रुतिर्नास्ति विरामव्य-
ञ्जनस्य च ॥ १८७ ॥ द्वितीयाश्च चतुर्त्थाश्च वर्णाः सो-
ष्माण एव हि ॥ यदैते पञ्चमैर्य्युक्ता वायुः सम्पृते

मुखात् ॥ १८८ ॥ तं धारयेत्प्रयत्नेन घनबन्धं समुच्च-रेत् ॥ सक्थ्ना दद्ध्मस्तथा दद्ध्मा अघ्न्या इति निद-र्शनम् ॥ १८९ ॥ स्वराः सँय्योगपूर्व्वा ये व्यञ्जनान्ता-स्तथान्तगाः ॥ एषां कालो द्विमात्रः स्यान्न तु दीर्घा हि ते स्मृताः ॥ १९० ॥ यथाऽग्निर्द्यूर्य्यथा त्विष्णुः प्रत्यङ् दद्याङ् ऋषिस्तुतम् ॥ याहि पाहि रक्ष मधु विद्यादेवं निदर्शनम् ॥ १९१ ॥ व्यञ्जनान्तस्य मोक्षः स्यात्करणस्थानतः पदे ॥ अन्यदन्यप्रयत्नेन पदमारभ्य-ते बुधैः ॥ १९२ ॥ अन्यथा तु पदादौ च द्वित्वमाप-द्यते ध्रुवम् ॥ सँय्यौमि सँव्वपामीति इमम्मेति निदर्श-नम् ॥ १९३ ॥ अर्द्धर्चादेः समाप्तौ च मोक्षणं तु वि-धीयते ॥ पादश्छन्दोऽनुरोधेन एकद्वित्रिचतुष्पदः ॥ १९४ ॥ अप्यनेकपदैः क्वाऽपि दृश्यते पादपूरणम् ॥ ह्रदि स्पृशं यथैकस्मिन्पदे स्यात्पादपूरणम् ॥ १९५ ॥ क्रतोर्भद्रस्य द्विपदं क्रतुन्न भद्रमित्यतः ॥ अग्ने त्वन्नोऽअन्तमस्य विद्यात्पादचतुर्विधम् ॥ १९६ ॥ वि-धूममग्नेऽनेकपदमेवमादिनिदर्शनम् ॥ ङनकारौ प-दान्तीयौ मकारे परतः स्थिते ॥ १९७ ॥ कताभ्यां व्यवधीयेते प्राङ्ङ्क्सोमस्य यथा तथा ॥ प्रत्यङ्ङ्क्सोम-स्तीन्न्त्समुद्रानस्मान्न्त्सीते निदर्शनम् ॥१९८॥ "ऋकारे प्रत्यये कण्वः पाठे ह्रस्वत्वमाप्नुयात् ॥ स्वाहऽऋषभमि-

न्द्रोऽथ विश्वकर्म्माऽऽर्षिस्तथा ॥ १९९ ॥ येनऽऋषय-ऽइत्यत्र यच्चऽऋषयऽइत्यपि ॥ ह्रस्वे ह्रस्वविधानँय्यत्त-त्सन्धिविनिवर्त्तकम् ॥ २०० ॥ एओ ऐऔ तु चत्वारः क्रमादेव स्वरे परे ॥ अयवायावतां यान्ति इडऽ-एहि छथानुवत् ॥२०१॥ सरस्वत्या ऽअग्रजिह्वं ताऽउभौ च यथा क्रमम् ॥ यवयोरत्र लोपः स्यात्स्वरमध्ये पदान्तयोः ॥ २०२ ॥ अयादौ यवयोर्ल्लोपे न पुनः सन्धिरिष्यते ॥ असस्थाने वकारस्य लोपन्नेच्छन्ति सूरयः ॥ २०३ ॥ पादादौ च पदादौ च सँय्योगावग्रहेषु च ॥ यः शब्दइति विज्ञेयो योऽन्यः स य इति स्मृतः ॥ २०४ ॥ युक्तेन मनसा यद्वत्त्वा यामि तथाऽपरम् ॥ अनूकाशेन बाह्यञ्च योगे योगे निदर्शनम् ॥ २०५ ॥ उपसर्गपरो यः स पदादिरपि दृश्यते ॥ ईषत्स्पृष्टो यथा वि यत्पदच्छेदे परो भवेत् ॥ २०६ ॥ यदेव लक्षणं यस्य वकारस्यापि तद्भवेत् ॥ यत्र यत्र विशेषः स्यादिदानीं स तु कथ्यते ॥ २०७ ॥ वकारस्त्रिविधः प्रोक्तो गुरुर्ल्लघुलघूतरः ॥ आदौ गुरुर्ल्लघुर्म्मध्ये पदस्यान्ते लघूतरः ॥ २०८ ॥ उपसर्ग्गपरौ यत्र यवकारौ पदादिगौ ॥ ईषत्स्पृष्टौ ततो ज्ञेयावभि युड्ढ्य उपा यथा ॥ २०९ ॥ परि वाजपतिः कविः प्रवोचं च निदर्शनम् ॥ अनु योजान्विन्द्र ते तु उप यज्ञँ-

त्विना तथा ॥ २१० ॥ त्वदर्त्थवाचिनौ वो वाँव्वा वै यदि निपातजौ ॥ आदेशाश्च विकल्पास्स्युरीषत्स्पृष्टा हि ते स्मृताः ॥ २११ ॥ देवो वः सविता या वाँव्वातो वाऽथ तथा न वै ॥ तव व्वायच्छतस्म्यतेऽस्ति वान्वा निदर्शनम् ॥ २१२ ॥ द्वैधीभावे समुत्पन्ने लक्षणान्निर्णयो भवेत् ॥ लक्षणँव्वाऽविनाशि स्यात्सम्प्रदायोऽविनाशवान् ॥ २१३ ॥ प्रमाणानुगतं वाक्यं यो मोहाद्बाधुमिच्छति ॥ प्रतिवातं स मूढात्मा पांसुं प्रक्षिपति स्वयम् ॥ २१४ ॥ कण्ठ्या वर्णोऽग्निदेवत्यास्तालव्याः सोमदेवताः ॥ जिह्वामूलीया नैर्ऋत्या रौद्रा दन्त्याः प्रकीर्त्तिताः ॥ २१५ ॥ ओष्ठ्याश्चैवाश्विना ज्ञेया वायव्या मूर्द्धसम्भवाः ॥ शेषास्तु वैश्वदेवाः स्युरिति कात्यायनोऽब्रवीत् ॥ २१६ ॥ क्रियावाचकमाख्यातमुपसर्गो विशेषकृत् ॥ सत्त्वाभिधायकं नाम निपातः पादपूरणः ॥ २१७ ॥ भारद्वाजकमाख्यातं भार्गवं नाम भाष्यते ॥ वासिष्ठ उपसर्गस्तु निपातः काश्यपः स्मृतः ॥ २१८ ॥ सर्व्वन्तु सौम्यमाख्यातं नाम वायव्यमिष्यते ॥ आग्नेयस्तूपसर्गः स्यान्निपातो वारुणः स्मृतः ॥ २१९ ॥ स्वरास्तु ब्रह्मणा ज्ञेया वर्गाणां प्रथमाश्च ये ॥ द्वितीयाश्च तृतीयाश्च चतुर्थाश्चापि भूमिपाः ॥ २२० ॥ उदात्तं ब्राह्मणं विद्याद्भारद्वाज ऋषिस्ततः ॥ गायत्रं च भवेच्छ-

न्दो नियोगो ब्रह्मसाधने ॥ २२१ ॥ नीचं तु ऋचि-यं प्राङ्गौतमोऽस्य च देवता ॥ छन्दस्त्रैष्टुभमेवास्य विनियोगोऽघनाशने ॥ २२२ ॥ स्वरितं वैश्यमेवाङ्ग-मुनिर्गार्ग्योऽस्यकीर्त्तितम् ॥ जागतं तु भवेच्छन्दो नि-योगः शत्रुनाशने ॥ २२३ ॥ एषा मन्त्ररहस्यस्य मञ्जूषो-द्घाटिता मया ॥ एतत्सर्व्वं विदित्वा तु ब्रह्मलोके महीयते ॥ २२४ ॥ अनेन विधिना वेदं योऽधीते श्रद्धया द्विजः ॥ सोऽश्वमेधसहस्रस्य फलं प्राप्नोति पुष्कलम् ॥ २२५ ॥ रहस्यं यो न जानाति लक्षणं चार्षकादिक-म् ॥ सोऽध्यापने न योग्यः स्याज्जपहोमादिकर्म्मसु ॥ २२६ ॥ अमरेशकृतामेतां शिक्षां यो धारयेत्सुधीः ॥ विद्वज्जनसभामध्ये जयं स लभते ध्रुवम् ॥ २२७ ॥ इ-त्यमरेशकृता वर्णरत्नप्रदीपिकाशिक्षा समाप्ता ॥

---

अथ केशवदैवज्ञविरचिता नवसूत्रात्मिका व्याख्यानोदाहरणयुताऽऽरभ्यते ॥ अथातः केशवीशिक्षां व्याख्यास्यामः ॥

---

नत्वा गणपतिं देवं परिभाषाङ्कसूत्रकम् ॥ उच्यते केशवेनेदं वेदाध्यायिसुखाप्तये ॥ १ ॥ तत्रादौ माध्यन्दिनीयपरिभाषा ॥ अङ्कानां नवानां सूत्राणां मध्ये येन सूत्रेण पदादिमध्यान्तवर्णेषु सञ्ज्ञा जायते तद्विना पदादिवर्णेष्वेव सञ्ज्ञा न जायते तत्रोच्यते ॥

पदादौ पूर्वाहल्वोर्द्वयोश्चारौ सम्पूर्वयोश्छन्दसि ॥ १ ॥

माध्यन्दिनीये पदादौ आद्यहल्विहीनयोर्वकारयकारयोः सम्पूर्वयोश्चाप्यनयोः क्रमाद्द्वित्त्ववकारयुकारोच्चारः स्याच्छन्दसि ॥ हल् इति व्यञ्जनम् । अस्योदाहरणानि संहितायाः प्रथमाध्याये प्रथमकण्डिकायां वायवस्थ्यऽइत्यत्र व्वायवद्दूत्युच्चारः । तथैव द्वितीयकण्डि-

कायां वसोः पवित्रमित्यत्र व्वसोः पवित्रमित्युच्चारः । प्रथमर्चि यजमानस्येत्यत्र यृजमानस्येत्युच्चारः। द्वितीयर्चि यज्ञपतिरित्यत्र यृज्जपतिरित्युच्चारः । कस्त्वा युनक्तीत्यत्र युनक्तीत्युच्चारः । सम्पूर्वकस्योदाहरणानि संहितायाम्प्रथमाध्याये देवस्य त्वेत्यृङ्मध्ये संवपामीत्यत्र सँव्वपामीत्युच्चारः । संवर्चसेत्यत्र सँव्वर्चसेत्युच्चारः । जनयत्यै त्वा सँय्यौमीत्यत्र सँय्यौमीत्युच्चारः । संयज्ञपतिरित्यत्र सँय्यृज्जपतिरित्युच्चारः । इत्यादिषु पदादित्वात्सम्पूर्वत्वाच्च यवयोर्द्वित्ववकारयकारौ स्तः । न वयकारौ इत्यादि सर्वत्र ज्ञेयम् । पदादाविति किम् । आद्यकण्डिकायां प्रजावतीरनमीवाः । प्रार्प्पयतु श्रेष्ठतमायेत्यादिषु वकारसकारयोः पदादित्वाभावान्न द्वित्ववकारयकारौ स्त इति । आद्यहलिविहीनयोरिति किम् । द्वितीयाध्याये 'अग्ने व्वाजजिद्वाजन्त्वा । तृतीयाध्याये अव रुद्रमित्यृङ्मध्ये श्रेयसस्करद्यथा न इत्यनयोर्वकारयकारयोः पदादित्वमस्त्यतो द्वित्वजकारोच्चारः । अनयोरुदाहरणयोस्तु आद्यदकारहल्युतत्वान्न द्वित्वजकारोच्चारो न द्वित्ववकारोच्चारश्चेति प्रथमसूत्रव्याख्या जकारोच्चारणार्थमन्यत्सूत्रं च प्रदर्श्यते ॥

पदान्तमध्यऋहरेफयुग्यस्य यश्च ॥ २ ॥

पदान्तमध्ये ऋकारहकाररेफैश्च युक्तस्य यस्य यो-च्चारणं छन्दसि माध्यन्दिनीये । उदाहरणानि । विंशतितमेऽध्याये प्रथमा द्वितीयैरित्येकादशकण्डिकायां सामान्यृग्भिः । द्वितीयाध्याये यम्परि धिमित्यङ्मध्ये पणिभिर्गुह्यमानइत्यत्र हकारजकारयुक्तोच्चारः । स्वे-दोऽसि येनेतिकण्डिकायां मह्यँस्वेदो भूयाः । घृता-चीस्थो धुर्य्यौ । तृतीयाध्याये उपत्वेत्यङ्मध्ये घृता-चीर्य्यन्तु हर्य्यत इत्यादिषु ऋकारहकाररेफयुक्तत्वा-ज्जकारोच्चारो न यकारः । ऋहरेफयुक्तस्येति किम् । अभिषिञ्चन्त्युत्सिञ्चन्ति । अत्र न जकारोच्चारः । कु-तः ऋहरेफयुक्तत्वाभावात् । एवमन्यत्रापि बोध्यम् ॥ इति द्वितीयसूत्रव्याख्या । सूत्रद्वयार्थे कारिकाऽपि । पूर्वाहलयोः पदादौ च वेदे सम्पूर्वयोर्द्विजौ ॥ यस्यर्ह-रेफयुक्तस्य जः पदाद्यन्तमध्यके ॥

## षः खष्टुमृते च ॥ ३ ॥

पदान्तमध्ये षकारस्य खकारोच्चारस्स्याट्टवर्गं वि-ना छन्दसि माध्यन्दिनीये । उदाहरणानि । इषे त्वो-र्जेत्वेत्यत्र खकारोच्चारो न षकारः । एवं ब्रा-ह्मणे ऽपि "इयं पृथिवी सर्वेषां भूतानामित्यत्र कवर्गी-यखकारसदृशोच्चारो न मूर्द्धन्यषकारइति । टवर्गं वि-नेति किम् । आद्ये ऋचि "श्रेष्ठतमाय कर्मणे" इत्यत्र

टवर्गयुक्तत्वात्षकारोच्चारएव न खकारोच्चारइत्यादि सर्वत्र ज्ञेयम् ॥ इति तृतीयसूत्रं व्याख्यातम् ॥

## अहल्शल्यूद्ध्र्वरेफस्य सैकारः प्राक्च ॥ ४ ॥

पदान्तमध्ये हलिवहीनशल्यूर्ध्वरेफस्य सैकारः प्रागुच्चारश्छन्दसि माध्यन्दिनीये ॥ शलिति शषसहा ज्ञेयाः । उदाहरणानि यथा । अष्टत्रिंशदध्याये सप्तदशकण्डिकायां अभीमं महिमा दिवमित्यत्र दर्शतमित्यूर्ध्वरेफस्य प्रागेव सैकारोच्चारः । दरेशतमिति न तु सोर्ध्वरेफोच्चारः । एकोनचत्वारिंशदध्याये अग्निर्ह० हृदयेनाशनिमित्यृङ्मध्ये पर्शव्येनेत्यत्र परेशव्येनेत्युच्चारः ॥ पञ्चमाध्याये "धाम्ना" इति कण्डिकायां शतवल्शो विरोह सहस्रवल्शा इत्यत्रापि रलयोः सावर्ण्याल्लस्यापि प्राक्सैकारोच्चारः, शतवलेशो विरोह सहस्रवलेशा इति न लकारयुक्तोच्चारः । वसोः पवित्रमसीति कण्डिकायां ह्वार्षीत् अत्रापि प्राक्सैकारोच्चारः ह्वारेषीत् । षकारस्योदाहरणमेव सकारस्य तत्कथं "आदेशप्रत्ययोः" । इण्कवर्गाभ्यां परस्य मूर्द्धन्यादेशइति कृत्वा रेफस्तु इसमध्ये वर्त्तते तर्हि रेफात्परो यः सकारः स मूर्द्धन्यएवेति कृत्वा षकारसकार-

योरेकमेवोदाहरणम् । आर्ष्यां संहितायां तृतीयाध्याये प्रथमर्चि बर्हिषे त्वा बर्हिरसीत्यनयोर्बरेहिषे त्वा बरेहिरसीत्येवमेवोच्चारो न तु सोर्ध्वरेफोच्चारः । त्रयोविंशत्यध्याये "केष्वन्त इत्यङ्मध्ये "एतद्ब्रह्मन्नुपवल्हामसीत्यत्र वलेह्वामसीत्युच्चारो रलयोः सावर्ण्यात् एवमादीनि ज्ञेयानि । हलिवहीनेति किम् । वसोः पवित्रमसीति कण्डिकायां "यज्ञपतिर्ह्वार्षीत् ॥ एकत्रिंशदध्याये नाभ्याऽआसीदन्तरिक्षर्ठ० शीर्ष्णोद्यौरित्यत्र हकारषकारयोर्वकारणकारहल्युक्तत्वादूर्ध्वरेफयुक्तएवोच्चारो न प्राक्सैकारोच्चारइति । शलीति किम् । इषे त्वोर्ज्जे त्वा प्रार्प्पयतु इत्यत्र शलिवहीनत्वात्सोर्ध्वरेफोच्चारो न प्राक्सैकारोच्चारइत्यादि सर्वत्र ज्ञेयम् । इति चतुर्थसूत्रव्याख्या । एतदर्थं कारिकाऽपि । षस्योच्चारः खकारः स्याट्टुं विना छन्दसि खके ॥ विह्वलशल्यूर्ध्वरेफो यः सैकारः प्राक्समुच्चरेत् ॥ ४ ॥

अनुस्वारस्य ठं० शलि रेफे च परे ह्रस्वाद्दीर्घो दीर्घाद्ध्रस्वः सँय्योगे गुरुश्च ॥ ५ ॥

पदान्तमध्ये शलि रेफे च परे अनुस्वारस्य ठं० स्याद्ध्रस्वाद्दीर्घो दीर्घाद्ध्रस्वः संयोगे च परे गुरुः स्याच्च-

न्दसि माध्यन्दिनीये। उदाहरणानि यथा । त्रिꣳश-
द्धामेति । ब्राह्मणेऽपि सर्वꣳ षडिति । द्वितीयाध्या-
ये अग्ने गृहपतऽइति कण्डिकायां भूयासꣳ सुगृह-
पतिः । तस्यामेव शतꣳ हिमाः । तृतीयाध्याये स-
न्त्वमग्नऽइति कण्डिकायां सम्प्रजया सꣳ रायस्पोषे-
णेति । प्रथमाध्याये पृथिवि देवयजन्योषध्यास्तऽइत्यृ-
ङ्मध्ये पृथिव्याꣳ शतेन पाशैः । द्वादशाध्याये सुप-
र्णोसीति कण्डिकायां यजूꣳषि नाम । द्वितीयाध्याये
एषा तऽइत्यृङ्मध्ये सस्तृवाꣳसँव्वाजजितम् । सम्बर्हिर-
ङ्क्ताꣳ हविषा । तृतीयाध्याये उभा वामिति क-
ण्डिकायां इषाꣳ रयीणाम् । एकविंशत्यध्याये होता
यक्षत्सुरेतसन्त्वष्टारमित्यृङ्मध्ये सुरया भेषजꣳ श्रिया
न मासरम् । अष्टादशाध्याये आयुर्य्यज्ञेनेत्यृङ्मध्ये
कल्पताꣳ श्रोत्रँय्यज्ञेन कल्पताम् । एकादशाध्या-
ये दꣳष्ट्राभ्याम्मलिम्म्लून । एकोनविंशतिमेऽध्याये पु-
रोडाशैर्हवीꣳष्या । तृतीयाध्याये सोमानꣳ स्वरणम् ।
सन्त्वमग्नऽइत्यृङ्मध्ये सन्त्वषीणाꣳ स्तुतेन । पञ्चमा-
ध्याये सिꣳह्यसि । एवं रेफसँय्योगे परे ज्ञेयम् । इ-
त्यादिषु क्रमेण दीर्घह्रस्वगुरूच्चाराः कर्त्तव्या न व्यस्ता-
इति । शल्रि रेफे च परे किम् । इन्द्राय भागं प्रजाव-
तीरित्यनयोरनुस्वारस्याग्रे शल्रेफाभावादनुस्वार ए-

व न ठं॰कारइति पञ्चमसूत्रं व्याख्यातम् । सूत्रार्थे कारिकाऽपि । अनुस्वारस्य ठं॰ वेदे शलि रेफे परे भवेत् ॥ ह्रस्वाद्दीर्घो दीर्घाद्ध्रस्वः सँय्योगे च परे गुरुः ॥ ५ ॥

## शर्पूर्व्वाणामृद्धीनकादिपञ्चवर्गाणां द्वित्वं विसर्गाद्रेफयुक्तानाम् ॥ ६ ॥

पदान्तमध्ये शर्पूर्वाणां ऋकारहीनकादिपञ्चवर्गाणां विसर्गात्परेषां रेफयुक्तानामेषां च द्वित्वं स्याच्छन्दसि माध्यन्दिनीये ॥ शर्इति शषसा ज्ञेयाः । उदाहरणानि यथा । द्वितीयाध्याये अस्क्कन्नमद्य देवेभ्यः । आधत्तेति मध्ये पुष्क्करस्रजम् । समिदसीत्यृङ्मध्ये कस्याश्चिदभिशस्त्यै । कृष्णोऽस्याखरेष्ठः । सूर्य्यस्त्वा पुरस्तात्पातु । उपहूतो द्यौष्प्पितोपमाम् । मयीदमित्यृङ्मध्ये दधात्त्वस्म्मान् इत्यादिषु कादिपञ्चवर्गाणामेव द्वित्वं शर्य्युतत्त्वान्न शषसानां विसर्गाद्रेफयुक्तानामुदाहरणानि युम्परिधिमित्यस्यामृचि मध्ये अग्ग्नेः प्प्रियमस्या अग्निमकण्डिकायां बृहन्तः प्प्रस्तरेष्ठाः । तृतीयाध्याये आ नऽएतु मनः पुनः क्रत्त्वे दक्षाय जीवसे । ऋकारहीनत्त्वादिति किम् । तृतीयाध्यायेऽष्टादशकण्डिकायां व्ययस्कृतं सहस्कृतम् । चतु-

विंशत्यध्याये द्वितीयकण्डिकायां बार्हस्पत्यः पृषतीति द्वितीयाध्याये द्वितीयर्चि ऊर्ध्वमन्त्वदसन्त्वा स्तृणामीत्यत्र ककारपकारतकाराणां ऋकारयुक्तत्वान्न द्वित्वमित्यादि ज्ञेयम् । एतदर्थे कारिकापि । वृकादयः पञ्चवर्गाः शर्पूर्वा गुरवश्च ते ॥ विसर्गाश्च परे तद्वद्रयुक्ताश्छन्दसि स्मृताः ॥ ६ ॥ वर्णादिज्ञापनार्थं प्रत्याहारसूत्राणि लिख्यन्ते । तथा च । अइउण् । ऋऌक् । एओङ् । ऐऔच् । हयवरट् । लण् ञमङणनम् । झभञ् । घढधष् । जबगडदश् । खफछठथचटतव् । कपय् । शषसर् । हल् । इति माहेश्वराणि सूत्राण्यणादिसञ्ज्ञार्थानि । एषामन्त्या इतः । हलन्त्यम् । उपदेशेऽन्त्यं हलित्स्यात् । आदिरन्त्येन सहेता । अन्त्येनेता सहित आदिर्मध्यगानां स्वस्य च सञ्ज्ञा स्यात् । यथाऽणिति अइउवर्णानां सञ्ज्ञा । एवमच् हल् अलित्यादयः प्रत्याहारा ज्ञेयाः । कस्य वर्णस्य पुनः किं स्थानमित्यपेक्षायामाह । अकुहविसर्जनीयानां कण्ठः । इचुयशानां तालु । ऋटुरषाणां मूर्द्धा । ऌतुलसानां दन्ताः । उपूपध्मानीयानामोष्ठौ । ञमङणनानां नासिका च । एदैतोः कण्ठतालु । ओदौतोः कण्ठोष्ठम् । वकारस्य दन्तोष्ठम् । जिह्वामूलीयस्य जिमूलम् । नासिकाऽनुस्वारस्य । अचः स्वराः । ✕क-

इति जिह्वामूलीयः । ≍ पइत्युपध्मानीयः । अं इत्यनुस्वारः । अः इति विसर्जनीयः इति ज्ञेयम् । पाणिनीयसूत्रे अपि द्वित्वविधायके भवतः । तथाहि । अनचि च । अचः परस्य यरो द्वे वा स्तो नत्वचि । अचो रहाभ्यां द्वे ॥ अचः पराभ्यां रेफहकाराभ्यां परस्य यरो द्वे वास्तः । पाणिनीयद्वित्वसूत्रद्वयोदाहरणानि प्रथमाध्याये द्वितीयर्चि पृथिव्व्यसि मातरिश्श्वनो घर्म्मोऽसि व्विश्श्वधाऽअसि । दृठं॰ हस्व माह्वार्म्मा ते इत्यादि सर्वत्र ज्ञेयम् । इति षष्ठसूत्रव्याख्यानम् । एतदर्थं कारिकाद्वयमपि । पाणिनीयस्य सूत्राभ्यां द्वित्वं सर्वत्र कीर्त्तितम् । ऋटं विना कादयः पञ्च यपूर्व्वा द्वित्वमाप्नुयुः ॥ ७ ॥ विसर्गाच्च परे ते रेफयुक्तास्छन्दसि स्मृताः ॥ पाणिनीयप्रातिशाख्यसूत्रैर्द्वित्त्वं प्रकीर्त्तितम् ॥ ८ ॥

## न सोऽव्योश्च ॥ ७ ॥

पदान्तमध्ये वकारयकारयोः परयोः सकारस्य द्वित्वं न स्याच्छन्दसि माध्यन्दिनीये । उदाहरणानि यथा । द्वितीयाध्याये द्वितीयर्चि स्तृणामि स्वासस्त्थाम्भुवपतये स्वाहा । प्रथमाध्याये शर्म्मास्यवधूतठं॰ रक्षः । धृष्टिरस्यपाग्ने इत्यादिषु सकारस्य यवयोः परयोर्न्न द्वित्वम् एवं सर्वत्र ज्ञेयम् । इति सप्तमसूत्र

व्याख्यानम् ॥

## हल्युतायुतस्योः सैकारश्च ॥ ८ ॥

पदान्तमध्ये हल्युतायुतस्य ऋकारस्य ऋवर्णस्य सैकारइवोच्चारः स्याच्छन्दसि माध्यन्दिनीये । उदाहरणानि यथा द्वितीयेऽध्याये कृष्णोऽसीत्यत्र क्रैष्णोऽसीत्युच्चारो न ऋकारः । अग्नये इत्यृङ्मध्ये पितृमते इत्यत्र पित्रे मते स्वाहेत्युच्चारः । तृतीयाध्याये अयन्नो योनिर्ऋत्विय इत्यृङ्मध्ये रेत्विय इत्युच्चार इत्यादि सर्वत्र ज्ञेयम् । इत्यष्टमसूत्रव्याख्या सूत्रार्थे कारिकाऽपि । यवयोः परयोः सस्य द्वित्त्वं न स्यात्तु छन्दसि ॥ ऋकारो हल्वियुग्युग्वा सैकारश्छन्दसि स्मृतः ॥ ६ ॥

## ह्रस्वं किञ्चिद्दीर्घं हल्युताकारे हहल्विसर्गयुग्वर्णे च न संहितायाम् ॥ ९ ॥

पदान्तमध्ये च ह्रस्वत्वस्य किञ्चिद्दीर्घोच्चारः स्याद्धल्युतायुत आकारे परे हल्विसर्गयुग्वर्णे च परे न स्याद्वाजसनेयसंहितायाम् । अस्योदाहरणानि यथा संहितायां प्रथमाध्याये प्रथमर्चि इषे त्वोर्जे त्वा वायवस्थ देवो वइत्यादिषु इकारयकारस्याकारा ह्र-

स्वाः । अत एषां किञ्चिद्दीर्घोच्चारो न तु ह्रस्वता । सविताऽत्र तकारहल्युत आकारोऽग्रे तिष्ठति । अतः सकारविकारयोर्ह्रस्वतैव । इष्ठं॰ह्रस्व मा ह्वार्म्मोते । प्रार्प्पयतु । अत्र पकारयकारयोः किंचिद्दीर्घता । श्रेष्ठतमाय अत्र मकारयुतआकारो ऽग्रेस्ति । अतः टकारतकारयोर्ह्रस्वतैव । अत्र यकारस्य किञ्चिद्दीर्घता । कर्म्मण ऽआप्या । अत्र मकारणकारयोर्हल्युताकारोऽग्रेऽस्ति । अतो ह्रस्वावेव । यद्भमग्हन्या अत्र ध्वस्य कीञ्चिद्दीर्घता । इन्द्राय भागं प्रजावतीः अत्र यकारमकारयोरग्रे हल्युत आकारोऽग्रेऽस्ति अतो ह्रस्वावेव । वस्य किञ्चिद्दीर्घता । रनमीवाऽअयक्ष्मा मा वस्तेनऽईशत इत्यादिषु रेफनकाराकाराणां किञ्चिद्दीर्घोच्चारः । ईशत मा" अत्र हल्युत्तरआकारोऽग्रेऽस्ति । अतः शतयोर्ह्रस्वतैव ॥ माऽघशर्ठं॰ सो ध्रुवा ऽअस्मिन्नगोपतौ स्यात बह्वीः । अत्र घकारपकारतकाराणां किञ्चिद्दीर्घता । यजमानस्येत्यत्र मयुतआकारोऽग्रेऽस्ति । अतो ह्रस्वतैव यजयोः स्यस्य च किञ्चिद्दीर्घता पशून्पाहि । अत्र पकारहिकारयोः किञ्चिद्दीर्घोच्चारः । द्वितीयाध्याये मित्रावरुणौ त्वोत्तरतइत्यत्र वकाररुकारयोः किञ्चिद्दीर्घता । तकाररेफयोर्हलिवसर्गयुग्वर्णोऽग्रेऽस्ति । अतो ह्रस्वतैव न दीर्घोच्चारः ।

प्रतिज्ञासूत्रे "ईषद्दीर्घता च भवति"। एकमात्राकालापेक्षया किञ्चिदधिककालमुच्चारणीयः सार्द्धकमात्रिकः कालइत्यर्थः। अतएवार्ष्यां संहितायां दीर्घपाठेऽमुकोऽध्यायइति लिखितमाचार्य्यैः। इत्यादि सर्वत्र ज्ञेयम्॥ सूत्रार्थं कारिकाऽपि। ह्रस्वं दीर्घं भवेत्किञ्चित्संहितायां परो न चेत्॥ हलसंयुतायुताकारश्चावर्णो हलिविसर्गयुक्॥ १०॥ नवानामपि सूत्राणां परिमताः कारिकास्त्विमाः॥ केशवेन कृतास्ताः स्युर्वेदाध्ययनबोधिकाः॥ ११॥ परिभाषाङ्कसूत्रं च याजुर्वेदं सकारिकम्॥ दैवज्ञकेशवेनेदं कृतं हस्तस्वरान्वितम्॥ १२॥ ह्रस्वोदात्तादिभिर्भेदैः सहस्तस्वरलक्षणम्॥ शिक्षादिभिः षडङ्गैश्च विज्ञेयं वेदपाठकैः॥१३॥ इति श्रीदैवज्ञकेशवकृता प्रतिज्ञासूत्रानुसारिणी केशवीशिक्षा समाप्ता॥

---

# अथ तत्कृता पद्यात्मिका शिक्षा ॥

अनुदात्तादुदात्तश्चेत्स्वरितोत्तर एव च ॥ हृच्छिरः कर्णमूलेषु न्यसेद्धस्तमसंशयम् ॥ १ ॥ अनुदात्तादुदात्तश्चेदनुदात्तपरस्तथा ॥ अनुदात्तं हृदि न्यस्योदात्तं वामभ्रुवि न्यसेत् ॥ २ ॥ पुनर्हृदि न्यसेन्नीचमिति शास्त्रव्यवस्थितिः ॥ प्रचितोच्चारणे न्यासो हस्तस्य नासिकाग्रतः ॥ ३ ॥ जात्योऽभिनिहितः क्षैप्रः प्रश्लिष्टो व्यञ्जनस्थिरः ॥ तैरोविरामः पादवृत्तस्ताथाभाव्यस्तथाऽष्टमः ॥ ४ ॥ एतेषां लक्षणान्याहुः कात्यायनमुनीश्वराः ॥ तत्र जात्यादिसञ्ज्ञानां चतुर्णां दर्शने करम् ॥ ५ ॥ तिर्य्यग्व्यङ्गमयेद्धीमान्पितृदानवदेव हि ॥ मनुष्यदानमिव चेदुदात्तः प्रत्ययः स्वरः ॥ ६ ॥ आद्यान्तस्यस्य जोच्चारः पदादौ पठितस्य च ॥ उपसर्गपरो यस्तु यस्य छन्दसि नेष्यते ॥ ७ ॥ पदस्याद्यन्तमध्ये स्यादृरहैः सँय्युतस्य च ॥ द्विर्भावे ऽप्येवमेव स्यादिति कात्यायनश्रुतिः ॥ ८ ॥ अन्तस्थानां द्वितीयस्य सैकारोच्चारणं भवेत् ॥ अयुक्तहलिभः शषसैर्ऋकारेण युतस्य च ॥ ९ ॥ एवमेव तृतीयस्य शषसैः सँय्युतस्य च ॥ सैकारोच्चारणं कुर्यादिति शास्त्रव्यवस्थितिः ॥ १० ॥

ऋकारस्य च सँय्युक्तासँय्युक्तस्यापि सर्वतः ॥ सैकारो-च्चारणं कुर्य्याल्लृकारस्य तथा भवेत् ॥ ११ ॥ अथ चान्तस्थास्त्रिविधं गुरुमध्यमलघुत्वयोच्चारः ॥ वा-क्यस्यादिममध्यान्त्यस्य प्रादिकपरस्य लघ्वेव स्यात् ॥ १२ ॥ वो वां वा वै मन्त्रे लघवो गुरवः पदे च विज्ञे-याः ॥ देवो वः सविताऽऽदौ ह्यग्यमुदाहरणमन्येषा-म् ॥ १३ ॥ असँय्युतस्य मूर्द्धन्योष्मणः खोच्चारणं म-तम् ॥ टुम्हते सँय्युक्तस्यापि कस्य योगे ष एव हि ॥१४॥ छन्दसीत्येव खोच्चारो लोके प्रकृतिरिष्यते ॥ अनु-स्वारस्य ठं॰कार आदेशश्छन्दसि स्मृतः ॥ १५ ॥ ऊ-ष्मरेफेषु परतस्तस्य त्रैविध्यमुच्यते ॥ ह्रस्वाद्दीर्घोद्दीर्घ-ह्रस्वो गुरौ च परतो गुरुः ॥ १६ ॥ ऋकारपरऊष्मा-न्त्ये दीर्घोद्दीर्घोऽपि जायते ॥ परसवर्णे ह्यनुस्वारस्ये-षत्प्रकृतिरुच्यते ॥ १७ ॥ अणुमात्रमनुस्वारो ह्युत्त मं चाणुमात्रकम् ॥ शषसे च कखपफे विसर्गाः सन्ति यत्र च ॥ १८ ॥ वाचो विरामः कर्त्तव्यस्तत्रेषच्छ्रुतिचो-दनात् ॥ सँय्युक्तस्य पदाद्यस्य चाकारस्य प्रतीयते ॥ १९ ॥ ईषद्दीर्घतयोच्चारः कात्यायनमुनेर्गिरा ॥ आस्ति-कस्य मुनेर्वंशे जातो दैवज्ञगोकुलः ॥ २० ॥ तत्सुतेन केशवेन कृता सम्यक् शुभाप्तिनाम् ॥ प्रीत्यर्थं सुधियां कारिकावली निर्म्मला शुभा ॥ २१ ॥ इति श्री आ-

स्तिकमहर्षिवंशोद्भवदैवज्ञगोकुलचन्द्रसुतदैवज्ञकेशवरामकृता कारिकावली सम्पूर्णा ॥

---

# अथ मल्लशर्म्मकृता शिक्षाऽऽरभ्यते ॥

नत्वा गणपतिं देवं ध्यात्वा श्रीकुलदेवताम् ॥ मल्लशर्म्मा हस्तपूर्वां करोमि स्वरप्रक्रियाम् ॥ १ ॥ नत्वा-विघ्नहरं सदा शुभकरं सर्वस्य कामप्रदं स्मृत्वा श्रीगुरुपादुकां सुललितां ध्यात्वा परां देवताम् ॥ वेदे वाजसनेयके त्वधिकृता विप्राश्च ये सत्तमास्तेषामेव कृते कृता न कुधियां हस्तस्वरप्रक्रिया ॥ २ ॥ अथ साधारणनियमः, तथा प्रातिशाख्ये मनुः । ब्रह्मणः प्रणवं कुर्य्यादादावन्ते च सर्वदा ॥ स्रवत्यनोङ्कृतं पूर्वं परस्ताच्च विशीर्यते ॥ ३ ॥ तथा उत्तानपाणिं फणवत्कृत्वा सह शलाकया ॥ गुरुं प्रणम्य मनसा ततः स्वाध्यायवान्भवेत् ॥ ४ ॥ अत्र जपादौ हस्तस्वरवर्णहीनस्यानधिकारत्वं रावणेन स्वराङ्कुशे याज्ञवल्क्येन शिक्षायां च बोधितम् । तथा हि हस्तहीनं तु योऽधीते हस्तस्वर (१) विवर्ज्जितम् ॥ ऋग्यजुः सामभिर्दग्धो वियोनिमधिगच्छति ॥ ५ ॥ इति याज्ञवल्क्यशिक्षायां चोक्तम् । जपादौ नाधिकारोऽस्ति सम्यक् पाठमजानतः ॥ इत्युक्तं प्रातिशाख्ये । मन्त्रो हीनः स्वरतो वर्णतो वा मिथ्या-

(१) स्वरवर्ण इति 'ख' पुस्तकपाठः ॥

प्रयुक्तो न तमर्थमाह ॥ स वाग्वज्रो यजमानं हिनस्ति यथेन्द्रशत्रुः स्वरतोऽपराधात् ॥ ६ ॥ इत्यपि तत्रैवोक्तम् । एतेन हस्तस्वरवर्णयुक्तएव वेदोऽध्येतव्य इत्यतो हस्तस्वरप्रक्रियोच्यते । तत्र तावद्धस्तस्वरस्य मूलस्थानं स्लोकैकेन कथ्यते । तथा । आदौ हस्तं न्यसेन्मध्ये स्थितिरेषा सनातनी । ततः स्वरानुकूल्येन गतिस्तस्य न संशयः ॥ ७ ॥ इति मूलस्थानम् । अधस्तात्प्रव्रजन्पूर्वीमूर्द्धान्मध्ये च तिष्ठति ॥ मध्यतो दक्षिणं गच्छेद्दक्षिणाद्याति चोत्तरे ॥ ८ ॥ दृष्ट्वा जात्यस्वरं शीघ्रं मध्यतो याति चोत्तरम् ॥ उत्तराद्यात्यधो हस्तं स्वरं दृष्ट्वा च दक्षिणे ॥ ९ ॥ अर्द्धन्युब्जे ततः पाणिरधस्ताद्याति दक्षिणे ॥ सम्पूर्णे सत्यधो गच्छेदधस्ताच्च न संशयः ॥ १० ॥ सिंए ह्यसि प्रतीकं च ह्यवसानं विना करम् ॥ मध्यतो याति सर्वत्र व्यूर्द्धमेव सुनिश्चितम् ॥ ११ ॥ अनुदात्तसमूहो यान्वर्णानाश्रित्य तिष्ठति ॥ ते युक्तास्तं परित्यक्तुमशक्ता निजबन्धुवत् ॥ १२ ॥ स्वरितेऽप्येवमेव स्याद्दक्षिणांसे विशेषतः ॥ न च पूर्वोक्तनियमो विद्यतेऽत्रेति निश्चितम् ॥ १३ ॥ प्रतीकेऽपि विशेषोक्तिर्मन्यते वाऽनुवर्त्तिनम् ॥ १४ इति सामान्यविधिः ॥ एकारेण समा रेखा मूर्द्धि वर्णस्य या स्थिता ॥ वामगान्तां विजानीयादूर्ध्वगां ह्यूर्द्धसंस्थिताम् ॥ १५ ॥ ति-

र्य्यग्रेखा च वर्णस्य पादपार्श्वे स्थिता तु या ॥ ऊर्द्ध्वरेखा-सहायेन तस्यास्तु स्यादधो गतिः ॥ १६ ॥ वामरेखा-सहायेन गतिस्तस्यास्तु दक्षिणे ॥ बिन्दोर्गतिश्च जात्य-स्य मध्ये स्यादिति निश्चितम् ॥ १७ ॥ अर्द्धन्युब्जस्य पूर्णस्य दक्षिणः स्यात्त्वधो गतिः । इति चतुस्स्वरगतिः । पूर्णार्द्धन्युब्जजात्यानां सञ्ज्ञा सम्यक्क्रमेण हि । अङ्कैः षड्भिश्चतुर्भिश्च स्वरविज्ञैरुदीरिता ॥ १८ ॥ इति पू-र्णार्द्धन्युब्जजात्यानां सञ्ज्ञा ॥ अथ हस्तस्वरगतिप्रमा-णम् ॥ षडङ्गुलिप्रमाणानि दक्षिणे च तथोत्तरे ॥ ऊर्द्ध्वे नवाङ्गुलिर्ज्ञेया गतिः पाणेरधस्तथा ॥ १९ ॥ वामे च दक्षिणाद्याति चार्द्धेऽधस्तात्तथैव च ॥ अष्टा-दशाङ्गुलिर्ज्ञेया गतिर्हस्तस्य सुस्थिरा ॥ २० ॥ इति हस्तस्वरगतिप्रमाणम् ॥ अथ विसर्गोच्चारणप्रमाणम् ॥ ह्रस्वाद्दीर्घाच्च परतो विसर्गश्चेत्तदा बुधः ॥ ह्रस्वस्व-रानुकूल्येनोच्चारयेत्तं सदा बुधैः ॥ २१ ॥ इति विस-र्गोच्चारणप्रमाणम् । अथाङ्गुलिनिस्सरणम् ॥ ह्रस्वे स्व-रितसँय्युक्ते वर्णे च सविसर्गके । कनिष्ठा तर्ज्जनी चैव निष्काश्या हि स्वयूथतः ॥ २२ ॥ दीर्घे स्वरितसम्प्रा-प्ते ह्येकामेव कनिष्ठिकाम् ॥ जात्ये युग्मं विशेषेण त्य-क्तव्यमिति निश्चितम् ॥ २३ ॥ स्वरितेभ्यः क्रमेणैव दक्षिणोत्तरगामिनी ॥ कनिष्ठा तर्ज्जनी चैव त्याज्या

तूर्ध्वे हि द्वेशिनी ॥ २४ ॥ अनुदात्तयुते ह्रस्वे सस्वरा-च्च परेऽपि वै ॥ सुज्ञैः कनिष्ठिका त्याज्या सविसर्गे द्विजोत्तमैः ॥ २५ ॥ अथ ॐकारसञ्ज्ञा ॥ ह्रस्वादग्रे भवेद्दीर्घो दीर्घादग्रे भवेल्लघुः ॥ देवानां हृदयं त्यक्त्वा ॐस्यादेव द्विलके परे ॥ २६ ॥ दीर्घे तु द्वेशिनी त्याज्या चिप्रं स्याद्द्विलके लघौ ॥ मन्त्रे त्रिधा विधिर्ज्ञेयो ब्राह्मणे तु द्विधा स्मृतः ॥ २७ ॥ अथ चिप्रविचारः ॥ तर्ज्जन्याः पृष्ठसंश्लिष्टमङ्गुष्ठं चाग्रनामितम् ॥ तं वै चिप्रं विजानीयात्स्वरविद्भिरुदीरितम् ॥ २८ ॥ इत्यङ्गुलिनिस्सरणम् ॥ अथ रेखाभिरुदात्तानुदात्तस्वरितसञ्ज्ञा ॥ ऊर्ध्वरेखा तु वर्णस्य मूर्ध्नि तिष्ठति या स्थिरा ॥ तामुदात्तं विजानीयाद्द्विस्स्वरे स्वरितं तु ताम् ॥ २९ ॥ तिर्य्यग्रेखा च वर्णस्य पादपार्श्वे स्थिता तु या ॥ अनुदात्तं विजानीयात्स्वरितं वा सहायतः ॥ ३० ॥ वर्णस्य वर्त्तुलाकारं पादे तिष्ठति केवलम् ॥ स्वरितं तु विजानीयात्स्वरविद्भिरुदीरितम् ॥ ३१ ॥ अथ तकारादिमान्तेषु तर्ज्जन्यङ्गुष्ठयोगादिमुष्ट्यन्ताः क्रियाः कथ्यते । तर्ज्जन्यङ्गुष्ठयोर्य्योगो नखयोगस्य यस्तयोः ॥ अङ्गुष्ठमध्ये यस्तस्या योगो भवति निश्चितम् ॥ ३२ ॥ अत्रैवोक्तः क्रमेणैव नैतद्देकेऽवसानगे ॥ विस्वरे च मकारान्ते मुष्टिका च तथैव च ॥ ३३ ॥

अथ विचित्रगतिः ॥ कोऽदादिति प्रतीके च कोऽसौ च त्र्यम्बकेऽपि च ॥ एषूदात्तं विजानीयात्तदन्यत्र च मध्यमम् ॥ ३४ ॥ स्वरितस्य विशेषेण स्थानं मध्ये ह्युदीरितम् ॥ मध्यतस्य बहिर्गन्तुमशक्यत्त्वमिति स्थितिः ॥ ३५ ॥ वर्णाश्च ये न तिष्ठन्ति सञ्ज्ञा तेषां तु तस्य वै ॥ स्वरितस्य विशेषेण ज्ञेयाः स्वरविशारदैः ॥३६॥ त्रयाणां च स्वराणां च त्रिधा सञ्ज्ञा विशेषतः ॥ खल्वेकस्य त्रिधा सञ्ज्ञा मध्यस्यस्वरितस्य च ॥३७॥ तत्समः स्वरजात्यस्य ह्यर्द्धन्यब्जो न तत्समः ॥ सोऽपि पूर्णोऽनुदात्तेन समस्त्वेति विधिक्रमः ॥ ३८ ॥ इति विचित्रगतिः । अथ रेफविशेषोक्तिः ॥ अक्षराणामुपरि यो वेदे रेफः प्रवर्त्तते ॥ स एव शषहर्द्दणां विपरीतं तु यद्भवेत् ॥ ३९ ॥ इति रेफविशेषोक्तिः ॥ अथ ब्राह्मणस्वरसङ्क्षेपः ॥ वामस्था चोपरिष्ठा या मन्त्रे वर्णस्य संस्थितिः ॥ ब्राह्मणे सा तु मध्यस्था ज्ञेया मध्यस्थिताऽपि या ॥ ४० ॥ यदुत्तरमधो याति मन्त्रे याति च दक्षिणे ॥ तदेव ब्राह्मणाख्ये तु विपरीतगतिर्भवेत् ॥ ४१ ॥ जात्यं मध्ये स्थितं नित्यमूर्द्ध्वे न्युब्जं समाश्रितम् ॥ इति सङ्क्षेपनियमो ब्राह्मणेष्वेव निश्चितः ॥ ४२ ॥ इति ब्राह्मणस्वरसङ्क्षेपविधिः ॥ अथ रङ्गमहारङ्गातिरङ्गाः ॥ सुतन्त्रेश्चावसानस्य सार्द्धद्व्यङ्केन बिन्दुना ॥

भङ्गं स्याद्यत्र मन्त्रेण वै रङ्गस्तु भवेदिति ।। ४३ ।।
महाशब्दोऽतिशब्दस्य यद्वर्णात्प्राक् प्रवर्त्तते ।। महारङ्गोऽतिरङ्गस्य सञ्ज्ञा तस्यैव निश्चिता ।। ४४ अथ रङ्गादीनामुच्चारणे प्रमाणम्। ह्रस्वात्तु द्विगुणो दीर्घो दीर्घादेकगुणः प्लुतः ।। प्लुतादेकगुणो रङ्गो रङ्गादेकगुणाधिकः ।। ४५ ।। महाशब्देन सँय्युक्तो व्यञ्जनं चार्द्धमात्रिकम् ।। अतिरङ्गो महारङ्गाद्वृद्धो ह्येकगुणाऽधिकः ।। ४६ ।। एतत्तु किल वेदे वै ज्ञेयं पूर्णेऽपि सुस्थिरम् ।। अथ द्विस्वरक्रमः ।। द्विस्वरे स्वरहीनस्य गतिस्तूपरि चोत्तरे ।। जात्ये त्वर्द्धे च सम्पूर्णे न्युब्जे चतुस्स्वरेषु यत् ।। ।। ४७ ।। स एव नियमो ह्येकैर्द्विस्वरेऽपि च दर्शितः ।। भेदेनैव प्रकारस्तु (१) लिपिमात्रे सुनिश्चितः ।। ४८ ।। तिर्य्यग्रेखा द्विके मध्ये मध्ये वा तिर्य्यगूर्ध्वयोः ।। उत्तरं याति सोर्द्ध्वञ्च विस्वरस्येत्क्रमेण हि ।। ४९ ।। अथौष्ठमकारस्थानानि ।। मन्त्रे मिम्भातौ मोधे च मत्रं मध्यं मघौ मिघौ।। रघोहणे च मन्त्रे तु बलं त्यक्त्वा मलेऽपि च ।।। ५० ।। मिमन्धे च मिभर्त्तौ च मिभर्यौ मभयेऽपिच ।। औदुम्बर्य्यात्मके चैवं मच्छ्मणे माह्मणे महषे ।। ५१ ।। माधोस्तु महिषं मध्यां (२) महन्ते च मधानके ।। महस्पतौ च

(१) त्रिमात्रे इति 'ख' पुस्तकपाठः ।।
(२) माह्वोर्म्महिषम्माद्यमिति 'ख' पुस्तकपाठश्च ।।

पिमते म्टते मालबे मभूषते ॥ ५२ ॥ भिम्भाडिति प्रसुखे च सुम्ने मम्नौ प्रमाहके ॥ मम्लुशे मदरे म्नम्ने मपायो म्नह्मचर्य्यके ॥ ५३ ॥ मटे सोमे च मीभत्से क्लीमे चैय्यम्मकेऽपि च ॥ ग्रमले च मलाकायां सञ्ज्ञा सप्तविभक्तिषु ॥५४॥ स्थानेष्वेतेषु भिज्ञायां याज्ञवल्क्येन भाषिता ॥ ५५ ॥ अथौष्ठमकारोत्पत्तिः ॥ मकारस्त्वौष्ठसञ्ज्ञः स्यान्मकारं बिन्दुगर्भकम् ॥ सर्वासामाङ्गुलीनान्निस्सरणं कार्य्यमत्र वै ॥ ५६ ॥ अथ ठकारस्थानानि ॥ पृष्ठे गोष्ठे च शोचिष्ठेत्यनुष्ठाने च पिष्ठके ॥ अधिष्ठानेऽनधिष्ठाने स्वादिष्ठे च वसिष्ठके ॥ ५७ ॥ निविष्ठौष्ठवनिष्ठेषु कनिष्ठायां मदिष्ठके ॥ निष्ठायां चाप्यनिष्ठायां मजाविष्ठां च षष्ठके ॥ ५८ ॥ प्रतिष्ठायां युविष्ठ्यं च वर्षिष्ठे तिष्ठतेऽपि च ॥ आपोहिष्ठे युजिष्ठे च नेदिष्ठस्त्रिष्ठिनेऽपि च ॥ ५९ ॥ निष्ठीवने चाखरेष्ठः पुञ्जिष्ठे गह्वरेष्ठके ॥ ज्येष्ठे श्रेष्ठे कनिष्ठे च भूयिष्ठायान्तु पिष्ठके ॥ ६० ॥ नरिष्ठायां गरिष्ठे च भ्राजिष्ठेऽष्टविभक्तिषु ॥ सप्तस्वेव यथा प्रोक्तः सूरिभिः शब्ददर्शिभिः ॥ ६१ ॥ इति षठकारस्थानानि ॥ यस्सुबोधाम्पठेन्नित्यमिमां च स्वरप्रक्रियाम् ॥ हस्तपूर्वां तु तस्यैव सम्यग्वेदे गतिर्भवेत् ॥ ६२ ॥ श्रीमता कान्यकुब्जेन ह्युपमन्युवरिनहोत्रिणा ॥

श्रीमद्वेदस्वरूपाणां श्रीमद्वाकपतिशर्म्मणाम् ॥ ६३ ॥
सूनुना पितृभक्तेन मल्लविप्रेण धीमता ॥ विक्रमार्क-
गताब्देषु चन्द्रवस्वगभूमिषु ॥ ६४ ॥ ऊर्ज्जमासे सि-
ते पक्षे ह्येकादश्यां शनेर्द्दिने ॥ कृतेयं बालबोधाय स्व-
हस्तस्वरप्रक्रिया ॥ ६५ ॥ इति श्रीमत्कान्यकुब्जी-
योपमन्युगोत्रीयाग्निहोत्रिखगपतितनूजपितृभक्तघाटम
पुरवासिमल्लशर्म्मकृता शिक्षा समाप्ता ॥

---

# अथ स्वराङ्कुशशिक्षाऽऽरभ्यते ॥

हेरम्बं चण्डिकां नत्वा शम्भुं सूर्य्यं हरिं गुरुम् ॥ सरस्वतीं कविवरान्वक्ष्येऽहं स्वरनिर्णयम् ॥ १ ॥ उदात्तान्निहतः स्वारः स्वरितात्प्रचयो भवेत् ॥ उदात्तात्स्वरितात्पूर्व्वो नान्यमापद्यते स्वरम् ॥ २ ॥ व्यञ्जनैस्तु यवौ यत्र प्रयुज्येते ततः परम् ॥ अपूर्वौ नीचपूर्वौ वा जात्यः स्वारः स उच्यते ॥ ३ ॥ एदोतोरुच्चयोर्यत्र नीचोऽकारः परो यदि ॥ एकीभावे भवेत्तत्र स्वरोऽभिनिहितस्तदा ॥ ४ ॥ इ उ वर्णौ यदोदात्तावापद्येते यवौ क्वचित् ॥ अनुदात्तस्वरे नित्यं विद्यात्क्षैप्रस्य लक्षणम् ॥ ५ ॥ इकार उच्चः पूर्वस्मिन्परस्मिन्नियतः स च ॥ प्रश्लिष्टमाहुराचार्याः स्वरवर्णविदस्तदा ॥ ६ ॥ कम्पन्ते ते च चत्वारः स्वरितोच्चोदयाः स्वराः ॥ एतत्सम्यक्प्रकारेण ज्ञात्वाऽसौ कम्पविद्भवेत् ॥ ७ ॥ नीचेन स्वरितः स्वारमेकीभावेऽनुगच्छति ॥ नीचं नीचस्त्रिभिश्चोच्च उच्चत्वमभिगच्छति ॥ ८ ॥ उदात्तात्स्वरितादस्य स्वरितोदात्तवच्छ्रुतिः ॥ प्रकृत्या निहितं चाहुराचार्याः स्वरवित्तमाः ॥ ९ ॥ उदात्तपूर्वं यत्किञ्चिच्छन्दसि स्वरितं भवेत् ॥ एष सर्वबहुस्वारस्तैरोव्य-

ञ्जन एव च ॥ १० ॥ अवग्रहात्परं यत्र स्वरितस्स्यादनन्तरः ॥ तैरोविरामं तं विद्यादुदात्तो यद्यवग्रहः ॥ ११ ॥ स्वरे चेत्स्वरितं यत्र विवृत्त्या तत्र सँय्युतम् ॥ एतत्तु पादवृत्तस्य लक्षणं शास्त्रनिश्चितम् ॥ १२ ॥ जात्यस्वारः स जात्येन सुष्व्यग्ने क्षैप्रउच्यते ॥ तेऽवर्धन्ताऽभिनिहितः प्रश्लिष्टो ह्यीन्द्र गिर्वणः ॥ १३ ॥ तैरोविरामो विष्कभिते तैरोव्यञ्जन ऊतये ॥ पादवृत्तस्य विद्यात्तु ताऽअस्येति निदर्शनम् ॥ १४ ॥ जात्योऽभिनिहितः क्षैप्रस्तैरोव्यञ्जन एव च ॥ तिरोविरामः प्रश्लिष्टः पादवृत्तस्तु सप्तमः ॥ १५ ॥ यत्राभिनिहितात्पूर्वो ह्युदात्तो दृश्यते यदि ॥ तत्र स्वारं न कुर्वीत रथानां नेति दर्शनम् ॥ १६ ॥ एकाक्षरसमावेशे पूर्वयोः स्वरितः स्वरः ॥ तस्योदात्ततरोदात्तादर्द्धमात्रार्द्धमेव वा ॥ १७ ॥ स्वरात्परं व्यञ्जनं यत्पञ्चमेनान्वितं यदि ॥ पूर्वस्य स्वरतो नादो न पूर्वस्वरते स्वरः १८ ॥ यत्र स्वरात्परो नादः पूर्वस्वरितभाक्परः ॥ तत्राक्षेपो न कर्त्तव्यो नादे जङ्घेऽपि तत्परे ॥ १९ ॥ स्वरितस्यानुरूपेण कम्पं कुर्वीत शास्त्रवित् ॥ ह्रस्वे ह्रस्वं विजानीयाद्दीर्घे दीर्घं तथैव च ॥ २० ॥ स्वरितान्नियतं गच्छेत्स्वरितो नियतश्च नौ ॥ द्विमात्रो यत्र दृश्येत ह्रस्वकम्पः स उच्यते ॥

२१ ॥ अनुदात्तं क्रमात्कुर्य्यात्स्वरितं ह्यवलम्बयेत् ॥ पुनर्नियतमागच्छेद्दीर्घकम्पः स उच्यते ॥ २२ ॥ जयन्तस्वामिना प्रोक्ताः श्लोकानामेकविंशतिः ॥ स्वराङ्कुशेति विख्याता बह्वृचां स्वरसिद्धये ॥ २३ ॥ एकोदात्तं पदं विद्यादेकस्वारमथापरम् ॥ कानि चोरुह्युदात्तानि कनिष्ठं निहितं स्मृतम् ॥ २४ ॥ उदात्तान्निहितः स्वार्य्यः स्वारोदात्तौ न चेत्परौ ॥ स्वरितो यस्तथा भूतो ज्ञेयः सप्ताक्षतीस्त्विति ॥ इति श्री जयन्तस्वामिप्रोक्ता स्वराङ्कुशा शिक्षा समाप्ता (१)

---

(१) केचन रावणकृता स्वराङ्कुशा शिक्षा प्रतिपादयन्ते ॥

# अथ षोडशश्लोकी शिक्षाऽऽरभ्यते ॥

अथ शिक्षां प्रवक्ष्यामि वाच उच्चारणे विधिम् ॥ यथा संव्यवहारेषु स्वयं प्रोक्ता स्वयम्भुवा ॥ १ ॥ त्रयस्त्रिंश-द्व्यसा वर्णाः स्वरा द्वाविंशतिर्यमाः ॥ चत्वारश्च विसर्गोऽ-नुस्वारः ᳲकᳲपास्त्रिषष्टिकाः ॥ २ ॥ समास्तेऽदिद्रुतो ज्ञेया ऋद्वादीर्घल्पञ्चमः ॥ एदैदोदौ तु चत्वारो ह्रस्वाः स-न्ध्यक्षराणि च ॥ ३ ॥ ह्रस्वदीर्घप्लुता भेदास्तदुदात्तो-ऽनुदात्तकाः ॥ स्वरितश्चापि ते सानुनासिकाऽननु-नासिकाः ॥ ४ ॥ इत्यष्टादशधा भेदा व्यवर्णानामिन-नः स्वराः ॥ कुचुटुतुपुवर्गास्तदुत्पञ्चवर्णसङ्ग्रहः ॥ ५ ॥ इति स्वरभेदाः ॥ कुप्वन्त्यचवादिवर्गाणां व्युत्क्रमात्प-ञ्चमादितः ॥ खफाद्याश्छठथा ज्ञेया रलान्त्या ह्यवाः स्मृताः ॥ ६ ॥ अतश्चेतः स्वराः पूर्वौ ह-लो ञमो भमो जबः ॥ खथश्चपः शसश्चैते प्रत्याहा-रास्त्वसङ्ख्यकाः ॥७॥ कादयो मान्तिकाः स्पर्शा यमा भ-पञ्चमान्तरे ॥ शषसहाः स्युरूष्माणोऽन्तस्था यरलवाः स्मृताः ॥ ८ ॥ कखतᳲपफतᳲपूर्वः क्रमादर्द्धविसर्गकः ॥ जिह्वामूलीयको ज्ञेयउपध्मानीयसञ्ज्ञकः ॥ ९ ॥ वि-सर्गार्द्धविसर्गानुस्वारव्यङ्गं पराश्रयम् ॥ एतत्परापरौ ह्र-

खौ ग्लौ दीर्घश्च गुरुस्तथा ॥ १० ॥ इति व्यञ्जभेदाः ॥ इकुविसर्ज्जनीयानां स्यात्कण्ठ्यं यिश्च तालुकम् ॥ ऋटुकं रस्तुला दन्तम्पूपध्मानीयमोष्ठजम् ॥ ११ ॥ वो दन्तोष्ठं अमस्यापि नासिकायमयुग्घुरः ॥ ओदौतोरपि कण्ठोष्ठं त्वेदैतोः कण्ठतालुकम् ॥ १२ ॥ जिह्वामूलीयमाचस्य जिह्वामूलं हि चाष्टमम् ॥ सद्यो बोधकरा शिक्षा मणिभूता प्रकाशिता ॥ १३ करालो न च लम्बोष्ठो नाव्यक्तो नानुनासिकः ॥ गद्गदो बद्धजिह्वश्च प्रयोगान्वक्तुमर्हति ॥ १४ ॥ व्याघ्री दष्ट्रैर्हरेत्पुत्रान्भीता पाताच्च पीडनात् ॥ तद्वत्प्रयोजयेद्वर्णान्स्तेन लोके महीयते ॥ १५ ॥ इति वर्णोच्चारः ॥ शिवास्यान्निसृतां शिक्षां प्रयतो यः पठेदिह ॥ पुत्रकीर्त्तिधनायुष्मान्स्वर्गेऽतिसुखमश्नुते ॥ १६ ॥ इति रामकृष्णविरचिता षोडशश्लोकी शिक्षा समाप्ता ॥

---

## अथातोऽवसाननिर्णयं व्याख्यास्यामः ॥

---

नमस्कृत्य तु तं देवं शङ्करस्य सुतं प्रभुम् ॥ यस्य प्रसादाद्देवस्य बुद्धिभेदोऽत्यभून्मम ॥ १ ॥ अवसानस्तु वक्ष्यामि यथा वदनुपूर्वशः ॥ २ ॥ इषे त्वा भूताय कुक्कुटोऽसि जनयत्यै त्वा मा भेः पृथिवि देवयजन्यदित्यै व्युन्दनमस्कन्नमद्याग्ने व्वेरग्नेऽ दब्धायो दिवि व्विष्णुरग्ने व्रतपतेऽन्वस्त्वैष ते रुद्र भागः स्वाहा यज्ञमेष ते गायत्त्रो व्वरुणस्योत्तम्भनमग्नेस्तनूः सिᳪह्यसीन्द्रघोषस्त्वा सिᳪह्यसि ध्रुवोऽसि रक्षोहणँव्वलगहनᳪ स्वराडसि रक्षोहणो वो मित्रस्य मा देवीरापो व्वाचन्ते समुद्रङ्गच्छ मनो मे तर्प्पयत स्वाङ्कृतोऽस्युपयामगृहीतोऽस्याग्रयणः सोमः पवते मित्त्रावरुणाभ्यान्त्वाऽऽत्मने मे मधवे त्वाऽग्नये त्त्वा मह्यं यस्तेऽश्वसनिरग्नये त्वा गायत्त्रच्छन्दसं व्वेभीनान्त्वोषिवक्वान्देवान्दिवमापये स्वाहाऽग्निरेकाक्षरेण मित्रो व्वसवस्त्वयोदशाक्षरेणैष ते ये देवा ऽआविर्म्मय्योऽऽजुर्वीमारोहाग्निः पृथुः सवित्त्रा प्रसवित्रा पृथिव्याः सधस्थ्याद्वसवस्त्वोभयोरदितिष्ट्वा व्वसवस्त्वाऽऽकूतिमग्निम् ॥ ३ ॥ व्विष्णोः क्रमशश्चिदस्यपान्त्वाऽयम्पुरः

पश्च सजूर्ऋतुभिरनड्वान्वयोराट्र्ष्यस्यायुर्म्मे पृथिवीच्छ-
न्दोऽग्निर्देवताऽऽशुस्त्रिवृत्पञ्चविंठं॰शत्यास्तुवताच्छच्छ-
न्दस्तन्तुना रायस्त्रिवृदसि राड्यसि व्विराडसि सम्म्रा-
डसि स्वराडस्यधिपत्न्यसि सहस्रस्य प्प्रमा सेनान्यऽ-
श्चाग्मवे प्राङ्गवे शम्भवाय पर्य्यायेमा मे नृषदे वेद्वाजश्च
सप्तविंठं॰शतिः समुद्रोऽसि स्वर्ग्य घर्म्मस्तेजोऽसि प्प्र-
थमा द्वितीयैरश्विभ्यान्त्वा होता यक्षत्समिधाग्नि-
न्द्वादश्वाश्विनौ सरस्वतीञ्चत्वारोऽग्निं स्विष्टकृत-
न्देवोऽअग्निः स्विष्टकृत्त्वामहृयाग्नये स्वाहा हिङ्का-
राय यते कायाऽऽब्रह्मन्नध्यायान्तस्ताऽउभावश्वस्तू-
परोऽध्यायान्तः शादन्दद्भिर्न्नवाग्नेयः कृष्णग्रीवस्त्रिस्त्रो
ब्रह्मणे ब्राह्मणठं॰ सप्तदश सुमित्त्रिया नः सुमित्त्रिया
नः सुमित्त्रिया नः ऽएधोऽसीति द्वे शते चतुस्त्रिंठं॰
शदित्यन्त्यावसानानि ॥ ४ ॥ अथ व्यवसानानि ।
युष्माऽइन्द्रोऽग्ने ब्रह्म सँव्वपामि पुरा क्रूरस्य सवि
तुस्त्वा गन्धर्व्वस्त्वोपहूतो द्यौरेषा ते व्वसुभ्यस्त्वा व्वे-
दोऽस्यग्निर्ज्ज्योतिः सठं॰हिताऽस्युपहूताऽइहैदं देऽ-
आकूत्यै प्रयुजऽऊर्ग्गसि द्वे त्वमग्नेऽभित्त्यमदित्यास्त्वा
भद्रो मे तप्तायनी मे देवस्य त्वोभयोरुद्दिवमत्त्य-
न्यान्व्रतेनाक्तौ मनसऽइदमापऽऐन्द्रः प्प्राणो माऽपो-
ऽग्नेर्व्वः सोम राजन्निन्द्रवायूऽइमेऽअयँव्वाँय्या वाङ्क्षा

तम्प्रत्क्नथाऽयँव्वेनो ध्रुवोऽसि कोऽसीन्द्राग्नी ऽआगतं पञ्च सजोषाऽइन्द्र चतस्रो व्विवस्वन्नादित्य बृहस्प-तिसुतस्यैजतु दशमास्यऽआतिष्ठ तिस्रऽउदुत्त्यँव्वि नऽ-इन्द्रेति तिस्रऽइह रतिः ॥ ५ ॥ ध्रुवसदन्त्वा ग्रहा-ऽऊर्ज्जाहुतयऽइन्द्रस्य व्वज्जो यवो यस्तेऽआ मा व्वा-जस्याऽस्मे वः चत्वस्योल्बं प्रपर्व्वतस्य प्रजापते ना-भ्विब्भ्याम्पच्चस्व कुविदङ्ग पुरीष्योऽसृतँ सत्य-मुखाङ्क्षणोत्त्वदित्यै रास्नासूर्द्धा भवाग्निर्म्मूर्द्धा म-धुश्चेमं मा हि शुक्रश्च व्विश्वकर्म्मोभयोर्न्नभश्च षश्च षोडशी स्तोमोऽग्निर्ह्ँ होतारमग्ने त्वं तप-श्च परमेष्ठी त्वोभयोर्न्नमोऽस्तु तिस्रऽआयुर्य्यज्ञेन ऽर्चो नाम ॥ ६ ॥ स्वाद्वीन्त्वा कुविदङ्ग यदा पिपे-षेदँ हवीरेतो मूत्रं दृष्ट्वा रूपे निषसाद नाभिर्म्मे न्नया देवा यद्वापोऽअश्विनौ छागस्य प्रजापतये त्वाऽग्निः पशुः प्राणाय स्वाहेमा नु कन्देऽअग्निश्चा-धैतानष्टौ यच्छन्दसीऽआ सुते कुतस्त्वमधि नो दस्रा युवाकवो दैव्व्यावध्वर्य्यूऽअस्येदिन्द्रो ब्रह्मणस्पते ऽअ-पेतः स्योना पृथिवि भूर्भुवोऽह्वानि ध्रन्दते दृँ ह यमाय त्वाऽनाधृष्टा पुरस्ताद्विश्वासां भुवां पते यस्ते स्तनो गायत्रीच्छन्दः समुद्राय त्वाऽभीमं पयसो रेतः स्वाहा प्राणेभ्यो लोमभ्यः स्वाहेति शतमेकचत्वारिँ

शदित्येतानि व्यवसानानि ॥ ७ ॥ अथ चतुरवसाना-
नि प्रत्युष्टठं॰ रक्षोऽग्नीषोमयोरुज्जितिठं॰ सजूर्दे-
वेनेन्धानास्त्वा त्र्यम्बकंय्यजामहेऽठं॰युरठं॰शुष्टे या
ते धामान्युश्मसि देवस्य त्वाऽग्नीषोमाभ्यां मरु-
त्वन्तं वृषभं माहिर्भूरग्ने पवस्वोत्तिष्ठन्नोजसाऽदृश्रम-
स्य केतवो युवन्तं देवस्याऽहञ्ज्योतिष्मन्तं प्रैतु सुप-
र्णोऽसि विराड्ज्योतिरिमठं॰ साहस्रं तिस्रो वा-
योः पूतः पुनन्तु मा पितरऽएधोऽसि संवत्सरोऽस्य-
ग्निमहृद्योभयोरिन्द्रस्यौजसत्यऽऋजवे त्वा स्वाहा रुद्र-
द्राय हिरण्मयेन पात्रेणेति द्वात्रिठं॰शदित्येतानि व्य-
वसानानि ॥ ८ ॥ कृष्णोऽसि नमो वऽउशिगसि स-
मुद्रोऽसि मधुमतीर्नऽइषः प्राणाय परमेष्ठ्यभि-
धीतऽइन्द्रश्च प्रोह्यमाणः सोमो विश्वे देवा द्वेऽअ-
ग्निरेकाक्षरेण पूषा पञ्चाक्षरेण मित्रो नवाक्षरेण
वृष्णऽऊर्मिरस्यैतस्यावेष्टा दन्दशूका दक्षिणामारो-
ह प्रतीचीमुदीचीमूर्ध्वां वयो मा छन्दोऽग्नेर्भा-
गोऽसि वसूनाय्यवानामेकया स्तुवत नवभिर्नवदश-
भिः ॥ ९ ॥ एवञ्छन्दोऽरश्मिना सत्याय प्रतिपदसि
नमो हिरण्यबाहवे बभ्लुशाय रोहिताय कृत्स्नायत-
योष्णीषिणे विसृजद्भ्यः सभाभ्यो गणेभ्यस्तक्षभ्यः
श्वभ्यः कपर्दिने ह्रस्वाय ज्येष्ठाय सोभ्याय वन्याय

व्विलिम्मने स्तुत्याय कूप्याय व्वात्त्याय पार्य्याय सिक-त्याय श्रज्ज्याय शुष्क्याय प्रथममग्निमद्य स्वपस्त्या-ऽश्वद्येति षट्पञ्चाशदित्येतानि निरवसानानि ॥१०॥ अथ मध्यावसानानि ॥ द्वितीयर्ठ० शर्म्मासिग्ने व्वाज जिह्वभूरस्याद्दें रावाऽसि द्वे मध्यऽइन्द्राय त्वा बृहद्द्व-ते पञ्चेति मध्यावसानानि ॥ ११ ॥ अथ पञ्चावसा-नानि ॥ प्रैतु व्वायुरनिलन्द्वे पञ्चावसाने ॥ १२ ॥ अ-थ षडवसानानि ॥ या तेऽअग्नेऽयःशया या ते घर्म्म द्वे षडवसाने ॥ १३ ॥ अथ नवावसानानि ॥ मखस्य शि-रोऽश्वस्य त्वा द्वे नवावसाने ॥ १४ ॥ अथ मर्य्या-दा ॥ शतानि चतुर्द्दश त्रिनवतिर्द्व्यवसानानि १४९३ भवन्ति ॥ द्वे शते त्रयस्त्रिर्ठ०शदन्त्यावसानानि २३३ भवन्ति ॥ शतं पञ्चाशत्त्र्यवसानानि १५० भवन्ति ॥ त्रिर्ठ०शच्चतुरवसानानि ३२ भवन्ति ॥ षट्पञ्चाश-न्निरवसानानि ५६ भवन्ति ॥ पञ्च मध्यावसानानि ५ भवन्ति ॥ द्वे पञ्चावसानें ५ द्वे षडवसाने २ द्वे नवा-वसाने भवतः ॥ सर्वाण्यवसानान्येकीकृत्यैकानविर्ठ०-शतिः शतानि पञ्चसप्ततिः सङ्ख्या कण्डिकायास्त्वा-दिर्ठ०शदध्याये १९७५ ॥ इत्यनन्तदेवविरचिताऽव-सानानिर्णयशिक्षा समाप्ता ॥ रसवेदाङ्केन्दुमिते १९४६

फाल्गुने शुक्लपक्षके ॥ पूर्णिमायां गुरोर्वारेऽवसा-
नान्यङ्कितानि वै ॥ १ ॥

---

# अथ कात्यायनमहर्षिप्रणीतस्वरभक्तिलक्षणपरिशिष्टशिक्षाऽऽरभ्यते ॥

---

अथातः सम्प्रवक्ष्यामि सर्वलक्षणलक्षिताम् ॥ शिक्षां समासतस्तत्र स्वरास्त्वष्टौ प्रकीर्त्तिताः ॥ १ ॥ तैरोविरामः क्षैप्रश्च तैरोव्यञ्जनकस्तथा ॥ भाव्योऽभिनिहितो जात्यः पादवृत्तश्च सप्तमः ॥ २ ॥ प्रश्लिष्टइति विज्ञेयाः प्रोच्यन्ते लक्षणान्यथ ॥ अवग्रहउदात्तश्चेत्स्वरितः स्यात्ततः परम् ॥ ३ ॥ अवग्रहात्पदं यस्तु तं विद्यात्प्रथमं स्वरम् ॥ लक्ष्यमस्य तु विज्ञेयं गोपताविति गो। पतौ ॥ ४ ॥ इकारोकारयोः स्थाने यवौ स्यातामुदात्तयोः ॥ अनुदात्ते पदे नित्यं स क्षिप्रइति कीर्त्तितः ॥ ५ ॥ त्र्यम्बकं द्वन्न इत्यादि लक्ष्यं ज्ञेयं विचक्षणैः ॥ स्वरितं छन्दसि पदं यत्किञ्चिदपि दृश्यते ॥६॥ उदात्तपूर्वं तत्सर्वन्तैरोव्यञ्जनउच्यते ॥ इडे रन्ते तथा हव्ये काम्ये इत्यादि दर्शनम् ॥ ७ ॥ अकारएकोदात्तेन रेफेणापहृतो भवेत् ॥ तच्चाभिनिहितं प्राज्ञः कुक्कुटोऽसि निदर्शनम् ॥ ८ ॥ विवृत्त्या दृश्यते यत्र स्वरं च स्वरिते पदे ॥ सस्वरः पादवृत्तः स्यात्सुत्त्वाऽइधे निदर्शनम् ॥ ६ ॥ यत्रोदात्त इकारो हि

निपातैकारसंयुतः ॥ स प्रश्लिष्टइति ज्ञेयोऽभीमभित्यादि दर्शनम् ॥ १० ॥ सादौ पदे परे पूर्वं ककारान्ते पदे स्थिते ॥ कसवर्णं तु विज्ञेयं भिषक्सीसेन दर्शनम् ॥ ११ ॥ चकारान्ते पदे तान्ते पूर्वं च समवस्थिते ॥ प्रत्यारम्भो न तत्र स्याद्यच्चाहमिति दर्शनम् ॥ १२ ॥ सादौ पदे परे पूर्वं ङकारान्ते पदे सति ॥ कसवर्णद्वयं तत्र प्राङ् क्सोमइति दर्शनम् ॥ १३ ॥ सादौ पदे परे नान्ते पूर्वे च समवस्थिते ॥ तसवर्णं विजानीयात्त्रीन्त्समुद्रान्निदर्शनम् ॥ १४ ॥ मादौ पदे परे मान्ते पूर्वसुच्चारिते सति ॥ मसवर्णन्तु तत्र स्यादिमम्मइति दर्शनम् ॥ १५ ॥ पदमध्ये पदाद्यन्तऽक्षरहरेफैश्च संयुते ॥ यकारे जं विजानीयाद्युञ्जानेत्यादिकं यथा ॥ १६ ॥ टवर्गमन्तरा षस्य खोच्चारश्छन्दसीरितः ॥ प्रत्युदाहरणं पृष्टो दिवीषि त्त्वा निदर्शनम् ॥ १७ ॥ ऊष्मोर्ध्वरेफस्योच्चारः सैकारो हल्युता न चेत् ॥ पितॄणामिह पित्रेखामित्यादि चं निदर्शनम् ॥ १८ ॥ ऌंकारः स्यादनुस्वारस्थाने शलि च रे परे ॥ ह्रस्वाद्दीर्घो भवेद्दीर्घाद्ध्रस्वो गुरुरयो मतः ॥ १९ ॥ सँय्योगे परतो हऌंसइत्यादि निदर्शनम् ॥ ताए सवितुरित्यादि दएष्ट्रेत्यादिकं तथा ॥ २० ॥ ह्रस्वदीर्घगुरूच्चारः कर्त्तव्योऽत्र यथा क्रमम् ॥ शल् रेफयोरभावेन सिऌंही

प्रत्युदाहृतिः ॥ २१ ॥ परेः परे या नु दिती द्विर्भवे-
द्रेफभागिनाम् ॥ विसर्गाच्च परे यां ऋकारहीनां नि-
दर्शनम् ॥ २२ ॥ अस्कन्नमद्य कस्याश्चित्कृष्णोऽस्या इ-
ति च क्रमात् ॥ सूर्य्यस्त्वा द्यौष्प्मता चाथ दधात्त्व-
स्मानिति क्रमात् ॥ २३ ॥ वृष्टन्तः प्रस्तरेष्ठेति पु-
नः ककत्वे निदर्शनम् ॥ पाणिनीयस्य सूत्राभ्यां द्वित्वं
सर्वत्र कीर्त्तितम् ॥ २४ ॥ यवयोः परयोः सस्य द्वित्वं
न स्यात्तु छन्दसि ॥ वसवस्त्वा धूपयन्तु तस्य योनिं
यथायथम् ॥ २५ ॥ हल्युतऋकारस्तु रेकारश्छन्द-
सि स्मृतः ॥ पितॄणामिति पित्रेणामित्यादि च निदर्श-
नम् ॥ २६ ॥ ह्रस्वं दीर्घं भवेत्किञ्चित्संहिताविषये
स्वके ॥ हलिवसर्गयुते वर्णे हल्युतायुतके च न ॥
२७ ॥ सपत्नान्यद्गमरन्येति किञ्चिद्दीर्घो भवेदिह ॥
भागम्प्रजावतीत्यादौ ह्रस्वता न तु दीर्घता ॥ २८ ॥
हल्युताकारसंय्योगादिति ज्ञेयं विचक्षणैः ॥ इति का-
त्यायनपरिशिष्टे वर्णोच्चारप्रकारः ॥ सन्ध्यश्चतुर्धा विज्ञे-
या लोपागमविकारतः ॥ २९ ॥ प्रकृत्या च तथा
तत्र प्रथमं हि निदर्शनम् ॥ विकारतो यथा चेदं प्रे-
षितेत्यादिकं भवेत् ॥ ३० ॥ देवो वः सवितेत्यादौ
प्रकारयादिप्रदर्शनम् ॥ उभौ स्वरौ तयोरन्तः सन्धिर्य्यत्र
न दृश्यते ॥ ३१ ॥ सा विवृत्तिर्बुधैर्ज्ञेया स एवेति

च पश्यति ॥ एषा चतुर्द्धा विज्ञेया प्रथमा तु पिपीलिका ॥ ३२ ॥ परा पाकवती चैव तथा वत्सानुसारिणी । वत्सानुत्सृजिता चैव चतस्रस्ता विवृत्तयः ॥ ३३ ॥ पिपीलिकाऽऽद्यन्तदीर्घा नाभ्याऽआसीन्निदर्शनम् ॥ द्वितीया तूभया ह्रस्वा ब्विनऽइन्द्रेति दर्शनम् ॥ ३४ ॥ तृतीया चोदिता दीर्घा ताऽअस्येति निदर्शनम् ॥ अन्ते चतुर्थी दीर्घा स्याद्यानऽआवोढमश्विना ॥ ३५ ॥ स्वरभक्तिः पञ्चधा स्यात्तत्राद्या करिणी स्मृता ॥ रकारेण हकारेण सँय्योगो यत्र दृश्यते ॥ ३६ ॥ करिणी सा तु विज्ञेया बर्हिरसीति दर्शनम् ॥ लकारेण हकारेण सँय्योगो यत्र दृश्यते ॥ ३७ ॥ कुर्विणी सा हि विज्ञेया उपवल्हेति पश्यति ॥ रकारस्य शकारेण सँय्योगो यत्र दृश्यते ॥ ३८ ॥ हरिणी सा तु विज्ञेयाऽर्शसऽइत्यादि दर्शनम् ॥ लकारेण शकारेण सँय्योगो यत्र जायते ॥ ३९ ॥ तां हरिणीं विजानीयाच्छतवल्शेति दर्शनम् ॥ रेफस्याथ षकारेण सँय्योगो यत्र दृश्यते ॥ ४० ॥ हंसपादेति विज्ञेया वर्षो वर्षीयसीति च ॥ एतल्लक्षणमाख्यातं स्वरभक्तेर्विचक्षणैः ॥ ४१ ॥ ज्ञात्वैतन्मनुजो याति ब्रह्मलोकं सनातनम् ॥ इति कात्यायनेनैव परिशिष्टं कृतं मुदा ॥ ४२ ॥ इति कात्यायनोक्ता स्वरभक्तिलक्षणपरिशिष्टशिक्षा समाप्ता ॥

# अथ क्रमसन्धानशिक्षाऽऽरभ्यते ॥

---

यथा समाम्नातङ्क्रमावसानर्ठं सङ्क्रमेषु ॥ क्रमशास्त्रानुसारेण सन्धानं प्रोच्यतेऽधुना ॥ १ ॥ बिभ्रम्यधाः परमेण । १ । ह्वार्षीच्छ्रतधारम् । २ । सहस्रधारन्देवः । ३ । अधुक्षः सा । ४ । विश्वस्वधायाऽइन्द्रस्य । ५ । राध्यतामिदम् । ६ । एमि कः । ७ । तस्मै कर्म्मणे । ८ । वाम्प्रत्युष्टम् । ९ । अरातयऽउरु । १० । एमि धूः । ११ । धूर्व्वीमो देवानाम् । १२ । देवह्रुतममह्रुतम् । १३ । हविर्द्धानँ विष्णुः । १४ । हस्ताभ्यामग्नये । १५ । गृह्णामि भूताय । १६ । रश्मिभिर्हँवीः । १७ । देवयुवँय्युष्माः । १८ । स्याग्नये । १९ । अग्नीषोमाभ्यां दैव्याय । २० । वेत्वट्ट्रिः । २१ । वेत्त्वाग्नेः । २२ । शमीव्वह विष्क्षत् । २३ । इहि कुक्कुटः । २४ । व्वह इध्रुवम् । २५ । बधायाग्ने । २६ । अन्तरिक्षन्वक्त्रं म् । २७ । दिवँविश्वाभ्यः । २८ । व्वेत्तु धान्यम् । २९ । व्यानाय दीर्घाम् । ३० । रसेन देवतीः । ३१ । पृच्यन्तान्त्रनयत्यै । ३२ । बधः पृथिवि । ३३ मौगप । ३४ । बध्यासमररो । ३५ । स्कन्गायत्रेण । ३६ । जाग-

तेन सुम्ना । ३७ । माऽर्म्य निश्चिता । ३८ । माऽर्म्यं-दिष्यै । ३९ । पश्चाम्भ्यग्ने: । ४० । यजुषेयजुषे सवि-तु: । ४१ । त्वा तेज: । ४२ । इति द्विचत्वारिंशत्प्र-थमाध्याये ॥ पतये गन्धर्व्व: । १ । ईडितऽइन्द्रस्य।२। दक्षिणो मित्रावरुणौ । ३ । अभिशस्त्यै सवितु: । ४ । ध्रुवा ध्रुवा । ५ । मार्ज्मि नम: । ६ । सचन्तामस्मा-कम् । ७ । अश्न्नाम्येतम् । ८ । ब्रह्मणे तेन । ९ । जुह्वाम्यग्नीषोमौ । १० । जुहामीन्द्राग्न्यो: । ११ । इन्द्राग्न्योरिन्द्राग्नी । १२ । इन्द्राग्नी वसुभ्य: । १३ । अवतांऽव्यन्तु । १४ । मरुद्भिरिन्द्र: । १५ । तस्मै पोषाय । १६ । वर्त्तेऽग्ने । १७ । हिमाऽअचारिष-म् । १८ । वेदिषदो ये । १९ । इत्येकोनविंशति-र्द्वितीयाध्याये ॥ २ ॥ उषसा सूर्य्य: । १ । गृहप-ते पुरीष्य: । २ । पतिवेदनमित: । ३ । इति त्री-णि क्रमासन्धानानि तृतीयाध्याये ॥ ३ ॥ चतुर्थे क्र-मसन्धानाभाव: ॥ ४ ॥ पुरूरवा मन्यामि । १ । र-ज:शया हरिशया । २ । देववीतये सिंऽहि । ३ । ध्रुवो वैष्णवम् । ४ । ध्रुवऽऐन्द्रम् । ५ । हव्यवाहन: श्वात्त्र: । ६ । अभूद्यथायथम् । ७ । इति सप्त पञ्च-माध्याये ॥ ५ ॥ षष्टाध्याये क्रमसन्धानाभाव: ॥ ६ ॥ मादयस्वोदानाय । १ । भून्महेन्द्राय । २ । इति द्वे

क्रमसन्धाने सप्तमाध्याये ॥ ७ ॥ अष्टमाध्याये क्रमसन्धानाभावः ॥ ८ ॥ इन्द्रस्य सत्यप्रसवः । १ । इन्द्रँ त्वा जजितः । २ । इति द्वे क्रमसन्धाने नवमाध्याये ॥ ९ ॥ दशमाध्याये क्रमसन्धानाभावः ॥ १० ॥ जागतेन हस्ते । १ । हिरण्ययीमानुष्टुभेन । २ । इति द्वे क्रमसन्धाने एकादशाध्याये ॥ ११ ॥ परिचिल्लोकम् । १ । इत्येकं क्रमसन्धानं द्वादशाध्याये ॥ १२ ॥ दिशामि साहस्रम् । १ । गवयमूर्णायुम् । २ । उष्ट्रमज्ञः । ३ । शरभन्त्वम् । ४ । इति चत्वारि क्रमसन्धानानि त्रयोदशाध्याये ॥ १३ ॥ अन्तरिक्षँ वायुः । १ । वायूराज्ञी । २ । बृहती नभः । ३ । इति त्रीणि क्रमसन्धानानि चतुर्दशाध्याये ॥ १४ ॥ अग्नेरेवः । १ । रथेचित्रो मेनका । २ । असमरथः प्रम्लोचन्ती । ३ । अरिष्टनेमिर्व्विश्वाची । ४ । सुषेणऽउर्व्वशी । ५ । शैशिरौ परमेष्ठी । ६ । दिवः सूर्य्यः । ७ । दिवं ध्रुवे । ८ । इत्यष्टौ पञ्चदशाध्याये ॥ १५ ॥ षोडशसप्तदशाधयायौ क्रमसन्धानरहितौ स्तः ॥ १६ ॥ १७ ॥ स्वस्तोमः । १ । रथन्तरँ वेट् । २ । इति द्वे क्रमसन्धानेऽष्टादशाध्याये । एकोनविंशतिमाध्याये क्रमसन्धानाभावः ॥ १९ ॥ वायुज्र्जाग्रत् । १ । स्वप्ने सूर्य्यः । २ । रुद्रद्रेऽर्य्ये । ३ । आपोऽयक्षि । ४ ।

इति चत्वारि क्रमसन्धानानि विंशतिमाध्याये ॥ २० ॥ एकविंशतिमाध्याये क्रमसन्धानाभावः ॥ २१ ॥ स्वाहाकृतः स्वगा । १ । प्राणाय यत्ते । २ । इति द्वे द्वाविंशाध्याये ॥ २२ ॥ चतुष्पदश्चन्द्रमाः । १ । चन्द्रमा रात्रौ । २ । वायुः सूर्य्यः । इति त्रीणि क्रमसन्धानानि त्रयोविंशाध्याये ॥ २३ ॥ चतुर्विंशतिपञ्चविंशतिषड्विंशतिसप्तविंशतिमाध्यायेषु क्रमसन्धानाभावः ॥ २४ । २५ । २६ । २७ ॥ शुचिमुष्णिहा । १ । देवौ त्रिष्टुभा । २ । इति द्वे क्रमसन्धानेऽष्टाविंशाध्याये ॥ २८ ॥ एकोनत्रिंशत्त्रिंशदेकत्रिंशद्द्वात्रिंशत्त्रयस्त्रिंशच्चतुस्त्रिंशत्पञ्चत्रिंशदध्यायेषु क्रमसन्धानाभावः ॥ २९ । ३० । ३१ । ३२ । ३३ । ३४ । ३५ ॥ ऊतिभिः कया । १ । ईचऽईचामहे ॥ २ ॥ इति द्वे क्रमसन्धाने षड्त्रिंशदध्याये ॥ ३६ ॥ पाहि मधु । १ । स्वाहा रात्रिः । २ । इति द्वे सप्तत्रिंशदध्याये ॥ ३७ ॥ सरस्वत्यसौ । १ । इत्येकमष्टत्रिंशाध्याये ॥ ३८ ॥ एकोनचत्वारिंशाध्याये क्रमसन्धानाभावः ॥ ३९ ॥ अविद्वाँविद्वधशायाम् । १ । ओं ३ क्रतो । स्मर क्लिबे । क्लिबे कृतम् ॥ ४० ॥ इति चत्वारि चत्वारिंशाध्याये ॥ इति पञ्चदशाधिकैकशतं क्रमसन्धानानि । ११५ । एवी-

ऽन्यत्र संहितानुसारेण निर्णयः ॥ इति क्रमसन्धान-शिक्षा समाप्ता ॥

---

# अथ गलद्दृक्शिक्षाऽऽरभ्यते ॥

---

इषे त्वाऽश्वस्तूपरः समिद्धोऽअञ्जन्त्सहस्रशीर्षा पुरुषस्तद्देव स्वाहा प्राणेभ्यस्त्वेत्येतेष्वध्यायेषु न गलिता ऋचः । द्वितीयेऽध्यायेऽग्ने व्रतपतऽइति पश्चात्प्रविष्टाऽतस्त्रयस्त्रिंशत् । तृतीयेऽध्यायेऽयमग्निः पुरीष्य इति प्रविष्टाऽतो द्विषष्टिः । पञ्चमेऽध्यायेऽग्ने व्रतपास्त्व प्रविष्टोरु विष्णो गतोऽतएकचत्त्वारिंशत् । षष्ठेऽध्याये प्रथमा ऋग्गलिता, रेवतीरमद्ध्वमित्यत्र देवस्य त्वा एवं पञ्चत्रिंशत् । वाचस्पतय इत्यत्र स्वाङ्कृतोऽसि आत्मने मे सम्पृक्तौ । अयन्नोऽग्नेनय लुप्त्वाश्चतुश्चत्वारिंशत् । आदित्येभ्यस्त्वेत्यत्र कदा चन सँव्वर्चसा युग्द्देवा गातुविदऽउदुत्त्यमवभृथनिचुम्पुणोशिक्वं गलिते सप्त षट्पञ्चाशत् । देव सवितरित्यत्र देवस्याहमेकोनचत्वारिंशत् । अपो देवाऽइत्यत्र सोमस्य त्विषिरिमं देवा लुप्ता द्वात्रिंशत् । युञ्जान इत्यत्र युञ्जते मनो विश्वो देवस्य देव सवितः पृथिव्याः सधस्त्याद्वसवस्त्वाच्छृन्दन्तु मिलिताष्टाशीतिः । दृशानऽइत्यत्र हंसः शुचिषद्वक्रन्ददग्निर्दृशानो रुक्मः समिधाग्निं पुनरूर्ज्जा सह-

रय्याऽयन्ते भवतन्नऽइति मिलिता अष्टोत्तरशतम् । मयि गृह्णाम्यग्निर्म्मूर्द्धा प्रविष्टाऽअपाम्पृष्ठं मही द्यौर्व्विष्णोः कर्म्माणि चित्रन्देवानां त्रिपञ्चाशत् । ध्रुवक्षितिः शुक्रश्च विश्वकर्म्मा त्वा द्वे नभश्चेषश्च राड्यसि मिलितं सहश्च षड्विंशं शतम् । अग्ने जातानग्निर्म्मूर्द्धा त्वामग्ने पुष्करादधि भुवो यज्ञस्यायमिहाग्ने त्वमयन्ते लोकम्पृण ताऽअस्येन्द्रं विश्वा न चैता लुप्यन्ति परमेष्ठी त्वा द्वौ मिलित्वा चतुः पञ्चाशत् । नमोऽस्तु नीलग्रीवाय नमोऽस्तु रुद्रेभ्यो द्वौ मिलित्वाऽतस्त्रिषष्टिः । अश्मन्नूर्ज्जं हिमस्य त्वा वाचस्पतिं विश्वकर्म्मन्हविषोद्र त्वेंद्रं विश्वा नक्तोषासाऽग्ने तथं सप्तनवतिः । वाजस्य देवस्य त्वा वाजस्य नु यास्ते यावऽउद्बुध्यस्व येन वहसि विनस्त्वं ययविष्ठैकोनसप्ततिः । स्वाद्वीन्त्वा वायोः पूतः कुविदङ्ग त्रिणवतिः । क्षत्रस्य योनिः समुद्रे तऽउपयामगृहीतोऽसि पुत्रमिव निषसाद यदि जाग्रद्यदापो यदि दिवा यन्त्रस्य युवं सुराममिति नवतिः । इमम्मे तन्त्वा शन्नो वाजेवाजेऽवत होता यक्षदिन्द्रस्यषभस्येति सरस्वतीम्मेषस्येति प्रविष्टाः सप्तपञ्चाशत् । तेजोऽसि तत्सवितुर्व्विश्वो देवस्य पृथिव्यै स्वाहा मघवे स्वाहा वाजाय स्वाहाऽसवे स्वाहेति प्रविष्टा एकोनविंशं शतिः । हिरण्य-

गर्ब्भः कुविदङ्ग कः स्वित्सूर्य्यऽएकाकी का स्विद्द्यौरा-शसीदुपयामगृहीतोऽसि सप्तपञ्चाशत् । शादन्दद्भि-र्हिरण्यगर्ब्भो यः प्राणतोऽग्ने त्वञ्चतुश्चत्वारिंᳬशत् । अग्निश्च वैश्वानरो नः पञ्चविंᳬशतिः । स-मास्त्वोद्दयञ्चतुश्चत्वारिंᳬशत् । होता यक्षद्देवा दैव्या शुचिमुष्णिहानन्तरं सर्वाऽनः पञ्चत्रिंᳬशत् । देव सवितस्तत्सवितुर्विंᳬशत् । अस्या जरासो युद्धा ह्ययमिह मूर्द्धानन्दिवऽइदुत्यँविश्वेऽअद्येन्द्र वायू य-ज्ञो देवानां गावऽउप दैव्यावध्वर्य्यूऽअदब्धेभिः सप्ता-शीतिः । यज्ञाग्रतऽआकृष्णेन सप्तपञ्चाशत् । अपे-तोऽश्वत्थे वः सुमित्रिया नऽउद्वयमग्नऽआयूᳬषि ह्यष्टादश । ऋचँवाचम्भूर्भुवः कया नः कस्त्वा स्योना पृथिवि आपो हिष्ठेतितिस्रो नमस्ते हरसे सुमित्रिया नोऽभीषुणो दृते दृᳬह त्रयोदश । देवस्य त्वा देवी द्यावा पृथिवीऽन्द्रस्यौजोऽश्वस्य त्वा ऋजवे त्वेयत्य-ग्रे प्रविष्टास्त्वयो हृदे त्वा युञ्जते मनः प्रैतु मखस्य शिरस्त्वयोदश । देवस्य त्वा सुमित्रिया नऽउद्वयमे-धोऽसीडऽएह्यदित्यै रास्नासीन्द्राय त्वा षड्द्वाविंᳬ-शत् । ईशा वास्यमन्धन्तमोऽन्यदेव सम्भूतिं च मिलि-तास्त्वयोऽग्ननय त्रयोदश । एवं चतुष्षष्टिऋचो विलु-प्तौ एकादशोत्तरशतानि ऋचोऽधिकाश्च ॥ एवं कृते

ष्टतिशतान्यपि सङ्ख्यकाश्च प्रोक्ताः समार्य्यैः खलु कण्डिकाश्च ॥ १ ॥ इति लुप्तकर्सङ्ख्यात्मिका शिक्षा समाप्ता ॥

---

# अथ मनःस्वारशिक्षाऽऽरभ्यते ॥

---

मनःस्वारं प्रवक्ष्यामि ब्रह्मणा निर्मितं पुरा ॥ भगवान्याज्ञवल्क्येन भाषितँल्लोकहेतवे ॥ १ ॥ अथ त्रिपदा द्विरवसानमध्येऽनुदात्तानि । अथाधिमध्येऽनुदात्तानि भवन्ति । कस्त्वा राजन्तमध्वराणां स नः पितेव मा नः परि ते प्रागपाक् प्रणो मरुतो यस्य योगे योगे तवस्तरं तस्माऽअरन्त्र्वन्नः परस्या ऽअधि पुनरूर्ज्जा समितमग्ने यत्ते शुक्रं तुभ्यन्ता मयि गृह्णामि मधु वाता मधुमान्नोऽग्ने युद्वत्र त्वँय्यविष्ठाग्ने पावक स नः पावक व्वार्त्रँहत्याय शवसे पवमानः सस्तानऽआवोढं चित्रभानो धियेषितः । आ नो मित्त्रावरुणाजीजनो ह्यग्ने पत्नीः स यक्षत्तव व्वायो व्विश्वानि देव हरयो धूमकेतवो व्विश्वेभिः सोम्यँय्येना पावक यद्दद्य कच्च व्वरुणः प्राविवितोषस्तद्यन्मे च्छिद्द्रमिन्द्रो विश्वस्य शन्नो देवीर्हते दर्ठँ ह मा स्वाहा मरुद्भिः पञ्चचत्त्वारिर्ठँ शत् ॥ १ ॥ अथ त्रिपदा द्विरनुदात्ता । प्रघासिनो हवामहे व्वयर्ठँ सोमान्तर्य्यच्छ मही द्यौः सह रय्याऽग्निः प्रियेषु समुद्द्रस्य त्वा इयं शुक्रज्ज्योतिश्चेड्ढ्च व्वैश्वानरो नः पावका नः सुनावमारुहेयन्दि-

वस्य चेततो रातिर्ठं॰ सत्पतिं देवस्य सवितुरुपह्वरे गिरीणामुत्वा ते द्रविणो दाः पिपीषति विभक्तारर्ठं॰ हवामहऽउभा पिबतर्ठं॰ हृदे त्वा द्वाविर्ठं॰ शतिः । २ । अथ त्रिपदाद्यन्ता मध्येऽनुदात्तानि । अग्ने व्रतपते सुसमिद्धाय त्र्यं मनो नु पुनर्न्नऽउदुत्त्यं तमुत्वा पाथ्यो वृषाऽऽपो हि ष्ठाऽयमग्नेऽभ्यावर्त्तिन्नग्ने वाजस्य येनासमत्स्वग्ने तमहव नमस्ते रुद्र सम्मा सृजास्यग्नऽआयूर्ठंष्यध्वर्य्योऽअद्रिभिर्गोभद्रषुणा सत्या तूतुजानः स हव्यवाट् स नऽइन्द्राय मध्वा यज्ञमच्छाय तेऽअस्य वायो ये ते वनस्पतेऽव कस्त्वा सत्यस्सदसस्पतिं गावऽउपेन्द्रेह्युपास्माऽइन्द्राण्याऽउष्णीषोऽश्विना घर्म्मपातामश्विनैकोनचत्वारिर्ठं॰ शत् । ३ । अथ त्रिपदाऽऽद्यानुदात्तानि । स्वयम्भूरस्यग्नये कव्यवाहनाय समिधाग्निं त्रिर्ठं॰शद्धामास्य प्रत्नान्न हि तेषाँय्युद्वा हि देव चपो राजन्भद्राऽउतैभिर्न्नो वीतर्ठं॰ हविरुभाभ्यां देवानां फेनेन क्षत्रस्य योनिर्न्नीनावन्तं करम्भिणमश्विनक्कृतस्य ते मह्नोऽअर्णऽइमम्मे सुष्टुतिर्ठं॰ सुमतीवृधो युञ्जन्त्यस्यैना विश्वान्यभि यज्ञं केतुङ्कृण्वन्नग्निर्न्नवृत्राणि बृहन्निदिध्मो मित्रर्ठं॰ ऊर्वऽउग्रा विघनिना सविता ते शरीरे हे वायुः पुना तु स्योना पृथिव्येकत्रिर्ठं॰ शत् । ४ । अथ त्रि-

पदा मध्योदात्तान्यन्तस्वरत्यग्निर्मूर्द्धा महि वीणा-
मिदं विष्णुर्विष्णोः कर्म्माणि मित्रस्य चर्षणीधृतो वि
मुच्यध्वमषाढाऽसि सङ्घानो भद्रो नऽइष्टो ऽग्न-
ग्निः पुनाति ते यत्ते पवित्रं चोदयित्री सूनृतानां
तनूनपादसुरो द्वारो देवीरग्ने स्वाहा वायुरग्रे-
गाऽअभीषुणो यद्द्य सूरऽउदिते विश्वेभिरुप नः पूष-
न्तव धर्त्ता दिवस्त्वर्विंशतिः । ५ । अथ त्रिपदा
अन्त्योदात्तानि वीतिहोत्रन्त्वोपप्रयन्तोऽअध्वरं सो-
मानं स्वरणं यो देवाना नऽएतु युञ्जाथां रासभ-
न्त्सुत्त्वा सीरायुञ्जन्त्याप्यायस्व समेतु ते मदिन्त-
मं मधुनक्तमयमग्निः सहस्त्रिणऽऋतजिद्वाऽऋतस्य स्व-
तवांश्च दिवो मूर्द्धा हिरण्यपाणिमूतयेऽग्निन्दूतं युं-
ञ्जन्ति ब्रध्नं कस्त्वाऽऽच्छ्यति स्वादिष्ठया तिस्रो
देवीर्बर्हिरिदं नियुत्त्वान्वा कया नश्चित्रस्तरणिर्विश्वद-
र्शतऽइन्द्रवायू बृहस्पतिमिमे सुतास्त्विप्रासः प्रजा-
पतौ त्वऽऋतं चंवाचमेकविंशत् । ६ । अथ त्रिपदामध्ये
अन्तोदात्तानि भेषजमस्यूर्द्ध्वोऽअस्य काव्ययो राजानेषु
देवी द्यावापृथिवी देव्यो वम्र्यऽइयत्त्यग्रे षट् । ७ ।
अथ त्रिपदा कम्पः । प्रत्युष्टं रक्षो द्विकं रेवतीर-
मद्ध्वं निषसादाग्निस्तिग्मेन पयः पृथिव्यां नारिरस्याद-
देऽदित्यै रास्नासि । ८ । अथ त्रिपदा जात्यः । क-

स्त्वा विमुञ्चति तद्विष्णोर्युक्तेन मनसेन्द्रस्य स्यूरसि-
ग्नेऽधाह्यग्ने प्रेद्धोऽअग्ने कोऽसि बाहू मे स्वयँव्वाजि-
न्दैव्या होताराऽऊर्द्ध्वमध्वरमस्मात्त्वमेकादश ।९। अ-
थ त्रिपदामध्ये तकारान्ता आपवस्व परिवाजपतिराते
वत्सो मनो देवहूर्य्यंच्चो मध्यान्ते पवित्रेण पुनीहि य-
ज्ञा नः षट् ।१०। अथ त्रिपदान्ते तकारान्ताः ।
आधत्तेडऽएहि तत्सवितुरथ्यावर्त्तस्वाग्निं स्तोमेन र-
क्षोहा विश्वचर्षणिः सप्त ।११। अथ त्रिपदाम-
ध्ये नकारान्ताः । अग्निर्ज्ज्योतिषोच्चसक्थ्याऽअव का-
या त्वं त्रीणि ।१२। अथ त्रिपदान्ते नकारान्ताः ।
ऊर्ज्जँव्वहन्ति त्रीणि पदा द्वयम् ।१३। अथत्रिपदा-
न्तरा आद्युदात्ता । आऽथ,न्ते हि,मा सु, न यदाऽऽह्वा-
नि पञ्च ।१४। अथ चतुष्पदा द्विरवसाना मध्येऽनुदा-
त्ताऽन्यथादिमध्योदात्तानि भवन्ति । सा विश्वायुः घ-
र्म्मोसि मनो जूतिर्य्यम्परिधिं सम्बर्हिरत्र पितरऽआऽग-
न्म गृहा माऽग्ने त्वठं सु, अनु त्वा माता व्वस्व्यसि
समख्ये परि मा प्रति पन्थां सूर्य्यस्य चक्षुर्भवतन्नऽआप-
तये त्वा सन्ते कार्षिरसि यत्ते सोम त्वमङ्गाऽऽवायो
मनो न देवा गातुविदो देवी रापऽएष वो गर्भो, यस्यै-
ते व्वातो वा बृहस्पते व्वाजँव्वाजस्य न्वग्नेऽअच्छ सू-
र्य्यंत्वचसस्त्यऽइन्द्रस्य व्वज्रऽइयदस्यन्वग्निस्त्वमग्ने

द्युभिः सन्ते व्वायुर्य्यदग्ग्ने यदत्ति ये जनेषु योऽअस्म-
व्भ्यमन्नपतेऽन्नस्य व्विश्वा रूपाण्यग्ग्नेऽअङ्गिरऽउदुत्त
मँय्यस्तिऽअद्य त्वामग्ग्ने यजमाना ऽउदुत्त्वा गर्ब्भोऽअ-
सि पुनरासद्य सँव्वाँय्यस्यास्ते कामङ्कामदुघे यत्तौष-
धीरुच्छुष्मा यस्यौषधीर्य्याः फलिनीरोषधयः सन्वाङ्ग-
न्व्वी मा मेषमूर्ज्जन्नमोऽस्तु सर्प्पेब्भ्यो याऽइषवो ये
वा यस्ते यावस्त्वोन्त्समुद्द्रानजस्त्रमिन्दुँय्योऽअग्ग्निर-
ग्ग्नेस्त्वामग्ग्ने अऽङ्गिरसः सखायः सर्ठ० सोऽअग्ग्निर्य्यं
नऽऋषयो नमोऽस्तु नीलग्ग्रीवाय या ते हेति र्म्मी न-
स्तोकेऽसङ्ख्याता सहस्राणि नीलग्ग्रीवाः शितिकण्ठा
दिवँय्ये वृक्षेषु ये भूतानाँय्ये पथाँय्ये तीर्त्थान्न्यश्मन्नू-
र्ज्जँयऽइमा ऽअवसृष्टापरोद्दर्षय यच बाणा व्वाजो नस्त्व-
यर्ठ० रुचन्नस्तत्त्वा याम्येतावद्रूपँय्यजुर्भिराप्यन्ते ये
समाना द्वे सृतीऽउदीरतामङ्गिरसो नो ये नः पूर्व्वे
त्वर्ठ० सोमाच्च्या जानु सरस्वती मनसाऽङ्गान्न्याकृत्म-
ञ्छिरो मे नराशर्ठ० सः प्रति आनऽइन्द्रो हरिभि-
रिन्द्रः सुत्रामा स्ववान्तस्य व्वयमामन्द्रैर्गोभिर्न्न यऽइन्द्रे
ता नासत्त्या त्वष्टा तुरीपो व्वनस्पतिमभि यः प्राण
तो द्विपदा या दैव्व्याऽअद्दर्य्यव: किँस्विद्ब्रह्म सू-
र्य्यसमँय्यन्निर्णिजोपप्रागात्सुमद्यदश्वस्य यत्ते गात्रा-
द्दृयं व्वाजिनं चतुस्त्रिर्ठ० शद्वाजिनो यद्वाह्निष्ठँव्वा-

यो शुक्रस्तनूनपातमूतिभिर्बर्हिषीन्द्र मिन्द्रꣳ स्वाहा प्रचेतसा देवानाꣳ स्वाहाकृतिरग्निन्त्वष्टा वीरमसि यमः समिद्धोऽअद्य तनूनपात्पथो धन्वना गाऽआजन्तीन्द्रस्य वज्रो मरुता मनीकमाक्रन्दय तस्मा-द्यज्ञात्तस्मादश्वा यो देवेभ्यस्तदेव स नो बन्धु-र्यांसेधान्द्वे विरूपेऽअग्ने शर्द्ध प्रवो महे आयन्तऽइव सूर्यं ये त्वा जनिष्ठाऽउग्रोऽनुतेऽदब्धेभिः प्रवीरया ब्रह्माणि मेऽनुत्तमा तऽऋधगित्या येन कर्म्माणि त्र्यं त्वमग्ने प्रथमऽइडायास्त्वा हिरण्यपाणिः सविता ये ते भगप्रणेतराना सत्या यदा बध्नन्तुत्तिष्ठापाघꣳ शन्नो वातो द्यौः शान्तिर्यतो यतो, गर्ब्भो देवानाꣳ समग्निरग्निनाऽहः केतुनेडऽएहि स्वाहा पूष्णे चतुः स्रक्तिर्नाभिस्तपसे स्वाहा शतमेकाशीत्येकन्यूनम् ।

१५ । अथ चतुष्पदा ह्यनुदात्तानि गायत्रेण त्वा स-मिद्वसुभावाम्पूर्णा दर्वि देहि मे महीनाम्पयः शुक्र-न्त्वाऽग्नेर्जनित्रसुरु विष्णो द्वयꣳ हविष्मतीरिमा हृदे त्वा वाचस्पतये सुवीरो वीरान्सुप्रजाः प्र-जा ब्राह्मणमद्य वाममद्यापाꣳरसमेषा वऽउत सोमन्देवाः स्योनाऽसि युवꣳ सुराममागत्य वाजी प्रसद्य भस्मना सजूरब्दः साकंयक्ष्म द्रप्सश्चस्कन्द कृणुष्व पाजऽइषे राये आणम्मेऽएना वऽउभे सुश्चन्द्रा-

यो ह्विष्ठाऽवतत्य धनुर्स्तवस्त्योऽपामिदं गोत्रभिदं गोविदमस्माकमिन्द्रोऽमीषां चित्तठं॰ सप्त ते समुद्रा द्रूर्म्मिरेताऽअर्षन्ति सम्यक्स्रवन्ति सह दानुम्पुरूहूत स्टगो न दृष्टो दिव्यश्श्याम तं देवा यज्ञन्दीचायै रूपमातित्थ्यरूपं प्रैषेभिः प्रैषानर्द्ध्ऽक्तचैरुक्थानामभिश्वर्य्यां प्रातः सवनं पुनन्तु मोश्नन्तस्त्वा हुत्वा परिस्रुतः दृष्टीर्म्मे द्रुपदादिव मुमुचानोऽठं॰शुना ते प्राणाय मे तिस्रस्त्रेधऽक्तुयेन्द्रो महीमूषु सुबर्हिरग्निनक्षे यह्वो तिस्रऽइडा ग्रमिता नो देवीऽऊर्ज्जीऊती देवा देवानां देवम्बर्हिंर्व्वारितीनाँव्वायुर्द्धा कुविदङ्गऽक्तवस्त्यऽक्तुयाऽर्द्धामासाः परूंषि दृच्छामि त्वा परमभियँव्वेदिर्द्दर्वानाम्भद्राः स्वस्ति नः शतमिद्देष च्छागऽक्टतवस्ते यज्ञमिहैवाग्ने देवा दैव्योषासा नक्तादृति चतस्रऽएता उव ऽर्म्मान्तासो बह्वीनां पिता तीव्रान्घोषान्दिवः दृथिव्याः परीत्य भूतानि मेधाम्मऽआतिष्ठन्तम् परी माऽ उ त्वाऽयठं॰ सहस्रमुक्तानायामव प्रातरग्निमुतेदानीमायासाय स्वाहा शतमेकाधिकम् । १६ । अथ चतुष्पदाद्युदात्तमध्येऽनुदात्तानि भवन्ति । धूरसि दृष्टिरसि मयीदमग्ने गृहपतेऽक्रान्कर्म्मऽदित्यास्त्वा नमो मित्रस्याग्ने व्रतपाः परि त्वा गिर्व्वणो गिरो देवतीरमद्वरुमाऽद्विभूर्म्मा

ऽग्ना ३ इ पत्नुवन्याँ २ ॥ ऽआवह यज्ञयज्ञं देव स-
वितर्वीतरठं० हा भव व्वाजे वाजेऽवत सोमठं० रा
जानमग्ने सहस्व सोमस्य त्वाऽऽत्त्वा जिघर्म्मि परि त्वा
ऽग्ने सीद होतः सुजातो व्विपाजसाऽहरहरप्रयावँ
व्विश्वस्य केतुरस्ताव्यग्निरिन्द्रँव्विश्वाऽसुन्न्वन्तमयज-
मानमोषधीरितीष्कृतिन्नीमाग्ने तव श्रवो व्वयो भुवो
यज्ञस्य व्विश्वस्मै प्राणाय काण्डात्काण्डात्प्ररोहन्त्य-
दित्या स्वाऽबोध्यग्निर्ज्जनस्य गोपास्त्वाञ्चित्रश्रवस्तमा-
ऽऽवाचऽउद्बुध्यस्व नमस्तऽआयुधाय मीढुष्टम शिवत-
म नमस्ते हरसे यो देवानां चक्षुषः पिता बृहस्पते प-
रीन्द्रऽआसाम्प्रेत मर्म्माणि तऽउदेनं दैव्याय धर्म्मे
क्रमद्ध्वमग्निना व्वाजाय स्वाहा व्विश्वस्य मूर्द्धन्ब्रह्म
क्षत्त्रँव्या व्व्याग्घ्रं सोमस्य रूपं यमश्विना यदत्र त्वया
हि नोऽग्निष्वात्ताः पितरऽआसीनासोऽअरुणीनां वे-
देन रूपे सरस्वती योन्न्यां तेजः पशूनाल्लोमानि प्र-
यतिहैँव्यामिमाना व्वरुणः क्षत्त्रँव्यस्मिन्नश्वासः स-
मिद्धोऽअग्निर्द्दुरो देवीर्र्यद्देवासो यद्धरिणी व्वय-
न्नार्र्यस्ते केष्वन्तः कक्ष्यस्यानो भद्द्रा यद्वध्नम् मा त्वा-
ऽग्निर्र्यदश्वाय यत्ते सादे तँव्वस्त्वायमेकया च न
त्वावान्त्समिधेन्द्रमिडाभिरिन्द्रन्दैव्या होतारा त्वष्टा
रमिन्द्रं समिधानम्महत्तनूपातमुद्भिदमीडेऽन्यमीडितं

व्यचस्वतीः सुप्रायणाः सुपेशसा सुशिल्पे पेशस्वती स्तिस्रः समिद्धोऽअञ्जन्द्वयोस्त्वोपप्रागात्परममासुष्व- यन्तौ दैव्या होतारा प्रथमा सुवाचाऽऽनो यज्ञम्भा- रती ब्राह्मणासः पितरोऽहिरिव भोगैः स्त्रीश्वतेऽग्ने विश्वेषामदितिस्तत्सूर्यस्य तन्मित्रस्य बरामहानग्न- ऽइन्द्र तमिदायातमुप प्रवऽइन्द्राय यज्ञाग्नतोऽनुनो- ऽद्य सिनीवालि पृथुष्टुकऽआरात्रि समद्वराय कल्प- न्तान्तऽआयुष्मानग्ने परीमऽइन्द्राय त्वा घर्म्मैतन्मनसः कामं त्रिंशत्यधिकमेकशतम् । १७ । अथ चतुष्पदा- ऽऽद्युदात्तमध्येऽनुदात्तानि । अग्नेस्तनूरेतन्ते कदा चनायमग्निरेतन्ते शिवो नाम चित्पतिर्म्माऽऋक्सामं- योः शिल्पे श्वात्राः पीताऽएषा तेऽग्न ावग्निर्युञ्जते म- नोऽग्रेणीरसि घृतङ्घृतपावानः श्वात्रास्थ राया व्वयंय्यज्ञो देवानां सुशर्म्मासि हरिरसि पुरुदस्मो व्विषुरूपः सत्रस्य ऽऋद्धिर्यज्ञस्य दोहो देवस्याहमेष- स्यार्य्यमणम्बृहस्पतिं सविता त्वा पुत्रमिव पितराव- प्राम्पृष्ठं रुद्राः सᳪ० सृज्य देवस्त्वा घृतेन सीता शतं- व्वोऽश्वावतीᳪ सोमावतीमन्याावोऽव पतन्तीरवदन्ना- प्रयित्री बलासस्येरज्ज्यन्नग्ने ध्रुवाऽसृचे त्वाऽऽदि- त्यङ्गर्भमग्निन्तम्मन्येऽसौ यस्तामन्नः सहस्राणि स- हस्रशः पावकया यो व्वाचस्पतिम्परी दिवा सङ्क-

न्द्रेनामिषेणोद्धा समुद्रो विधेम तऽइमं स्नानं चत्वारि शृङ्गऽऋतावाऽभूतधामा षडिष्टो यज्ञऽएतन्ना-नाथ वयन्तो हविर्द्धानन्यद्धानाः करम्भो धानानां रूपं-व्रतेन दीक्षाम्पितृभ्यः स्वधायिभ्योऽश्विभ्याञ्चक्षु-र्जिह्वा मेऽपोऽद्य बृहदिन्द्राय तिस्रो देवीर्हविषा त्रातारमिन्द्रमश्विना नमुचे,रश्विना हवि,रश्विना पि-बतां सुत्रामाणं पृथिवीन्देवीस्तिस्रो देवो देवैः स्व-गा त्वा यकासकाबूर्ध्वमेनामूर्ध्वमेनस्महानाम्न्यो देव-स्त्यो रजता हरिणीः पृच्छामि त्वा यूपव्रस्का३उत-निक्रमणन्निषदनममेव नोऽमुत्र भूयादध यज्ञायज्ञा वऽऊर्जो नपातं जोष्ट्रीऽऊर्जाऽऽहुती प्रथमा वासु-पावसृजत्मन्या रथवाहणं हविश्चन्द्रमा मनसो-ऽदृभ्यः सम्भृतः प्रजापतिश्चरति वेनस्तदिदमस्मै ब्रह्म महोऽअग्नेर्विभ्राड्बृहद्र्वोऽ्चोऽअद्य देवासो हि घृतवती भुवनानामनड्वाऽहम्पिता नोऽसि दिविभ्राड-ममिषे पिन्वस्व दिग्भ्यः स्वाहा वाचे यमाय नयोद-शाधिकशतमेकम् । १८ । अथ चतुष्पदा मध्योदात्ता-नि । यद्ग्रामेऽवभृथ निचुम्पुण विश्वश्चो देवस्येय-चिदसि मित्रो नऽदूरावत्यपाम्पेरुर्यं देवासस्त्रित्वन्देवा-नां समिन्द्र णो धाता रातिः सुगा वो व्वयं हीन्द्र-स्य ककुभं रूपं शन्नो भवन्तु व्वाजस्येमां सुष्टुतिमो-

ब्ईऽऊषुणऽओषधयः प्रति मित्रः सठं०सृज्य सिनीवाली सुकपर्द्दीत्याय बृहती इशानो रुक्मोऽन्तरग्ने शिवो भूत्वा ित्रज्ञा ते प्रप्रायमयठं० सोऽग्ने दिवो नमः सु याऽओषधीरश्वत्थे वो यदिमा सहस्र मे दीर्घायुस्त ऽऊर्ज्जो नपाद्भूरस्यपाङ्गर्भं ध्रुवचितिर्ध्रुवयोनिः कु- लायिनी घृतवती पृथिव्याः पुरीषमिन्द्राग्नीऽअव्य- थमानाठं सठं० समित्स्रमुञ्च या ते रुद्र शिव परि नः शितिकण्ठा यऽएतावन्तऽउप ज्ज्मन्ये देवा देवेषु प्रा- णदाऽअपानदा हविषा ऽआद्दधानस्तऽआयजन्ताशुः शिशानो यस्य कुक्षिः प्राचीमन्वग्ने सहस्राक्षाजुहा नः सुप्रतीकः सिन्धोरिव प्राध्वने स नो भुवनस्य प- तऽइन्दुर्हंसो वित्र नऽइन्द्रो ऽवेहृत्याऽवेदिर्ये समाना यमग्ने कव्यवाहन त्वमग्ने ये चाऽधा यथा नः सो- मो राजाऽद्भ्यः क्षीरं कुम्भो ऽवनिष्टुराक्तमनुपस्थे यद्देवास्तिस्रो यत्र ब्रह्म यत्नेन्द्रः समिद्धऽइन्द्रो जुषा- णो बर्हिर्व्वनस्पतिरवसृष्टऽउषासा नक्तं स्तोकानामि- न्दुं दैव्या होतारा भिषजा ऽवसन्तेनऽऋतुना पञ्चे- मामगृभ्णन्नभिधाऽअसि प्रजापतये सूर्य्यस्ते चन्द्रमा- स्ते काऽईमजारे षडस्य होता यज्ञप्रजापतिं व्यस्ये- मे यऽआत्मदास्तमीशानमदितिद्याः सुगव्यन्नोऽनुवो- दैः समास्त्वा पीवोऽअन्नारयिद्दधऽआपो ह यद्धिमया-

न्द्रेनाभिषेणोचा समुद्द्रो विधेम तऽइमं स्तनं चत्वारि शृङ्गऽऋताषाडृतधामा षडिष्टो यज्ञऽएतन्ना-नाथ व्रयन्तो हविर्द्धानँय्यद्वाना: करम्भो धानानां रूपँ-व्रतेन दीक्षाम्मितृभ्य: स्वधायिभ्योऽश्विभ्याञ्चचु-र्ज्जिह्वा मेऽपोऽअद्य बृहदिन्द्राय तिस्रो देवीर्हविषा चातारमिन्द्रमश्विना नमुचे,रश्विना हवि,रश्विना पि-बतां सुत्रामाणं पृथिवीन्देवीस्तिस्रो देवी देवै: स्व-गा त्वा यकासकावुर्व्वीमेनामूर्द्ध्वमेनम्महानाम्न्यो रेव-त्यो रजता हरिणी: पृच्छामि त्वा यूपव्रस्काऽउत-निक्रमणन्निषदनममेव नेऽमुत्र भूयादध यज्ञायज्ञा वऽऊर्ज्जो नपातं जोष्ट्रीऽऊर्ज्जोऽऽकृती प्रथमा वासु-पावसृजत्मन्या रथवाहनँ० हविश्चन्द्रमा मनसो-ऽद्भ्य: सम्भृत: प्रजापतिश्चरति व्वेनस्तदिदस्मै ब्रह्म महोऽअग्नेर्विभ्राड्बृहद्व्वीञ्चोऽअहन्य देवासो हि घृतवती भुवनानामनड्वाऽहम्मिता नोऽसि द्विविधाऽङ्ग-मभिषे पिन्वस्व दिग्भ्य: स्वाहा व्वाचे यमाय त्रयोद-शाधिकशतमेकम् । १८ । अथ चतुष्पदा मध्योदात्ता-नि । यद्ग्रामेऽवभृथ निचुम्पुण विश्वश्वो देवस्येय-श्चिदसि मित्रो नऽइन्द्रावत्यपाम्पेरुर्य्ये देवासश्चित्वन्देवा-नां समिन्द्र णो धाता राति: सुगा वो व्वयर्ठँ० हीन्द्र-स्य ककुभर्ठँ० रूपं शन्नो भवन्तु व्वाजस्येमामुद्गुतिष्ठो-

द्वेऽअघुमाऽओषधयः प्रति मित्रः सर्ठं॰सृज्य सिनीवाली सुकपर्द्दोत्थाय बृहती इशानो रुक्मोऽन्तरग्ने शिवो भूत्वा जिह्वा ते प्रप्रायमयर्ठं॰ सोऽग्ने दिवो नमः सु यऽओषधीरश्वत्थे वो यदिमा सहस्व मे दीर्घायुस्त ऽऊर्ज्जो नपाद्भूरस्यपाङ्गर्भं ध्रुवचितिर्ध्रुवयोनिः कुलायिनी घृतवती पृथिव्याः पुरीषमिन्द्राग्नीऽअव्यथमानाᳪ सर्ठं॰ समित्स्रमुञ्च या ते रुद्र शिव परि नः शितिकण्ठा यऽएतावन्तऽउप ज्जमन्ये देवा देवेषु प्राणदाऽअपानदा हविषा व्वाहृधानस्तऽआयजन्ताशुः शिशानो यस्य कुर्मः प्राचीमन्वग्ने सहस्राघ्नाजुह्वा नः सुप्रतीकः सिन्धोरिव प्राध्वने स नो भुवनस्य पतऽइन्दुर्हंसो वि नऽइन्द्रो व्वेह्याव्वेदिर्यै समाना यमग्ने कव्यवाहन त्वमग्ने ये चाऽधा यथा नः सोमो राजाऽद्वयः चीरं कुम्भो व्वनिष्ठुराक्तमनुपस्थे यद्देवास्त्रिस्त्री यत्र ब्रह्म यत्रेन्द्रः समिद्धऽइन्द्रो जुषाणो बर्हिर्व्वनस्पतिरवसृष्टऽउषासा नक्तं स्तोकानामिन्दुं दैव्या होतारा भिषजा व्वसन्तेनऽऋतुना पञ्चेमामगृभ्णन्नभिधाऽअसि प्रजापतये सूर्य्यस्ते चन्द्रमास्ते काऽईमजारे षडस्य होता यत्तत्प्रजापतिं व्यस्येमे यऽआत्मदास्तमीशानमदितिद्यौः सुगव्यन्नोऽनुवीरैः समास्त्वा पीवोऽअन्नारयिदृधऽआपो ह यस्मिन्मया-

भिरानो नियुद्भिरुषेऽइन्द्रस्य होता यक्षत्तिस्रो देवीर्धि-
यो जोष्टारं स्तोर्णम्बर्हिरन्तरा मित्रावरुणा नीणि-
तेऽत्रा ते व्वह्यन्ती व्वेद्रुषे तिष्ठन्नृजीते पर्य्येषो ह
देवोऽस्याजरासऽइमान्ते व्विश्वे देवाः प्रवायुँ व्यस्मि-
न्नोऽषाढँ व्युरस्वण्वस्वतीमश्विना प्रातर्ज्जितम्भगमश्ववा-
वतीर्ग्गोमतीरिमञ्जीवेभ्यो व्वह्वपाँ व्विश्वाऽआशा
यावती द्यावापृथिव्यग्निरठँ॰ हृदयेन यस्मिन्त्स-
र्व्वाणि सम्भूतिञ्च व्विद्याञ्च शतमेकचत्त्वारिंशत् ।
१९ । अथ चतुष्पदाऽअन्त्योदात्तानि । अयन्ते देवश्रु-
तौ देवेष्वच्छिन्नस्य ते स प्रथमस्ते नोऽअर्व्वन्तोऽग्नये गृ-
हपतये यस्य प्रयाणं द्यौस्ते पृष्ठन्नि होता सठँ॰ सीद-
स्वापो देवीर्न्निभा पृथिव्याऽउदेषाम्वाह्व दिवस्परि
श्रीणामुदारऽइडामग्ने ताऽअस्य निवेशनः सङ्गमनः
सोमराज्ञीर्ब्बर्हीम्भी वो रिषत्पावकवर्च्चाः शुक्रवर्च्चऽस्ट-
तावानम्महिषँव्या शतेन सम्भ्यकस्वन्त्यग्ने जातास्त-
म्पत्नीभिः सम्प्रच्यवद्ध्वमुप परि ते धन्वनो व्विकिरि-
द्द्र व्विलोहित यो नः पिता सूर्य्यरश्मिर्हरिकेशो
व्विमानऽएषः पृथिव्याऽअहं स्वर्यन्तस्ताऽ सवितुश्चि-
त्तिञ्जुहोमि घृतं मिमिक्षे व्विश्वेऽअद्यमौ ते यदाकू-
ताद्धामच्छदग्निरासन्द्दो रूपमाश्यावयेडाभिर्भक्षान्सु-
रावन्तम्बर्हिषदँव्यस्ते रसस्त्वठँ॰ सोम पितृभिर्व्वा-

ऽअग्निस्तदश्विना सुखर्ठ॰ सत्पति चचेऽभ्यादधामि सि-
ञ्चन्ति परीङितो देवैरुषासा नक्तेन्द्रायेन्दुम्पातन्नो-
अऽश्विना भेषजं सविता व्वरुणस्ता भिषजा प्र बाहवा
का स्विद्द्यौरासीद्गणानान्त्वा माता चापि तेषु कोऽअस्य
व्वेदाहम्प्रजापते न पृषदश्ववा मरुतः सञ्च प्रजापते-
स्तपसेमा तेऽउप प्रागाच्छसनं प्राचीनम्बर्हिर्व्व्यचस्व-
तीरुर्व्वियैतावानस्य ततो व्विराएन तस्य यस्माज्जातं
अधि अुत्कर्षीनऽइडाभिरसम्मे रुद्द्रा व्विश्वेऽअद्द्य
त्वमिन्द्र देवन्देवंऽ३ऽइच्छन्ति त्वा न ते द्युभिरक्तुभि-
र्भगऽएव सप्तऽऋषयोऽपश्यञ्जोपायमाय त्वा मयि त्य-
दन्वन्तमो ह्ययमन्यद्देव शतमेकमूनमिति । २० । अथ-
चतुष्पदामध्येऽन्तोदात्तानि । सर्ठस्रवभागास्थ येषा-
मद्धोति सो षूणस्त्र्यायुषञ्जमदग्नेर्व्वसुमते रुद्द्रवते
मूर्द्धानन्दिवऽआक्रम्य व्वाजिन्नुदक्रमीन्नक्तोषासा स-
मनसा याःस्विष्कर्त्तारमद्द्यरस्य व्विज्ज्यन्धनुरिमा रु-
द्द्राय व्विश्वकर्म्मा व्विमनास्समिद्धेऽऋग्नावेतावद्द्रूप-
मग्निर्व्वात्तानृतुमतऽइदम्पितृभ्यस्तदस्य रूपमान्त्वा।शि
स्याखीर्य्यो भूतानां समिद्धोऽअग्निरश्विना तन्नो व्वा-
तऽएकस्त्वष्टुरनाधृष्यो जातवेदा नराशर्ठ॰ सस्य
महिमानं सद्द्यो जातः स्वादुषर्ठ॰ सदः पितरस्तँय्य-
ज्ञन्तहि स्पृशं हिरण्यहस्तोऽअसुरः शन्नो मित्रोऽवि-

वक्रादद्दृष्टघा सविता प्रथमे तद्देजत्येकोनचत्त्वारिंश-
त् । २१ । अथ चतुष्पदा प्रथमे को जात्यः पवित्रे
स्त्यो धान्यमस्यदिच्यै राऽस्नासि भूर्भुवः स्वरयमग्निः
पुरीष्योऽस्यावो देवासस्तस्यास्ते सत्यसवसो व्विष्णोर्नु कं
प्रतद्विष्णूरचसां भागोऽसि देवीरापोऽअपान्नपात्त्सा-
वित्रोऽसि देवकृतस्यैनसऽइममन्नो देव पुरीष्यासोऽअ-
ग्ने त्वं पुरीष्यो मातेव पुत्रँय्यन्त्वी राट्सुपर्णोऽस्यभ्यर्षं-
तेमन्नो देव पुरीष्यासोऽअग्ने त्वन्नऽआश्विनन्तेजो-
ऽन्नात्परिस्तुतोऽविर्न्न मेषऽएवेद्विभूमीचा यःकोऽसकौ
यद्धविष्यन्तव शरीरँव्वनस्पते व्वीड्वङ्गो येन द्द्यौरि-
न्द्राग्नी मित्रावरुणा प्रैतु ब्रह्मणस्पतिं सुखारथिर-
श्वानिव प्रवो महे मह्युत नऽउग्रस्त्वेषा व्वास्य शतं त्रिं-
शदुत्तरम् । २२ । अथ चतुष्पदा मध्ये जात्योऽग्ने त्वँ
व्विष्णोरराटमिन्द्रस्य स्यूः परि वीरस्यग्नेरनीकमभि-
भूरसि युजे वां सुजातो ज्योतिषा मूर्द्धोऽसि राडयम्पु-
रो हरिकेशः पञ्चाजुह्वाना सरस्वत्यश्विना तेजसा
सत्वग्नो यद्दातो देवीऽउषासा नक्तेन्द्रस्य रूपं परि-
द्द्यावापृथिवी विदद्द्यदी त्वन्नोऽअग्ने पथस्पथः
परिपातमिमा गिरः प्रनूनङ्ब्रह्मस्य त्वा सप्तविंशं
शतिः । २३ । अथ चतुष्पदा मध्येऽन्त्यो जात्यो घृ-
ताच्यसि घृताचीसत्योऽथमिह्वाचन्नमीमदन्त सुस-

स्तृशन्त्वा देव सवितरेष ते कदा चन प्रयुच्छसि प्रजापते: प्रजाऽअभूम हिरण्यरूपाऽउषस: शम्मि च परमस्याः परावतो यः सेनाऽअपो देवीर्बोधा मे पुनस्त्वा युक्ते दिवि वर्च्चं युनक्त सीरा लाङ्गलम्पवीरवदोषधयः प्रति विष्ठिताः पृथिवीँय्याश्च ब्रह्म जज्ञानं तव भ्रमासः प्रजापतिष्ट्वाऽवोचाम कवये विश्वस्य दूतँय्येन वहस्यब्रवोचन्मा नो महान्तँय्या ते धामानि परमाणि विश्वकर्म्मा ह्युद्ग्राभञ्चाग्ने प्रेहि प्रस्तरेण परिधिना पशुभिः पशूनायन्तु नः पितरो येऽअग्निष्वात्तास्तमिन्द्रं देवं बर्हिः सरस्वती त्रिः, सठं॰ शितो रश्मिना भद्रं कर्णेभिर्म्मा नो मित्रो यन्नीचयं चक्रेणाग्नेऽति निहः स्वासस्थमिन्द्रेणानु त्वा रथो जीमूतस्येव भवति त्रिपादूर्द्ध्वस्तस्माद्यज्ञात्पुरुषेण त्रीणि शताऽऽयदिषऽइन्द्रो वृत्रँव्वट् सूर्य्यस्य देवेभ्यो हि देवेन नऽएष वस्तोमो नमस्तेऽअस्तु प्रजापतिः सम्भियमाणः कुर्व्वन्नेव स परि चतुष्षष्टिः । २४ । अथ चतुष्पदा कम्पो जात्यः । रूपेण वऽउपांशो वीर्य्येण सधमादो वृष्णिर्न्नोरादरे गायत्रेण प्रतूर्व्वन्नेहि मुञ्चन्तु माऽसृम्मिन्महत्यश्विनो भैषज्येन सुभूः स्वयम्भूर्य्यहाजिनो दश । २५ । अथ चतुष्पदा कम्पमानेऽन्तकः । द्वितीयंत्रसोः पवित्रमग्नये जुष्टं गृह्णाम्यादरेऽध्वरकृ-

तं सँव्वर्च्चसा ध्रुवासि ह्ध्रुवोऽयमग्ग्ने नयान्तस्ते समु-
द्द्रे तेऽस्वन्तः सरस्वत्त्यै व्वाच्चोऽपो देवाऽआ विश्श्वतः
सᳪं᳭ सृष्टाँव्वसुभिः सᳪं᳭ शितम्मि समुद्द्रे त्वा स बो-
ध्यति विश्श्वास्त्वसुत्तमाऽग्ने तव श्श्रवऽउदग्ग्ने तिष्ठ
स्वैह्रंत्वैर्य्यो ते रुद्द्र शिवा तनूरघोरासौ योऽवसर्प्पति
सऽइषुहस्तैरभि गोत्राण्यभि प्रवन्त धामन्तेऽग्निर्य्युन-
ज्जिम परीतोषिञ्चत बर्हिषदः पितरः पयसा शुक्र-
मिन्द्रः सुत्रामेद्यन्तनूपा भिषजेन्द्रन्दुरः कवष्यो
नाश्विना गोभिः शैशिरेण तेजोऽसि व्वसवस्त्वाञ्जन्तु
गायत्री त्रिष्टुप्द्यौस्ते पृष्ठे परेभ्यो मा त्त्वा तपस्पा-
र्ह्वि नऽओजो न सुबर्ह्विषमापश्शिदातत्तऽआनो यन्नं
चन्द्रमाऽअप्स्वु पञ्च नद्द्यस्त्वमिमा सह स्तोमाऽअसुर्य्यो
नाम हिरण्मयेन पात्रेण पञ्च पश्चाशत् । २६ । अथ
चतुष्पदा द्विकम्पः । अपारुरुग्द्यौरिव भूम्ना व्वनेषु वि
द्वितीयस्समुद्द्रे ते चत्वारि । २७ । अथ चतुष्पदा
द्विर्जात्यः । प्रथमँव्वसोः पवित्रं तनूपाऽअग्ग्ने सन्नः
सिन्धुः पवित्रे स्त्थः स्थिरो भवापेत व्वीत स दुद्द्रवत्क-
न्याऽइव व्वहतुँव्वायव्व्यैर्व्वायव्व्यानि व्वैश्श्वदेवी पुनत्युप-
हूताः पितरोऽह्वाव्व्यग्ग्ने त्त्रिज्ज्योत्त्यो होताऽइद्द्युर्म्म्री-
ह्मणोऽस्य सोमो धेनुं त्त्रिरायुष्यँव्वर्च्चस्यं षोडश । २८ ।
अथ चतुष्पदामध्ये तकारान्ताः । अद्दितमसि दिवी

वा ज्योतिरसि यस्ते द्रप्सस्कन्दति कोऽदात्सोम-
स्य त्विषिरस्यग्ने बृहन्हठं॰ सः शुचिषत्सञ्ज्ञानमसि
हिरण्यगर्भः सँव्वरूत्रीन्त्वष्टुः प्रोथदश्वः किठं॰ स्वि-
दासीद्विश्वतश्चक्षुरुत व्वाजस्य मा सोममद्भ्यः स्वा-
हा यज्ञँ व्वरुणो यदस्या देवम्बर्हिरिन्द्रन्देवऽइन्द्रस्तत्त्वो
देवम्बर्हिर्व्वयोधसं देवो नराशठं॰सस्त्वतुर्भिरादित्यै-
र्न्नो भारती यदक्रन्दो यमेन दत्तं हिरण्यशृङ्गो य-
ऽउपप्रस्वासय सहस्रशीर्षा वेदाहमेतमद्ध्या देवास्ति-
रश्चीनो व्विततोऽराधमत्रमन्महे श्रवसा परं स्तृत्यो-
स्तच्चक्षुरनेजदेकमन्यदेव त्रीण्यधिकचत्वारिंशत् ।
२८ । अथ चतुष्पदा अन्त्ये नकारान्ताः । ये रूपाणि
तन्वा शोचिष्ठाव रुद्रं स प्रथमऽइडेरन्ते युञ्जानः
प्रथमं हस्तऽआधाय प्रतूर्त्तँ व्वाजिन्त्सँव्वसाथामा त्वा-
ऽऽहार्षम्प्रति स्पशो यामिषुं शिवेन व्वचसा द्रापेऽअ-
न्धसो व्विश्वकर्म्मन्हविषा बलविज्ञाय स्थविरऽइन्द्र-
स्य वृष्णऽइन्द्रेमं पञ्चदिशो व्वयन्नाम व्वाजस्य नु
यद्दत्तँय्यच्च धाराऽइन्द्रस्य रूपमायात्विन्द्रो व्वरुणस्य-
श्चिद्द्वान्कः स्वित्सूर्य्यँऽएकाकी प्रथमं माता च दधि-
कक्राव्णोऽअकारिषं पञ्चस्वन्तस्तान्पूर्व्वयाऽश्वो घृतेन
सर्व्वे निमेषा यज्ञो देवानामिन्द्रवायू सुसन्दृशेन्द्रा-
ग्नीऽअपात्पितुन्त्वशिस्वभ्यां पिन्वस्योग्रँल्लोहितेन च-

त्वारिंशत् । ३० । अथ चतुष्पदा मध्ये नकारान्ताः । पुनर्म्मनोऽअयन्नोऽअग्निरुपावीरस्युरक्रामाक्रन्ददग्निः सीदत्त्वमयमग्निर्व्वीरतमो येऽग्नेष्विन्द्रन्देवीस्तिस्रधा हितमग्निरस्मि जन्मना नाना हि युमभिस्त्वना देवीद्वारोऽइन्द्रन्देवीस्तिस्रो द्वारो व्वयोधसं देवीस्तिस्रो एतेनाऽन्यत्पुरुषँय्यज्ञेन यज्ञं ठं॰ रुचँ ब्राह्ममारोदसी दिवि पृष्टोऽष्टौ ठय्यक्ष्यद्वि नः सप्तरक्ताः षड्विंशतिः । ३१ । अथ चतुष्पदा अन्ते नकारान्ता मित्रो नो याऽआदित्येभ्यस्त्वा चतुस्त्रिंठं॰ शत्तन्तवो मा नऽइन्द्र ति युक्त्वाय सविता शिवो भव त्वठं॰ हस्त देवि दठं॰ष्ट्राभ्यां मलिम्लूनुशिक्वपावको धरुणीतो जज्ञे व्वातस्य जूतिं सहसा जाताँल्लोकमृता किठं॰ स्विदनं कऽउ सो या सेनाऽइत्त्वासऽएतावत्त्वासऽएतठं॰ सधस्थ सीसेन तन्त्रं मनसा त्वष्टादधदातऽइन्द्रो दूसत्वामग्ने वृणतेऽआजुह्वानऽईड्यो यऽइमे तेऽआचरन्ती सुपर्णँव्वस्ते नाभ्याऽआसीदाक्ष्णेन प्रवाहजेऽप्स्वन्वतीरीयते शँव्वातः वक्रव्यादमग्निमेकाधिकत्रिंशत् । ३२ । अथ चतुष्पदोत्तराऽऽद्युदात्ताः । सन्वष्प्रत, दातत्वमि, न्नत, माह, त्वन्नो न वै त्वामि, षसत्वन्नश्चित्र, मामू, प्रतद्वोचे, दन्त्विक्त्वाए हि मन्द्रेत्यष्टादश । ३३ । अथ व्यवसानाऽऽद्युदात्ताः । अ-

ग्ने ब्रह्म व्वसुभ्यस्त्वोग्गीरग्युहिवमत्यन्न्यास्मनस्ते यावा-न्तम्प्ररक्षथा व्विश्वेदेवासऽआतिष्ठेन्द्रमिदुदुत्यम्प्रजाप-ते नादित्यै रास्नऽऋचो नामाश्विनौ च्छागस्य यु-ङ्क्ता न्दसी दैव्यावद्ध्वर्य्यू ब्रह्मणस्पते इते इठं॰ह मा-ऽनाधृष्टा पुरस्तादिश्वासाम्भुवां स्वाहा प्राणेभ्यो लो-मभ्यश्चतुर्व्विंशतिः । ३४ । अथ त्र्यवसानाऽऽद्यनुदा-त्ताः । युष्माऽइन्द्रः सवितुस्त्वैषा तेऽग्निज्ज्योर्तिर्व्व-तङ्कृणुतेन्द्रः प्राणोऽयँव्वेनो मरुत्वाँ २ ॥ ऽइन्द्र महाँ२ ॥ ऽइन्द्रो यऽओजसा व्वाचस्पतिन्ध्रुवसदन्त्वा-ऽश्विभ्याम्पच्यस्व कुविदङ्ग व्विश्वकर्म्मा त्वा हे पर-मेष्ठी त्वा हे स्वादुद्दीन्त्वेदठं॰ हविष्टिष्वा रूपऽऋतता-वानँव्वैश्वानरस्य सुमतौ व्वैश्वानरो नऽऊतयेऽग्नि-र्ऋषिर्य्यमाय त्वा समुद्राय त्वा समुद्राय त्वा ष-ड्विंशतिः । ३५ । अथ त्र्यवसाने कम्पः । सँव्वपाम्युप-ह्वतौ हयौः कम्पो जात्यः सठं॰हिताऽस्याकूत्यै प्रयुजे तप्सायनी मे बृहन्नसि यवोऽसि हे माऽपः प्रपर्व्वतस्ये-मस्मा हिठं॰सीद्दईऽअन्तरिक्षे निषसाद महाँ२॥ऽइ-न्द्रो व्वज्रहस्तो यस्ते स्तनोऽभीमं सप्तदश । ३६ । अथ त्र्यवसाने प्रथमाद्दीदात्तानि । आ वायो आघा ये व्विनो ग्रहाऽऊर्ज्जोऽऊतयो यत्ते देव्यग्निर्म्मूर्द्धा देतो मूत्नमग्निस्य व्वैश्वानरस्य सुमतौ नव । ३७ ।

अथ व्यवसानान्तोदात्ताः । गन्धर्व्वस्त्वोपहूताऽइन्द्रा-
ग्नेर्व्वो शिवस्त्वन्नादित्यैजतु दशमास्ये ऽग्निः पशुरथै-
तानष्टावासुते दस्वा युवाकवः स्योना पृथिव्यहानि
दशमेकादश । ३८ । अथ व्यवसाने जात्यः । पुरा वक्रू-
रस्य वेदोऽस्यापोऽअस्मानभि त्यं घृतेनाक्तावुपयाम-
गृहीतोऽसि ध्रुवोऽस्यस्मे वः पुरीष्योऽस्यृतꣳ सत्यम-
धुक्ष्व शुक्रस्त्वेषस्त्वाग्ने त्वन्नोऽअन्तमऽआयुर्य्यज्ञेन कुवि-
दङ्ग प्रजापतये त्वेमा नु यद्येमामधि नोऽपेतऽएक-
विंशतिः । ३९ । अथ व्यवसाने द्विर्ज्जात्यः । कोऽसि
महाँ२॥ऽइन्द्रो नृवदाचर्षणिप्राः सहश्च नभश्च तपश्च
पश्च । ४० । अथ व्यवसाने द्वितीयाद्यौदात्तानि । अदि-
त्यास्त्वक्सोम राजन्निन्द्रवायूऽइमेऽइन्द्राग्नीऽआगत-
मोमासश्चर्षणीधृतऽइन्द्र मरुत्वो जवो यः षोडशी सो-
मोऽग्निरꣳ होतारन्नमोऽस्तु रुद्रेभ्यो द्विस्त्रया देवा
यदापः प्राणाय स्वाहा बृहस्पते ऽअतीन्द्र गोमन्नि-
न्द्रायाह्यग्निर्ऋषिर्गायत्रञ्छन्दः पयसो रेतो विंश-
तिः । ४१ । अथ व्यवसाने तकारान्तास्त्वमग्ने व्रत-
पाऽइदमापो बृहस्पतिसुतस्य विश्वकर्मन्हविषेन्द्र-
स्य वज्रोऽसामा चत्वारोल्बन्नाभिर्म्मेऽष्टौ । ४२ । अथ
व्यवसाने नकारान्ताः । भद्रो मे सजोषाऽइन्द्रेहरति
रुद्रो भव यदा पिपेष पञ्च । ४३ । अथ व्यवसाने

प्रथमे द्वितीयान्तमुदात्तानि । उखाङ्कृणोतु कुतस्त्वं द्विः । ४४ । अथ व्यवसाने ह्याद्युदात्ताः । एदन्द्या-म्ना द्विः । ४५ । अथान्त्यावसाने त्वाद्युदात्ताः । मा भेरग्ने दब्धायोऽन्धसस्त्य स्वाहा यज्ञं व्वरुणस्योत्तम्भनं देवीरापः शुद्धा वोऽङ्ढँ व्वाचन्ते द्वितीयं स्वाङ्कृतोऽसि सोमः पवते यस्तेऽश्वसनिर्व्वेशीनान्त्वा व्वसवस्त्व-योदशाचरेण ये देवाऽअग्निनेत्रा व्वसवस्त्वा धूपय-न्त्वाकूतिमग्निँव्विष्णोः क्रमोऽसि चिदसि तयाऽऽयु-र्म्मे नवविंꣳशत्या स्तुवत तन्तुना रायस्पोषेण रा-स्त्रयस्यधिपत्न्यसि व्वस्वते गणेभ्यो वृष्णवे शम्भवाय पर्ष्यौजश्च ज्यैष्ठ्यञ्च शश्वोकचर्शिम्ना च व्वसु चै-का च चतस्रश्च व्यविस्रेडेडितो बर्हिरूर्णम्रदाः सु-पेशसोषे दैव्या होतारा तिस्रो देवीस्त्वष्टोऽश्विनौ सरस्वती चत्वार्य्यग्निः स्विष्टकृतन्त्वामद्य प्राच्च्यै त्वाताय नच्चत्रेभ्यस्ताऽउभौ व्ययो गायत्र्यै भूम्म्या-ऽआखून्वातं प्राणेन व्विष्टतिन्नाभ्यैघोऽस्यैकाधिकः ष-ड्विंशः । ४६ । अथान्त्यावसाने ह्याद्यनुदात्तानि । इषे त्वाऽग्नेस्तनूरिन्द्रघोषस्त्वा रक्षोहणं व्वलगहनं रक्षो-हणो वो मित्रस्य माऽऽत्मने मऽउर्भिकत्वमापये स्वाहैष ते निर्ऋतेऽग्राविम्मथ्योऽऊर्द्ध्वामारोहाग्निः पृथुः सवित्रा प्रसवित्राऽपान्वाऽयम्पुरऽइयमुपरि स-

जूर्त्तुभिरनड्वान्वय: पृथिवी च्छन्दोऽग्निर्द्देवता-
ऽऽच्छन्दो विराडसि त्रय: प्राणश्च सत्यञ्च तिस्रो रयि-
श्च व्रीहयश्चाग्निश्च द्वे मित्रश्च चतस्रोऽग्निर्द्द्वे पष्ठ-
वाट् च त्रिरश्मिस्त्वद्भ्यान्त्वा प्रथममग्नये स्वाहा हिङ्का-
राय प्राणायाद्भ्य: पृथिव्यै धूम्म्रान्वसन्ताय पष्ठवाही
विराजे प्रजापतये पुरुषान्मयु: प्राजापत्य: पुरुष-
मृगश्चन्द्रमसो मशकान्केशैर्म्मरुताँ स्कन्धा नृत्ताय
सूतम्नतये स्तेनहृदयं पञ्चपञ्चाशत् । ४७ । अथा-
न्त्यावसाने ह्यूर्द्ध्वोदात्तानि । एष ते रुद्रभाग: स्वराड-
सि सपत्नहाऽग्नये त्वा गायत्रच्छन्दसँव्वसवस्त्वा हृख-
न्तु राड्यसि नृषदे वेट् प्रथमं कृष्णग्रीवाऽआग्नेयाऽउ-
न्नतऽऋषभ: कृष्णा भौमा: प्रथमद्वितीयोक्ता: सञ्चरा
धूम्म्रा बभ्रुनीकाशा: प्रजापतये च सौरी बलाकाऽए-
णयह्नो वर्षाहूर्ऋतूनामाखु: श्वित्रऽआदित्यानाम्पूष-
णँव्वनिष्ठुना नदीभ्य: पौञ्जिष्ठं सन्धये जारमुत्सादे-
भ्य: कुब्जम्भायै दार्व्वाहारम्मन्यवेऽयस्तापँय्यमाय य-
मसूं सरोभ्यो धैवरमत्सराजाय कितवं प्रतिश्रुत्का-
याऽअर्त्तनमग्नये पीवानमष्टाविंशति: । ४८ । अथा-
न्त्यावसाने ह्येको जात्य: । कुक्कुटोऽसि जनयत्यै त्वा-
ऽग्ने व्रतपतऽएष ते गायत्रो ध्रुवोऽसि पृथिवीन्देवान्दृ-
वँव्वसवस्त्वाऽदितिष्ट्वाऽयन्त्वञ्चित्रा सहस्रस्य प्रमा न-

मऽआश्ववेऽइमा मे व्वाजस्य वित्तञ्च स्रुचश्च देवो-
ऽग्निर्य्यन्ते स्वाहा काय द्वितीयाऽग्नये स्वाहाऽऽयु-
र्य्यज्ञेनैकस्मै रोहितो धूम्ररोहितः शुद्धवालस्तृतीयो-
क्ताः सञ्चराः सुपर्णः पार्ज्जन्यः खड्गो व्वैश्वदेवोऽग्नेः
पक्षतिर्ब्रह्मणे ब्राह्मणं तपसे कौलालमर्म्मेभ्यो ह-
स्तिपस्बीभत्सायै पौल्कसमेकत्रिंशत् । ४६ । अथान्त्या-
वसाने कम्पः । पृथिवि देवयजन्यदित्यै व्व्युन्दनम-
ग्ने वः समुद्रङ्गच्छ प्रथमः स्वाङ्कृतोऽसि स्वर्णं चतुः
कम्पाइडस्पदे तनूनपात्सरस्वतीन्नराशर्ठ०सन्न द्वि-
कम्पो दुरो द्विशो व्वाजाय स्वाहा सोमाय कुलुङ्ग-
ऽइन्द्राग्न्योः पक्षतिरग्नयेऽनीकवतेऽग्नये गायत्राय
नस्मीय पूँश्चलूं सुमित्रिया नोऽष्टादश । ५० । अथा-
न्त्यावसाने कम्पो जात्यः । भूताय त्वा दिविविष्णु-
र्द्वितीयः सिर्ठ०ह्यसि तेजोऽसि तेजो मयि धेह्यब्रह्म-
नश्वस्तूपरः शिल्पा व्वैश्वदेव्यऽएताऽऐन्द्राग्ना
द्वितीयः कृष्णग्रीवाऽआग्नेयः कृष्णग्रीवा दश ।
५१ । अथान्त्यावसाने द्विर्जात्यः । अस्कन्नमद्याग्र-
यणोऽसीदमुत्तरादाशुस्त्रिवृत्समुद्रोऽसि नभस्वान्पृ-
श्निस्तिरश्चीनपृश्निस्तृतीयः कृष्णग्रीवाऽआग्नेया-
ऽअन्यवापोऽर्द्धमासानामिन्द्रस्य कक्रोडो नव । ५२ ।
अथान्त्यावसाने त्रिर्जात्यः सिर्ठ०ह्यसि मित्रावरुणा-

व्यान्त्वा षड्जात्यो मघवे त्वाऽग्नये त्वा मह्यं चतुरो जात्यः पृथिव्याः सधस्थाच्चित्रिष्टदसि प्रथमा द्वितीयैस्त्वारो जात्या मघवे स्वाहा शाऽइन्द्रद्विङ्गन्नव । ५३ । अथान्त्यावसाने नकारान्ताः । मनो मे प्रथमाग्नयेऽनीकवते वसन्ताय कपिञ्जलानान्त्समुद्राय शिशुमारान्त्सोमाय हंसानग्नये कुटरून्त्सोमाय लवानन्द्रे पारावतान्वसुभ्यऽऋश्यानीशानाय परस्वते दश । ५४ । अथ निरवसाने ह्याद्युदात्ताः । नमो वऽइन्द्रश्च मरुतश्च विश्वे देवाश्चमसेऽवेष्टा दन्दशूकाद्दयमुदिचीमारोह मा च्छन्दऽएकया स्तुवतैवस्छन्दो बभ्लुशाय रोहिताय कृत्स्नायोष्णीषिणे विसृजद्भ्यः सभाभ्यो गणेभ्यस्तक्षभ्योऽश्वेभ्यो ह्रस्वाय वन्न्याय विंशतिः । ५५ । अथ निरवसाने ह्यनुदात्ताः । प्राणाय मे प्रोह्यमाणः सोमः पूषा पश्चाच्चरेणात्र्यैंतरस्य प्रतीचीमारोह मूर्द्धा वयो नवभिरस्तुवत रश्मिना सत्याय प्रतिपदस्यग्निमद्द्य स्तूपस्त्वाऽद्य द्वादश । । ५६ । अथ निरवसाने कम्पः । कृष्णोऽसि मधुमतीन्नः परमेष्ठ्यभिधीत इति त्रिः । ५७ । अथ निरवसाने कम्पो जात्यः । समुद्रोऽस्यग्निरेकाच्चरेण युवानाम्भागस्त्रिः । ५८ । अथ निरवसाने ह्येको जात्यः । विश्वम्भे देवा नवभिरस्तुवत नमो हिरण्यबाह-

वे नमः कपर्द्दिने स्रुत्याय ठ्वात्त्याय पाय्यीय सप्त । ५९ । अथ निरवसाने द्विर्ज्जात्यः । उशिगसि वृष्ण्यऽऊर्म्मिर्ज्ज्येष्ठाय व्विलिम्मने ब्रज्ज्याय पञ्च । ६० । अथ निरवसाने त्रिर्ज्जात्यः । सोभ्याय कूप्याय चतुरग्नेर्भागोऽसि व्वह्ननाम्भागोऽसि सिकत्त्याय शुष्कक्याय षट् । ६१ । अथ निरवसाने मध्यावसाने द्वितीयशर्म्माऽस्यग्ने व्वाजजिद्विभूरस्यादद्दे रावाऽसि द्विर्ज्जात्यमिन्द्राय त्वा बृहद्वते पञ्च । ६२ । अथ चतुरवसाने द्व्याद्युदात्ताः । प्रत्युष्टꣳ रक्षऽइन्धानास्त्वा त्र्यम्बकन्धामान्युग्मसि माऽहिर्भूर्म्मा पृदाकुरग्ने पवस्वाहृश्चमस्य व्वाजी कनिक्रदद्देवोऽसीन्द्रस्यौजस्त्य स्वाहा रुद्द्रायैकादश । ६३ । अथ चतुरवसाने द्व्याद्यनुदात्ताः । अग्नीषोमयोरुज्जितिं द्विकम्पाः सन्दृर्द्देवेनाऽश्मुरꣳशुष्टेऽग्नीषोमाभ्याम्मरुत्त्वन्तँ वृषभसुत्तिष्ठन्नोजसा युवन्तन्देवस्याहम्प्रथमो देवस्य त्वा पृथिव्व्याः सुपर्ण्णोऽसि व्विराड्ज्योतिरिमꣳ साहस्त्रान्तिस्रो व्वायोः पूतः पुनन्तु मा पितरः सँव्वत्सरोऽस्यग्निमद्योभयोरूर्ज्जवे त्वा हिरण्मयेन पात्रेणेति द्वाविंशतिः । ६४ । इति महर्षियोगियाज्ञवल्क्यकृता मनःस्वारशिक्षा समाप्ता ॥

---

# अथ प्रातिशाख्यप्रदीपशिक्षा-ऽऽरभ्यते ॥

हेरम्बं विघ्नहर्तारं प्रणमामि सरस्वतीम् ॥ ययोर्न्नमनमात्रेण विघ्नसङ्घो विनश्यति ॥ १ ॥ प्रातिशाख्यं च शिक्षाश्च सम्यगालोच्य यत्नतः ॥ वैदिकानां सुबोधाय सम्यक्पाठस्य सिद्धये ॥ २ ॥ सदाशिवतनूजेन बालकृष्णेन धीमता ॥ प्रातिशाख्यप्रदीपाख्या शिक्षा सम्यङ्निरूप्यते ॥ ३ ॥ अथ वेदाध्ययनप्रकारः । तत्र याज्ञवल्क्यः । प्रणवं प्राक्प्रयुञ्जीत व्याहृतीस्तदनन्तरम् ॥ सावित्रीं चानुपूर्व्व्येण ततो वेदान्समारभेत् ॥ १ ॥ हस्तौ तु सँय्युतौ धार्य्यौ जान्वोरुपरि संस्थितौ । गुरोरनुमतिं कृत्वा पठेन्नान्यमतिर्भवेत् ॥ २ ॥ ऊरुभागे तृतीये तु करन्न्यस्याथ दक्षिणम् ॥ प्रसन्नमानसो भूत्वा किञ्चिन्नम्रमधो मुखः ॥ ३ ॥ कूर्मोऽङ्गानीव संहृत्य हस्तदृष्टिर्दृढमनः ॥ स्वस्थः प्रशान्तो निर्भीतो वर्णानुच्चारयेद्बुधः ॥ ४ ॥ नाभ्याहन्न्यान्न निर्हन्न्यान्न गायेन्न च कम्पयेत् ॥ यथादावुच्चरेद्वर्णाँस्तथैवैतान्त्समापयेत् ॥ ५ ॥ निवेश्य दृष्टिं हस्ताग्रे वेदार्थ-

मनु चिन्तयेत् । सम्यगुच्चारयेद्वर्णान्हस्तेन च मुखेन-
च ॥ ६ ॥ स्वरस्यैव तु हस्तस्य द्वावेतौ युगपत्स्थितौ ॥
हस्ताद्भ्रष्टः स्वराद्भ्रष्टो न वेदफलमश्नुते ॥ ७ ॥ न क-
रालो न लम्बोष्ठो नाव्यक्तो नानुसिकः ॥ गद्गदो बद्धजि-
ह्वश्च न वर्णान्वक्तुमर्हति ॥ ८ ॥ चुलुनैका स्फुटो दण्डी
स्वस्तिको मुष्टिकाकृतिः ॥ एते वै हस्तदोषाः स्युः पर-
शुश्चेति सप्तमः ॥ ९ ॥ अथ करचालनक्रमस्तत्रैव
अङ्गुष्ठस्योत्तरे पर्वे तर्ज्जन्न्युपरि यद्भवेत् । प्रादेशस्य
तु यो देशस्तन्मात्रं चालयेत्करम् ॥ १० ॥ उदात्तं भ्रु-
वि पातेन प्रचयं नासिकाग्रतः । हृत्प्रदेशेऽनुदात्तं तु
तिर्य्यग्गात्र्यादिकाः स्वराः ॥ ११ ॥ स्वरिते त्यङ्गुलं
विद्यान्निपाते तु षडङ्गुलम् ॥ उत्थाने तु नवाङ्गुल्यमे-
तत्स्वारस्य लक्षणम् ॥ १२ ॥ तथा च प्रतिज्ञा सूत्रे ॥
हृद्यनुदात्तो मूर्द्धन्युदात्तः श्रुतिमूले स्वरितइति ॥
अथ स्वरविचारः । तथा चोक्तम् । स्वरउच्चः स्वरो
नीचः स्वरः स्वरित एव च ॥ स्वरप्रधानं त्रैस्वर्य्यं व्य-
ञ्जनं तेन सस्वरमिति ॥ अथोदात्तानुदात्तस्वरित-
स्वराणां लक्षणान्युच्यन्ते । तथा च प्रातिशाख्ये । उच्चैरु-
दात्तः ॥ १ ॥ ऊर्ध्वभागे निष्पन्नःस्वरउदात्तसञ्ज्ञः स्या-
त् । यथा अग्ना ३ इ । "उदात्तवानुदात्तः ॥ २ ॥" इत्ये-
वमादयः । उदात्तप्रदेशाः ॥ नीचैरनुदात्तः ॥ ३ ॥

अधोभागे निष्पन्नः स्वरोऽनुदात्तः स्यात् । यथा । आर्षेयऽऋषीणाम् । अनुदात्तप्रदेशाः । "उदात्ताच्चानुदात्तं स्वरितम् ॥ ४ ॥ उदात्तादक्षरात्परं व्यञ्जनव्यवहितमनुदात्तमक्षरं स्वरितं भवति । यथा स्वाहा हिस्म । हि ष्म ॥ निहितमुदात्तस्वरितपरम् ॥ ५ ॥ अनुदात्तमापद्यते स्वरितं उदात्तपरं स्वरित परं च । उदात्तपरे यथा स्वाहा सोमाय । स्वर्ग्यायेति स्वः ग्याय । प्रसवेऽश्विनोः । परमेष्ठ्यभिधीतः । सुचीवेति । स्वरितपरे यथा स्वाहा स्वर्णार्क्कः ॥ इत्येवमादयः ॥ "उभयवान्स्वरितः ॥ ६ ॥ ऊर्ध्वाधो भागे निष्पन्नः स्वरः स्वरितसञ्ज्ञः स्यात् । यथा स्वः । धान्यमसि ॥ अथ स्वरितस्यैवान्तर्भेदा अष्टौ स्वरा उच्यन्ते ॥ तथा च याज्ञवल्क्यः । अष्टौ स्वरान्प्रवक्ष्यामि तेषामेव च लक्षणम् ॥ जात्योऽभिनिहितः क्षैप्रः प्रश्लिष्टश्च तथाऽपरः ॥ १३ ॥ तैरोव्यञ्जनसञ्ज्ञश्च तथा तैरोविरामकः ॥ पादवृत्तो भवेत्तद्वत्ताथाभाव्य इति स्वराः । १४ । इति । तत्र प्रत्येकलक्षणमुच्यते । तथा च प्रातिशाख्ये ॥ एक पदे नीचपूर्वः सयवो जात्यः ॥ एकस्मिन्पदे नीचपूर्वोऽनुदात्तपूर्वो यकारेण वा सहितो जात्यः स्वरः प्रत्येतव्यः । नीचपूर्व इति सम्भवहि-

घोषणम् । अपूर्वोऽपि भवति । नीचपूर्वो यथा । धान्यमसि । कन्याऽइव । अपूर्वो यथा स्वर्हंवेषु । तथा च याज्ञवल्क्यः । एकपदे नीचपूर्वः सयवो जात्यदृष्यते ॥ अपूर्वोऽपि परस्तद्वद्धान्यं कन्या स्वरित्यपि ॥ १५ ॥ उदात्तादयः परे सप्त ॥ ७ ॥ उदात्तादयः परे सप्त स्वराः प्रत्येतव्याः । अभिनिहितक्षैप्रप्रश्लिष्टतैरोव्यञ्जनतैरोविरामपादवृत्ततथाभाव्याः ॥ त्रयो नीचस्वरपराः ॥ ८ ॥ अभिनिहितक्षैप्रप्रश्लिष्टा नीचस्वरपराः ॥ एदोद्भ्यामकारो लुगभिनिहितः ॥ ९ ॥ एकारौकाराभ्यामुदात्ताभ्याम्परोऽकारोऽनुदात्तो यत्र लुक् लुप्यते तत्राभिनिहितः स्वरो भवति । यथा तेऽग्रसरसाम् । तेऽवन्तु । वेदोऽसि । स्तुपोऽसि । तथा च याज्ञवल्क्यः । एओ आभ्यामुदात्ताभ्यामकारो रिफितश्च यः ॥ अकारो लुप्यते यत्र तं चाभिनिहितं विदुः ॥ १६ ॥ अस्यापवादः । न देशेऽभवति ॥ १० ॥ देशइत्ययमेकारः अभवदित्यस्याकारे लुप्तेऽप्यभिनिहितस्वरितो न भवति । यथा देशेऽभवत् ॥ युवर्णौ यवौ क्षैप्रः ॥ ११ ॥ ह्रस्वस्य यु यूवर्णौ उदात्तौ अनुदात्ते स्वरोदयौ यकारवकाराभ्यां यथासङ्ख्येन युक्तौ यदा तदा क्षैप्रस्वरो भवति । यथा त्रिअम्बकम् । त्र्यम्बकम् । वाजी अर्व-

नृ । व्वाजज्यर्व्वन् । नु इन्द्र । न्विन्द्र । इ अग्नः । द्रग्नः । तथा च याज्ञवल्क्यः । इउवर्णौ यदोदात्तावापद्येते यवौ क्वचित् ॥ अनुदात्ते परे नित्यं विद्यात्क्षैप्रस्य लक्षणम् ॥ १७ ॥ इवर्णऽउभयतो ह्रस्वः प्रश्लिष्टः ॥ १२ ॥ ह्रस्वइकार उदात्तः परश्च ह्रस्वइकारोऽनुदात्तस्तयोः परस्परप्रश्लिष्टे प्रश्लिष्टस्वरो भवति । यथा अभि इन्धताम् । अभीन्धताम् । स्रुचीव । तथा च याज्ञवल्क्यः । इकारो दृश्यते यत्र इकारेणैव सँयुतः ॥ उदात्तश्चानुदात्तेन प्रश्लिष्टो भवति स्वरः ॥ १८ ॥ स्वरो व्यञ्जनयुतस्तैरोव्यञ्जनः ॥ १३ ॥ उदात्तात्पूर्वस्मात्परो यः स्वरो व्यञ्जनयुतः स तैरोव्यञ्जनसञ्ज्ञकः स्वरो भवति । यथा इडे । रन्ते । तथा च याज्ञवल्क्यः । उदात्तपूर्वं यत्किञ्चिद्व्यञ्जनेन च सँयुतः ॥ एष सर्वबहुस्वारस्तैरोव्यञ्जनसञ्ज्ञकः ॥ १९ ॥ उद्वग्रहस्तैरोविरामः ॥ १४ ॥ उदात्तावग्रहस्तैरोविरामसञ्ज्ञकः स्यात् । अयं च समस्तपदेषु भवति । अवग्रहवचनात् । अवग्रहाभावे तु तैरोव्यञ्जन एव । यथा गोपताविति गो । पतौ । यज्ञपतिमितियज्ञ । पतिम् ॥ तथा च याज्ञवल्क्यः । अवग्रहात्परो यस्तु स्वरितः स्यादनन्तरम् ॥ तैरोविरामं तं विद्या-

दुदात्तो यद्यवग्रहः ॥ २० ॥ विवृत्तिलक्षणः पादवृत्तः ॥ १५ ॥ स्वरयोरन्तरं विवृत्तिरुच्यते । तया लक्ष्यतइति विवृत्तिलक्षणः स पादवृत्तसञ्ज्ञो भवति । विवृत्त्या व्यवहित इत्यर्थः । यथा ध्रुवा असदन् । ध्रुवाऽअसदन् । का ईम् । काऽईम् । तथा च याज्ञवल्क्यः । स्वरे च स्वरिते चैव विवृत्तिर्दृश्यते यदि ॥ पादवृत्तो भवेत्स्वारः श्विन्नऽआदित्येति निदर्शनम् ॥ २१ ॥ स्वरयोरन्तरे काले विवृत्तिर्यत्र दृश्यते ॥ स स्वारः पादवृत्तः स्यात्काऽईमिति निदर्शनम् ॥ २२ ॥ उदाद्यन्तो न्यवग्रहस्ताथाभाव्यः ॥ १६ ॥ उदात्तादिरुदात्तान्तो नीचावग्रहस्ताथाभाव्यसञ्ज्ञकः स्वरो भवति । यथा तनूनप्त्रऽइति तनू । नप्त्रे । तनूनपादिति तनू । नपात् । तथा च याज्ञवल्क्यः । उदात्ताक्षरयोर्मध्ये भवेन्नीचस्त्ववग्रहः ॥ ताथाभाव्यो भवेत्कम्पस्तनूनप्त्रे निदर्शनम् ॥ २३ ॥ केषांचिन्मते नाष्टमस्तु ताथाभाव्यः, कम्परूपस्य ताथाभाव्यस्य वाजसनेयिनां संहितापाठे निराकृतत्वात् । उक्तं च माध्यन्दिनशिक्षायाम् । औज्जिहायनकैर्माध्यन्दिनमतानुसारिभिः । अवग्रहो यदा नीचउच्चयोर्मध्यतः क्वचित् ॥ २४ ॥ ताथाभाव्यो भवेत्कम्पस्तनूनप्त्रे निदर्शनम् ॥ पदपाठे भवत्येव कम्पो नाम स्वरस्तथा ॥ २५ ॥ इत्यष्टौ

स्वराः सोदाहरणा व्याख्याताः ॥ ऋजुं निहत्य प्रणिहन्यतऽउदात्ते ॥ १७ ॥ ऋजुं स्वरितस्वरं निहत्य हस्तमनुदात्तवत् । ततो ऽत्यन्तं निहन्यते नीची क्रियते जात्याभिनिहितक्षैप्रप्रश्लिष्टा उदात्ते परभूते । यथा स्वः द्यौरिव । स्वर्द्यौरिव । प्रसवे अश्विनोः । प्रसवेऽश्विनोः । नि अत्रिणम् । न्यत्रिणम् । स्रुचि इव । स्रुचीवेति । उदात्त इति कस्मात् । धान्यमसि । वैष्णव्यौ । प्रचयस्वरलक्षणमाह । स्वरितात्परमनुदात्तमुदात्तमयमेकमनेकं वा ॥ १८ ॥ स्वरितात्परमनुदात्तमेकमनेकं वाऽक्षरमुदात्तवत् । एकश्रुत्या उच्चारणीयं स्यात् । अयमेव प्रचयः प्रचितः प्रचो निचित उदात्तमयइति वैदिकैर्व्यवह्रियते । हस्तं तु नासिकाग्रसम्मितं कृत्वा प्रदर्शनीयः । प्रचयन्नासिकाग्रतइति याज्ञवल्क्यशिक्षावाक्यात् । यज्ञपतिः । अद्याऽस्त्येषऽआर्षेयः ॥ नोदात्तस्वरितोदयम् ॥ २० ॥ स्वरितात्परमनुदात्तं उदात्ते स्वरिते वा परे प्रचयं न स्यात् । इर्ठ॰ हस्व मा । तनच्मि त्विषणो । सादन्न्यँव्विदथ्यम् ॥ उदात्तवाननुदात्तः । स्वरितवान्स्वरितः । यत्र सूत्रद्वयस्य प्राप्तौ सत्यां विप्रतिषेधऽउत्तरम्बलवद्भवति । यथा सूनवेऽग्ने । अद्दूत्येऽवसे ॥

स्वरविधायकं शास्त्रम् ॥ अथ स्वरसन्धिरभिधीयते ॥ सꣳहितायाम् । १ । अधिकारोऽयम् । पदान्तपदाद्योः सन्धिः । २ । यदत्र सन्धिकार्य्यमुच्यते तत्पदान्तपदाद्योः स्यात् ॥ स्वरे भाव्यन्तस्थाम् । ३ । अकसङ्घो भावी । इत्यनेन सूत्रेण भावीसङ्गोक्ता । ते भावीसञ्ज्ञका इ उ ऋ लृ स्वराः स्वरे परे अन्तस्था यवरलाः क्रमश आपद्यन्ते। उदाहरणं यथा पुनात्यच्छिद्रेण । व्वाज्ज्यर्व्वी । व्वेत्त्वाज्यस्य । व्विभूर्म्मात्रा प्प्रभूः पित्रा । लृकारोदाहरणं नास्ति संहितायाम् ॥ सन्ध्यक्षरमयवायावम् । ४ । सन्ध्यक्षरसञ्ज्ञकाः स्वरा एओ ऐऔ स्वरे परे अय् अव् आय् आव् एतानादेशानापद्यते । यथा इडऽएहि । अयादेशे कृते "यवयोः पदान्तयोः स्वरमध्ये लोपः । ५ । द्वयोः स्वरयोर्मध्ये विद्यमानयोः पदान्तयोर्य्यकारवकारयोर्लोपः स्यात् । सरस्वत्याऽइन्द्राय । व्विष्णो एते इति स्थिते अवादेशे कृते लोपे च पूर्वसूत्रेण प्राप्तेऽग्रिमसूत्रेण निषेधः कृतः ॥ न वकारस्यासस्थान एकेषाम् । ६ । स्वरयोर्मध्ये विद्यमानस्य वकारस्य पदान्तस्य लोपो न स्याद्भिन्नस्थाने स्वरे परे, यथा व्विष्णावेते । आनन्दनन्दावाण्डौ । असस्थानइति किम् । व्विष्णाऽउरुगाय । ऊरू पादाऽउच्येते ॥ वारुण्याऽऋकारे ह-

स्वम् । ७ । करण्य स्वरऋकारे परे ह्रस्वं स्वरमापद्यते । त्वऽऋभुमते ॥ सिठं॰ सवर्णे दीर्घम् । ८ । सिमृसञ्ज्ञकः स्वरः सवर्णे परे पूर्वः परश्च एकं दीर्घमापद्यते । यथा नारातये । स्वाहाग्नये । यौमीदम् । पचन्तूषे । अत्र स्वरे भाव्यन्तस्यामिति प्राप्ते विप्रतिषेधद्भूत्यनेन परत्वादिदमेव भवति ॥ करण्यादिवर्णऽएकारम् । ९ । करण्यात्परद्रूवर्णपूर्वः परश्चैकारमापद्यते । जयेन्द्राय । एदम् ॥ उवर्णं ओकारम् । १० । करण्यात्परउवर्णः पूर्वश्च एकमोकारमापद्यते । इहोर्ज्जम् । प्रोहामि ॥ सन्ध्यक्षरमैकारौकारौ । ११ । करण्यात्स्वरात्परं सन्ध्यक्षरपूर्वं एतौ ऐकारौकारौ आपद्येते । यथा आजायैष ते । इन्द्रैयेन्द्रम् । ओजिष्ठौजिष्ठः । प्रौचन् ॥ समुद्रस्येमँस्त्वेमँस्त्वोझन्निति च । एते निपात्यन्ते । अन्यथा प्राप्तस्य अन्यथोच्चारणं निपातनम् । यथा अपां पृष्ठे समुद्रस्येमन् । अपान्त्वेमन् । अपान्त्वोझन् ॥ नपरकालः पूर्व्वकाले पुनः । १२ । जातः परकालो विधिः पूर्व्वकाले विधौ प्राप्ते सत्यसिद्धः स्यात् । तऽ इह श्रुवन्तु । पादाऽउच्येते । अराध्याऽएदिधिषुःपतिम् । राथ्याऽ ऋच्छः । अत्र यवयोः पदान्तयोरित्यस्य परकालत्वात्तस्मिञ्जाते पूर्वकालं यथायथं प्राप्तं स-

न्विकार्यं न भवति ॥ आरम्भकारोऽष्टकात् । १३ । अष्टकात्पर ऋकारः पूर्वस्य एकमात्रमापद्यते । करच्च ऋकार इत्यस्यापवादः । यस्यावश्यं प्राप्तौ सत्यां यो विधिरारभ्यते स तस्यापवादः, यथा स्वपनमार्त्यै ॥ एदोद्भ्यां पूर्वमकारः । १४ । एदोद्भ्यां परो अकारः पूर्वस्य एकमेकारं ओकारं वाऽऽपद्यते । एतत्प्रकरणे यानि विसर्गान्तानि पदानि तेषां "सर्वो अकार ओकारं" इत्यनुवर्त्तमाने "अकारे च"ति वक्ष्यमाणसूत्रद्वयेन च ओकारान्तत्वम् । उदाहरणं यथा अग्नयेऽनीकवते । अग्नेर्भ्रायोऽभीतम ॥ प्रकृतिभाव ऋत्तु । १५ । ऋत्तु नियताक्षरच्छंदस्सु मन्त्रेषु एदोद्भ्याम्परो अकारः प्रकृत्या भवति । एदोद्भ्यामित्यस्यापवादः । यथा गर्भेऽअन्तः । वायोऽ अस्मिन् ॥ यजुष्षु च । १६ । अनियताक्षरेषु अविशेषेण एकारौकाराभ्यां परः अकारः पूर्वस्य एकारमोकारं वाऽऽपद्यते । यथा अग्रेपुवोऽग्रे । च मेऽपानः । चकारादृक्ष्वपि क्वचित् । योऽसावादित्ये पुरुषः सोऽसावहम् ॥ का भुवोती सदना होतारा ज्या स्वधा पृथिवी प्रतिमिमसदन्नश्यामाकर्मोर्द्धमियमवस्तादुतास्तिषु ॥ १७ ॥ कादीनि नव पदानि यथासङ्ख्यं इमादिषु नवसु परेषु प्रकृत्या भवन्ति । का-

ऽईम् । भुवाऽअसदन् । ऊतीऽअश्याम । सदनाऽअक-र्म होताराऽऊर्द्धम् । ज्याऽइयम् । स्वधाऽअवस्तात् । पृथिवीऽउत द्यौः । प्रतिमाऽअस्ति ॥ प्रगृह्य ९ स्व-रे ॥ १८ ॥ प्रगृह्यसञ्ज्ञकं पदं स्वरे परे प्रकृत्या भवति । इन्द्राग्नीऽ अपात् । इन्द्रवायूऽ इमे । शिप्रेऽअवेपयः । अस्मेऽआरात् । त्वेऽइषः । अमीऽअन्यः ॥ उकारोऽपृक्तोऽसम्पर्शात् ॥ १९ ॥ पूर्वेण भावे नियमार्थं वचनम् । अपृक्तउकारः स्पर्शात्परत्वाभाव एव प्रकृत्या । एतवाऽउऽअग्नि । अस्पर्शात्किम् । तद्वन्तिके । सम्वतद्धामि ॥ न रोदसीमे ॥ २० ॥ रोदसी इत्येतद्द्विवचनान्तं पदमपि प्रकृत्या न भवति इमे शब्दे परे । रोदसी मे ग्ये ॥ इत्यष्टौ स्वराः सोदाहरणा व्याख्याताः। अथाङ्गुलिभिः प्रदर्शनीयविषया व्याख्यायन्ते । तत्र व्यञ्जनानामिमे धर्माः सन्ति ह्येतस्मात्कारणादादौ व्यञ्जनसन्धिरुच्यते । तकारवर्गश्चकारवर्गे चकारवर्गम् । १ । तकारादयः पञ्च चकारादि पञ्चान्यतमे वर्णे परे चकारादीन्यापद्यन्ते । अत्र स्थान्यादेशयो र्यथासङ्ख्यम् निमित्तकार्यिणोस्तु न "शकारे चे"त्यस्याप्येतत् । सूत्रशेषत्वेन निमित्तानां षट्त्वात् । योगविभागस्तु तावत एवोत्तरसूत्रेऽनुवृत्त्यर्थः । यच्चाहम् । याच्छच्छन्दः । अनूव्रजेषम् । यान्तू-

स्नयत्नु ॥ शकारे ॥ २ ॥ शकारे च परे तवर्गश्चवर्गमापद्यते । अद्भिर्त्याऽग्न्सश्नुभिः ॥ परश्चास्सर्शपरश्छम् ॥ ३ ॥ तवर्गात्परः शकारश्छकारमापद्यते स्पर्शपरो न चेत् । चात्पूर्वश्चवर्गम् । यच्छूद्रे । कूश्माञ्छकपिण्डैः । अस्पर्शपरः किम् । पूर्वस्मन्नोदाहरणं बोध्यम् ॥ नुः । ४ । अधिकारोऽयम् ॥ अनुनासिकमुपधा । ५ । अयमपि तथा ॥ चछयोः शम् । ६ । चकारे छकारे च परे नकारः शकारमापद्यते । उपधा चानुनासिकम् । ताँश्चक्रे । जटायां अवँश्छन्ति ॥ तथयोः सम् । ७ । तकारे थकारे च परे नकारः सकारमापद्यते । उपधा चानुनासिकम् अश्मँस्ते । पश्चँस्तान् ॥ दधन्वान्स्वधान्यकारे लोपम् । ८ । अनयोर्नकारो यकारे परे लोपमापद्यते । नाचानुनासिकोपधा । उक्तं च वसिष्ठशिक्षायाम् । स्वराणामानुनासिक्यं प्रतिजानन्ति सर्वदा । वर्जयित्वा तमाकारं यत्र लोपो विधीयते । दधन्वा यः । स्ववायातु ॥ रयिष्टधे च । ९ । रयिष्टधे परे नकारो लोपमापद्यते । पीवोऽअन्नारयिष्टधः ॥ नॄन्पकारे विसर्जनीयम् । १० । न्टनित्ययं नकारः पकारे परे विसर्जनीयमापद्यते । अनुनासिका चोपधा । न्टँःऽ पाहि ॥ यतॄन्नरिष्वीन्क्रतून्वनस्पतीन्स्वरे रेफम् । ११ । एतेषां नकारः स्वरे परे रेफमाप-

द्यते । अनुनासिका चोपधा । शतृन्ँ १ ॥ रप । परि-धीँ १ ॥ रपोणुँ । क्रतूँ १ ॥ रनु ॥ एते ह्येकार्द्धमात्रिका भवन्तीति पाराशरेणोक्तम् ॥ आकारोपधो यकार-म् । १२ । आकारोपधो नकारो यकारमापद्यते स्वरे परे अनुनासिका चोपधा । याँ २ ॥ ऽआवहः । अत्र यवयोरित्यनेन लोपेऽपि "न परकालः पूर्वकाले पुन"-रित्यनेन तस्यासिद्धत्वात्प्रकरणान्तरस्थत्वाच्चानुनासि-कवर्जनं न भवति ॥ स्पर्शोऽपञ्चमः स्वरधौ तृतीय-म् । १३ । प्रतिवर्गमाद्याः स्वरे धिसञ्ज्ञके च परे वर्गतृतीयमापद्यन्ते । ऋधगित्या । देडसि । तदि-दासम् । सङ्क्रमोदाहरणं । अनुष्टुबेवः । ऊर्गसि । राडयन्त्री । तस्माद्यज्ञात् । त्रिष्टुब्जगती । अप-ञ्चमः किम् । युङ्ङसि । अस्मिन्यज्ञे ॥ पञ्चमे पञ्चम-म् । १४ । अपञ्चमः स्पर्शः पञ्चमे स्पर्शे परे पञ्च-ममापद्यते । वाक्मात्या । वाङ्मात्या । यन्मे छिद्र-द्रम् ॥ हश्च तस्मात्पूर्वचतुर्थम् । १५ । अपञ्चमात्परो हकारः पूर्वस्य चतुर्थमापद्यते चात्पूर्वस्तृतीयम् । वा-ग्घुतः । समसुस्तोढ्ढः । अवाड्ढव्यानि । अपञ्चमा-त्किम् । जीमूतान्हृदयौपशेन ॥ "अनुस्वारꣳ रो-ष्मसु मकारः । १६ । मकारो रेफे ऊष्मसु च परे-ष्वनुस्वारमापद्यते । "अनुस्वारस्य ꣳमित्यादेशः प्रा-

षसहरेफेषु” । तेषामनुस्वारादीनामङ्गुलिभिः प्रकारो दर्शितवान्याज्ञवल्क्यः । मुष्ट्याकृतिर्मकारे तु नकारे तु नखग्रहः । ककारान्ते टकारान्ते ङणोऽधोऽङ्गुलिनामनम् । १ । पञ्चाङ्गुल्यं पकारे तु लकारे कुण्डलाकृतिः । ऊर्द्ध्वक्षेपाच्च योष्माख्यादधः क्षेपाच्च यो भवेत् । २ । एकैकामुत्सृजेद्धीरः स्वरिते तूभयं क्षिपेत् । स्वरितं यद्भवेत्किञ्चित्सवकारोष्मकं ततः । दीर्घं वा यदि वा ह्रस्वं निक्षेपउभयोरपि ॥ ३ ॥ जात्ये च स्वरिते चैव यकारो दृश्यते यदि॥ कर्त्तव्यस्तूभयोः क्षेपो व्यायव्यैरिति दर्शनम् ॥ ४ ॥ तथा च लघुमाध्यन्दिनीयशिक्षायाम् । कनिष्ठामोचनं कुर्य्यान्नीचे च प्रचये सति । नमः कूप्याय प्रथमो द्वितीयो जाग्रतस्तथा । १ । तर्जनीमोचनं कुर्यादुदात्ते तु विसर्गके । देवो घर्मस्तथा ह्रस्वे स्वरिते तूभयं क्षिपेत् । २ । अश्वो मर्त्यो भवेल्लक्ष्यं स्वारे दीर्घे कनिष्ठिकाम् । उभयोरपि ह्रस्वे च वकारे स्वरिते सति । ३ । दीर्घेऽपि चोभयोः क्षेपइति शास्त्रव्यवस्थितिः । अस्यार्थः । मकारेमुष्टिः । नकारे अङ्गुष्ठेन तर्जनीनखग्रहणम् । ककारे टकारे ङकारे, णकारे पदपाठे दृषदवस्थित्यादौ च तर्जनीमधो नामयेत्। पकारे पञ्चाङ्गुलिमेलनम् । तकारे कुण्डला-

कारः । एते प्रकाराः पदान्तीयेषु सर्वत्र । उदात्तात्प-रे विसर्गे तर्जन्याः प्रसारणम् । अनुदात्तात्प्रचयाच्च प-रे कनिष्ठिकायाः प्रसारणम् । ह्रस्वात्स्वरितात्परे चो-भयोस्तर्जन्यकनिष्ठिकयोः प्रसारणम् । दीर्घात्स्व-रितात्परे विसर्गे कनिष्ठिकायाः क्षेपः । वकारयुक्ताद्दी-र्घादपि परे चोभयोः । वकारयुक्ताज्जात्यस्वरिताद्दी-र्घाच्चोभयोः । इत्यङ्गुलिप्रदर्शनीयविषया निरूपि-ताः ॥ अनुस्वारविषयो व्याख्यायते ॥ अनुस्वारꣳ रो-ष्मसु मकारः । १ । मकारोऽनुस्वारमापद्यते रेफसहि-तोष्मपरेषु । यथा अपाम् रसेन । अपाꣳरसेन । त्वा-म् । शम्वन्तः । त्वाꣳशम्वन्तः । देवम् सवितारम् । दे-वꣳ सवितारम् । उरुम् हि । उरुꣳ हि । तथा-च प्रतिज्ञासूत्रे । अनुस्वारस्य ꣳमित्यादेशः शषसह-रेफेषु, तस्य त्रैविध्यमाख्यातं ह्रस्वदीर्घगुरुभेदैर्दीर्घा-त्परो ह्रस्वो ह्रस्वात्परो दीर्घो गुरौ परे गुरुः । अ-नुस्वारस्य स्थानेꣳ इत्यादेशो भवति शषसहरेफेषु परेष्विति शेषः । यथा त्रिꣳशत् । हवीꣳषि । प-याꣳसि । हꣳहस्व । सꣳरायः । ह्रस्वादक्षरात्परो दीर्घः । गुरौ परे नाम संयुक्ताक्षरे परे गुरुर्भवति । क्रमेणोदाहरणानि । दीर्घात्पराद्ध्रस्वो यथा । पृथि-व्याꣳशतेन । यजूꣳषि । सꣳस्रवाꣳसम् । अङ्क्ताꣳह-

त्विषा । इषाᳲ रयीणाम् । ह्रस्वात्परो दीर्घो यथा त्रि-ठं॰ शद्धाम । सर्वठं॰ षडिति । भूयासठं॰ सुगृहप-तिः । सठं॰ रायस्पोषेण । गुरौ परे गुरुर्यथा । मेघ-नᳲ श्रिया । दᳲष्ट्राभ्याम् । सोमानᳲ स्वरणम् । सि-ᳲह्यसि । रकारसंयोगे परे दीर्घ एव भवति न तु गुरुः । उक्तं च कात्यायनशिक्षायाम् । अनुस्वारस्य ठं॰कार आदेशश्छन्दसि स्मृतः । ऊष्मरेफेषु परतस्तस्य द्वैविध्यमुच्यते । १ । ह्रस्वाद्दीर्घो दीर्घाद्ध्रस्वो गुरौ च परतो गुरुः । रकारपर ऊष्मान्तो दीर्घोदी-र्घोऽपि जायते । २ । तथा चामोघनन्दिनीशिक्षायाम् । अनुस्वारो द्विमात्रः स्याद्वर्णव्यञ्जनोदये । ह्रस्वाद्वा यदि वा दीर्घोद्देवानाठं॰ हृदये यथा । ३ । सठं॰स्पृष्ट-जित्सठं॰स्पृष्टां संयोगे ह्रस्व दृश्यते ॥ इत्यनुस्वारवि-षयः । अथानुस्वारेऽङ्गुलिप्रदर्शनविचारः । तथा च मल्लकविकृतसर्वसङ्ग्रहहस्तस्वरप्रक्रियाग्रन्थे । दीर्घे तु देशिनी त्याज्या क्षिप्रं स्याद्द्विलके लघौ । ४ । अस्या-र्थः । अनुस्वारप्रकरणस्थत्वाद्दीर्घे अनुस्वारे देशिनी प्रदेशिनी त्याज्या निष्काश्या । द्विलके गुरौ लघौ ह्र-स्वे च अनुस्वारे क्षिप्रं स्यात् । क्षिप्रं नाम अग्रिम-कारिकायामेवोक्तम् । तर्जन्याः पृष्ठसंश्लिष्टमङ्गुष्ठं चा-ग्रनामितम् । तं क्षिप्रं हि विजानीयात्स्वरविद्भिरुदी-

रितम् । ५ । अयं भावः । लघौ अनुस्वारे गुरौ अनुस्वारे च तर्जन्याः पृष्ठमङ्गुष्ठाग्रेण नामितं कार्यम् । इदमप्य-नुस्वारेङ्गुलिक्षेपद्धति सामान्येनोक्त्वा, अङ्गुष्ठाकुञ्चनं लघावनुस्वारे स्वपाठ्ं रसम् । दीर्घे रङ्गे च तर्जन्याः प्रसारः परिकीर्त्तितः । ६ । इत्यनया दीर्घेऽनुस्वारे रङ्गे च तर्जन्याः प्रसारणं तदन्ये ह्रस्वे गुरौ चानुस्वारेऽङ्गु-ष्ठाकुञ्चनमिति, भगवता याज्ञवल्क्येन प्रतिपादितेन वाक्येनाप्यविरुद्धं भाति । तर्जन्याकुञ्चनं तु बाध्याभा-वाद्विशेषविहितत्वाच्च भवति । अत एव विद्वांसोऽपि दीर्घेऽनुस्वारे तर्जन्याः प्रसारणम् । लघौ गुरौ चानु-स्वारे तर्जनीपृष्ठेऽङ्गुष्ठं नामयति ॥ स्पर्शे परपञ्चमम् । २ । मकारः स्पर्शे परस्य पञ्चममापद्यते । हिङ्काराय । घङ्ङ्नामि । इषुङ्किरिप्यन्तीत्याद्युदाहरणं बोध्यम् ॥ परसवर्णपरप्रकृत्या । ४ । परस्य वर्णस्य किञ्चित्सदृ-शोच्चारणीयम् ॥ अन्तस्थामन्तस्थास्वनुनासिकां परस-स्थानाम् ५ । अन्तस्थामन्तस्थासु परासु परेण समान-स्थानामनुनासिकामन्तस्थामापद्यते । तँय्यज्ञम् । सँ-व्यपामि । तँल्लोकम् ॥ तकारो ले लम् । ६ । तकारो ल-कारे लकारमापद्यते । आसील्लोकम् । परिचिल्लोका-म् ॥ नुश्चानुनासिकम् । ७ । नकारो लकारे परे अनुना-सिकं लकारमापद्यते । अस्मिँल्लोके । भीँल्लोकान् ।

स्वरच्छकारे चकारेण सर्वत्र । ८ । स्वरः छकारे परे चकारेणागमिकेन स विधीयते पदादिमध्यान्तेषु । पच्छायद्रमसि । माच्छन्दः । जगतीच्छन्दः ॥ यस्यातिशायमहेति न । ९ । एतेषाम् । बृहच्छन्दसः । अतिहायच्छिद्रा, यस्य छाया । ङ्नौ ताभ्यां सकारे । १० । ङकारनकारौ यथासङ्ख्यं ककारतकाराभ्यां व्यवधीयेते सकारे परे ॥ प्राङ्क्सोमः । समुद्रान्त्समसृपत् । उदस्तभाने लोपम् । ११ । उदः परः स्तभानशब्दीयसकारो लोपमापद्यते । उत्तभान । "तस्मादित्युत्तरस्यादेः" इत्यादिसम्बन्धेऽस्य शहितस्येत्युक्तत्वात् । उद्व एस्तभानेत्यत्र न सकारलोपो भवति । भाव्युपधस्य रिफितविसर्जनीयो, रेफे लुप्यते दीर्घश्चोपधा । १२ । भाविरुद्धोपधो रिफितस्य विसर्गो रेफे परे लुप्यते उपधा च दीर्घमापद्यते । वसुभीरुद्रैः । जटायामुदाहरणम् । अन्तारकरः । मोरगांऽसि । रुरुद्रैः । धतूराय: ॥ रिफश्च स्वरघौ । १३ । भाव्युपधो रिफितस्य विसर्गः स्वरे परे घिसञ्ज्ञके च परे रेफमापद्यते । दृश्निरक्रमीत् । वायुरनिलम् । अग्निर्मूर्द्धा । त्वष्टुर्जामातः । अहर्जिन्व । "अहरभकारपर" मित्युक्तत्वात् । युद्धारु यमहोऽभ्यः । स्वद्यौरिव । "पदादिश्चाजित्पर" इत्युक्तत्वात् । स्वर्ग्याय । "अनरत्व" इत्युक्तत्वात्स्वाय चारणाय च । "अजित्परत्वा" त्वास्य

निषेधः ॥ कण्ठ्यपूर्वो यकारमरिफितः । १४ । रिफित-भिन्नः कण्ठ्यपूर्वो विसर्गो यकारमापद्यते स्वरे परे । घृ॒ऽइमा व्विश्वा । शुष्माऽओषधीनाम् । यवयोरिति लोपः ॥ लोपन्धौ । १५ । अरिफितः कण्ठ्यपूर्वो विसर्गो लोपमापद्यते धौ परे । देवा देवैः । अयक्ष्मा मा ॥ भूमेश्चाकारेऽष्टके । १६ । भूमिशब्दसम्बन्धी विसर्गो लोपमापद्यते अष्टकाकारे परे । भूम्याददे ॥ सर्वो अकार ओकारम् । १७ । ह्रस्वाकारपूर्वो अरिफितो विसर्गः लोपश्च ओकारमापद्यते धौ परे । "लोपं धा" वित्यस्यापवादः । देवो देवैः, देवो वः सविता ॥ अकारे च । १८ । अरिफितो ह्रस्वकण्ठ्यपूर्वो विसर्गः सपूर्व ओकारमापद्यते अकारे परे । स्तुपोऽसि । कृष्णोऽसि ॥ स्वोरुहावहश्च राज्याम् । १९ । स्वरित्ययं रुहे अहरित्ययं रात्रिशब्दे परे सपूर्व ओकारमापद्यते । स्वोरुहाणाः । अहोरात्रयोः ॥ चछयोः शम् । २० । विसर्गश्चछयोः शमापद्यते । इन्द्रश्च । प्रजापतिश्छन्दः ॥ तथयोः सम् । २१ । विसर्गस्तथयोः समापद्यते । कस्त्वा । नमस्ते ॥ अविकारं० शाकल्यः शषसेषु । २२ । एषु विसर्गो विकारन्नापद्यते शाकल्यमतेन । वायव्याः श्वेताः ॥ अग्नीषोमयोः षष्ठी । व्यानस्सत्यः ॥ प्रकृत्या कखयोः पफयोश्च । २३ । कखयोः पफयोश्च परयोर्विसर्गः प्रकृत्या भवति । सिमाः

क्षरवन्ति, ततः खनेम । वसोः पवित्रम् । युः फ-
लिनोः ॥ तस्मिँल्लुप्तजिह्वामूलीयोपध्मानीयनासिक्या
न सन्ति माध्यन्दिनानाम् । २४ । इति पाणिनीयसूत्रैः
प्राप्ताः प्रतिषेधा बोध्याः ॥ लुङ्मुदि जित्परे । २५ ।
जित्सञ्ज्ञके परे मुत्सञ्ज्ञके च परभूते विसर्गो लुप्यते ।
अन्तास्तुताः । ऊर्ज्जस्त्य ॥ उपवसने पीवः । २६ । अयं
विसर्गो लुप्यते उपवसने परे । पीवोपवसनानाम् ॥ स-
ओषधीमयोः । २७ । स इति विसर्गो लुप्यते ओषधी-
शब्दे इमशब्दे च परे । सौषधीरनु । सेमान्नः ॥ व्यञ्ज-
ने च । २८ । सइत्ययं विसर्गो लुप्यते व्यञ्जने परे । स
ते लोकः स पर्य्यगात् । स बोधि ॥ स्य एष च । २९ । स्यः
एषः इमौ विसर्गौ लुप्येते व्यञ्जने परे । स्यरात्यः ।
एषते । एषच्छागः ॥ स्य वाजी । एषस्य । इदं सूत्रद्वयं
"तथयोः स"मित्यादीनां बाधकम् । स्य वाजी स बोधी-
त्यादौ "सर्वो अः कार ओकार"मित्यनेन पूर्वान्विधीन्बा-
धन्ते नोत्तरानिति न्यायेन "विप्रतिषेधऽउत्तरस्बलव-
दलोपे" । ३० । इत्युक्तत्वादेतस्य बाधो मध्येऽपवादः प्रा-
प्तः अलोप इत्युक्तत्वान्न भवति ॥ अनितावध्याये । ३१ ।
अधिकारोऽयम् । विधीयमानमागमविकारादिकार्यमितौ
परे न भवति । उपस्थितं विना इति परत्वासम्भवात् ।
स्थितोपस्थितस्य तु एकविषयत्वादन्तःपदविकारागमवि-

षयोऽयं निषेधः । अध्याये इत्यधिकारोऽवध्यर्थम् । अधि-
कारः किम् । ततस्त्वमिति ततः । तरम् । इत्यादौ "तथ-
योः स"मित्यादि भवति । अध्याये किम् । गोऽवच्छमिति
गो । व्यच्छत् । इत्यादौ "स्वरे भावी"त्यादि भवति ।
अयं निषेधो विकारवतः पदस्यैव स्थितोपस्थिते ना-
न्यत्र तेन रायस्पोषदऽइति रायस्पोष । दे । अत्र रा-
यः सहस इति सकारो भवति ॥ इति वक्ष्यर्यायाम् ।
३२ । पुनरुच्चारितं चर्चा । इतेः परं पदं तत्र इतौ परे
यथा न भवति तद्वदेव ॥ ककारपकारयोः सकारम् ।
३३ । भाव्युपधः षकारम् । ३४ । भाव्युपधो विसर्गः ष-
कारमापद्यते । परिशेषात्कण्ठ्यपूर्वः सकारं मवारे च
परे । अधिकारोऽयम् । उत्तरसूत्रेषु यथायोग्यमुभयोः
सम्बन्धः ॥ आविर्निरिड इडाया वसतिर्वरिवः । ३५ ।
एतेषां षण्णां विसर्गः ककारपकारयोर्यथायथं सकारं
षकारं चापद्यते । आविष्कृणुष्व । अम्ब निष्पर । इड-
स्पदे इडायास्पदम् । वसतिष्कृता । वरिवस्कृणोतु ॥
दिवोऽककुत्पृथिव्योः । ३६ ॥ दिव इत्ययं विसर्गः कप-
योः सत्वमापद्यते ककुत्पृथिवीशब्दौ वर्जयित्वा । दिवस्प-
रि । दिवस्पुराय । दिवस्पृष्ठे । अककुदित्यादि कि-
म् । दिवः ककुत् । दिवः पृथिव्याः ॥ रायः सहस-
स्पोषपुत्रयोः । ३७ । एतौ यथासङ्ख्यं पोषपुत्रयोः प-

रयोः सकारमापद्येते । रायस्पोषे । सहसस्पुत्र ॥ तमसोऽरस्तात् । ३८ ॥ कपयोरयं विसर्गः समापद्यते परस्ताच्छब्दं वर्जयित्वा । तमसस्परि । अपरस्तात्किम् । तमसः परस्तात् ॥ तमसस्पृथिव्याम् । ३९ । अयं समापद्यते पृथिवीशब्दे । तमसस्पृथिव्याम ॥ अह्नो रजसो रिषस्पुषस्पातौ । ४० । एते चत्वारः पाधातौ सकारमापद्यन्ते । अह्नस्पातु । रजसस्पाति । रिषस्पाहि सहस्पुषस्पाहि ॥ अह्नस्कुर्वितिच । ४१ । एतन्निपात्यते । सकर्मा२५ ॥ अह्नस्कुरु ॥ समानपदे च । ४२ । एकपदे विद्यमानो विसर्गः कपयोर्यथायथं सकारं षकारं चापद्यते इतौ परे चर्चायां च न ॥ श्रेयस्करः । तपस्पतिः । हविष्कृत् । चतुष्पात् । स्थितोपस्थिते । श्रेयः करेति श्रेयः कर । तपः पतिरिति तपः । पतिः । नःपत्यमितिनः । पत्यम् । हविष्कृदिति हविः कृत् । चतुःपादिति चतुः । पात् । इत्यादि भवति ॥ परावसाने । ४३ । अवसानस्थिते परिशब्दे परे विसर्गः समापद्यते । ओषधयस्परि । अवसाने किम् । हेडः परि ते ह्वयात् ॥ कविः करत्कृधिषु । ४४ । एतेषु विसर्गः कविशब्दे सकारं षकारं चापद्यते । वसुष्कविः । छन्दसस्करत् । पुनस्कृधि ॥ कृधीश्च कृधौ सकारम् । ४५ । कृधीरित्ययं विसर्गः कृधिशब्दे सकारमापद्यते । भाव्युप-

षत्वात्पूर्वं सूत्रेण षकारे प्राप्ते विधिः । अग्नीस्कृधि ॥ सदो द्यौर्नमस्कृतं पितापयेषु । ४६ । सदइत्यादीनां त्रयाणां विसर्गः कृतमित्यादिषु यथायथं सं षं चापद्यते । येषामस्तु सदस्कृतम् । उपह्वतो द्यौष्पिता । यस्मै सप्रथा नमस्पथे ॥ पतितालव्यस्वरोदये, पदे च । ४७ । तालव्यस्वरान्ते पतिशब्दे पदरूपे परे विसर्गः सकारमापद्यते । तालव्यस्वरोदयइति सम्भवाभिप्रायम् । ब्रह्मणस्पते । वाचस्पतये । वाचस्पतिम् । पदे किम् । "तस्मिन्निति निर्दिष्ट" इतिसप्तमीनिर्दिष्टवर्णविषयम् । अत्र चेदमेव ज्ञापकं पदावयवे व्यवहितस्यासम्भवात् । यतो जातः प्रजापतिः ॥ न परुषः परुषि । ४८ । परुषइत्ययं विसर्गः परुषि न सकारमापद्यते । "समानपदे चे"ति प्राप्तस्य निषेधः । प्ररोहन्ती परुषः परुषः ॥ वाजपतिर्वासऽएदिधिषुरन्तःपर्श्व्येनान्तःपार्श्व्यमिति च । ४९ । वाजपतिरित्यादीनां षयाणां विसर्गो अन्तःपर्श्व्येनेत्यादिपदद्वयसम्बन्धी च न विकारमापद्यते । वाजपतिः कविः, "कविः कर"दित्यस्य निषेधः । वासःपल्पूलीम् । एदिधिषुःपतिम् । अन्तःपर्श्व्येन । अन्तःपार्श्व्यम् । "समानपदे चे"ति प्राप्तस्य निषेधः । इति चेति अनुक्तसमुच्चयार्थं तेन जातः पतिरित्यत्र न सकारः ॥ अहः पतौ रेफम् ।

५०। अहरित्ययं विसर्गः पतिशब्दे परे रेफमापद्यते। समानपदइत्यस्यापवादः। अहर्पतये। स्थितोपस्थिते तु अहः पतयऽइत्यहः। पतये॥ परस्य मूर्द्धन्यम्॥ ५१॥ अधिकारोऽयम्। परस्येति तऽआघादनाडम्बरादित्यस्मात्प्राक् मूर्द्धन्यमिति तमभि व्याप्य॥ स्वर्धूः साᳬसह्योः॥ ५२॥ स्वः धूः इमौ यथा संख्यं साम् सह इत्येतयोः रेफमापद्यते, परस्य मूर्द्धन्यम्। स्वर्षामश्वाम्। इतं धूर्षाह्यौ॥ "विकारी यथासन्न"मिति ईषद्विष्टतत्वात्षकारः। स्थितोपस्थिते स्वः सामिति स्वः। साम्। धूः सह्याविति धूः। सह्यौ॥ उकारन्दुड्ढे॥ ५३॥ दुरित्ययं विसर्जनीयः उकारमापद्यते परस्य मूर्द्धन्यम्। धिसञ्ज्ञकत्वादसोष्मत्वान्निरनुनासिकत्वाच्च उकारः। परिते दूडभः। स्थितोपस्थिते दुड्ढभऽइतिदुः। दभः। अध्यायइत्युक्तत्वादुपस्थिते "रेफᳬस्वरभा"विति भवति, स्थिते तु न संहिताया अभावात्॥ ओकारमितः सिञ्चतौ सोपधः॥ ५४॥ इत इत्ययं विसर्गः पूर्ववर्णसहित ओकारमापद्यते सिञ्चतौ परे परस्य मूर्द्धन्यम्। परीतो षिञ्चता सुतम्॥ इति विसर्गसन्धिकार्यम्॥

# अथ विसर्गाङ्गुलिप्रदर्शनप्रकारमा-

ह भगवान्महर्षियाज्ञवल्क्यः ॥

हकारो नैव मन्तव्यइति शास्त्रव्यवस्थितिः । इति वचनात्तत्स्वराग्रे तादृशस्वरानुकूलो विसर्गउच्चारणीयो न हकारसदृशइत्युच्चारणकर्तृशासनाद्यवस्था बोध्या ॥ तत्राघादनाडम्बरात् ॥ ५५ ॥ आघाशब्दात्परस्तकारो मूर्द्धन्यमापद्यते । स चेदाघाशब्दआडम्बरशब्दात्परो न । दार्वाघाटः । जिह्वाजिह्मकत्वादसोष्मत्वाच्च टः । स्थितोपस्थिते तु दार्वाघातऽइतिदारु । आघातः । अनाडम्बरादिति किम् । शब्दायाडम्बराघातम् ॥ वनसदोऽवेटो रेफेण ॥ ५६ ॥ वनशब्दः सदशब्दे परे रेफेण व्यवधीयते वनशब्दो वेट्शब्दात्परोन चेत् । भुरण्यवो व्वनर्षदो व्वायवः । स्थितोपस्थिते व्वनसदऽइति वन । सदः । अवेटः किम् । अप्सु षदे वेड्वनसदे ॥ पत्यौ च सकारेण ॥ ५७ ॥ वनशब्दः पतिशब्दे सकारेण व्यवधीयते । व्वनस्पतिः शमिता देवः । इदं शाखान्तरविषयम् । अत्र लेखनं तु सकारेणेत्यनुवृत्तिप्रदर्शनार्थः ॥ ऋतावरौ च पतिपरयोः ॥ ५८ ॥ ऋत अवर एतौ पति परयोः सकारेण व्यवधीयेते । तव व्वायवृतस्पते । तूणवह्भ्यमवरस्पराय । स्थितोपस्थिते तु ऋतपतऽइत्यृत । पते । अवरपरायेत्यवर ।

पराय ॥ तद्बृहतौ करपत्योस्तल्लोपश्च ॥ ५९ ॥ तत् बृहत् एतौ करपतिशब्दयोः प्रत्यययोर्यथासङ्ख्यं सकारेण व्यवधीयेते । पूर्वपदयोश्च तकारलोपो भवति । यथा तत् करान् । तस्कराँऽ२ ॥ उत । बृहत् पतिः ॥ बृहस्पतिः । परिष्कृते षकारेण ॥ ६० ॥ परीत्ययं कृते परे षकारेण व्यवधीयते । परिष्कृताः शुक्राः । स्थितोपस्थिते तु परिष्कृताऽइति परि । कृताः ॥ चन्द्रे सुश्चकारेण ॥ ६१ ॥ सुशब्दः चन्द्रे परे शकारेण व्यवधीयते । उभे सुश्चन्द्र । स्थितोपस्थिते सुचन्द्रेति सु चन्द्र ॥ दुधुत्वन्धो ढकारम् ॥ ६२ ॥ दुधुत्वन्नित्ययं धकारो ढकारमापद्यते । बृहतीन्दुढुत्वन् । स्थितोपस्थिते दुधुत्वन्निति दुधुत्वन् ॥ भाविभ्यः सषर्ठं॰ समानपदे ॥ ६३ ॥ भाविभ्यः परः सकार एकपदे विद्यमानः षकारमापद्यते ॥ षात्तथौ मूर्द्धन्यम् ॥ ६४ ॥ षकारात्परौ तथौ मूर्द्धन्यमापद्यते । व्रजङ्गच्छ गोष्ठानम् । परमेष्ठ्यभिधीतः । अप्स्वन्तरा सुषात्र । भुवना सीषधाम । दुष्टरस्तरन् । तकारस्य टकारः । जित्सङ्ग्रकत्त्वात्सोष्मत्वाच्च थस्य ठः । स्थितोपस्थिते तु । गोस्थानमिति गो । स्थानम् । परमेस्थीति परमेस्थी । दुस्तरऽइति दुः । तरः । सुसावेति सु । सावा । सीसधामेति सीसधाम । तस्मादित्युत्तरस्त्यव्यवहितस्य । तेन प्रेषित इत्यत्र तकारस्य मूर्द्धन्यो न ॥ अ-

नुस्वाराच्च तत्पूर्वात् ॥ ६५ ॥ भाविपूर्वादनुस्वारात्परः सकारः षकारमापद्यते । तपूꣳष्यग्ने । पुरोडाशैर्हवीꣳषि । तत्पूर्वात्किम् । वामनाꣳसि ॥ करेफाभ्यां च ॥ ६६ ॥ ककाररेफाभ्यां च परः सकारः षकारमापद्यते ऋत्वा । वनर्षदः । अनुस्वारात्ककाराच्च परस्य षत्वं व्याकरणसिद्धम् । अत्र लेखनं तु हिꣳ० सीर्क्कसामयोरित्यादिनिषेधस्य वक्ष्यमाणत्वात्प्राप्तिप्रदर्शनार्थम् ॥ नेः सीदतेः ॥ ६७ ॥ नेः परः सदधातोः सकारः षकारमापद्यते । एदं बर्हिर्निषीदत ॥ ससाद च ॥ ६८ ॥ नेः परः ससादेति सकारः षकारमापद्यते । एतस्य सदधातुजत्वात्स्पष्टार्थम् । निषसाद धृतव्रतः ॥ ओकारात्सु ॥ ६९ ॥ ओकारात्परः सुसकारः षकारमापद्यते । मोषूणः ॥ उश्चाऽऽष्टक्षात् । ७० । अष्टक्षादुकारात्परः सुसकारः षकारमापद्यते । ऊर्ध्वꣳऽऊषुणः ॥ अभेश्च । ७१ । अभेः परः सुसकारः षकारमापद्यते । अभीषुणः ॥ परेश्च सिञ्चतेः । ७२ । परेः परः सिञ्चतेः सकारः षकारमापद्यते । परिषिञ्चन्ति ॥ अभेश्च । ७३ । अभेः परः सिञ्चतेः सकारः षकारमापद्यते । मित्रावरुणावभ्यषिञ्चन् ॥ वेर्युदयः । ७४ । वेः परीभूतो यकारपरः सकारः षकारमापद्यते । विष्याम्स्यायुषो न मह्यात् । युदयः किम् । विस्वः पश्य ॥ हे-

र्म्मिथोदयः । ७५ । हेः परीभूतो मकारपरस्सकारपरस्य सकारः षकारमापद्यते । अस्ति हिष्मातो । आपो हि ष्ठ ॥ द्यवेश्च । ७६ । द्यविशब्दात्परस्सकारोदयः सकारः षकारमापद्यते । मकारस्त्वसम्भवान्न सम्बध्यते । उपद्यविष्ठ ॥ नेस्त्यास्तनोः । ७७ । निशब्दात्परस्त्यास्तन्योर्धातोः सम्बन्धिसकारः षकारमापद्यते । निःस्त्यायताम् । निः स्तनिहि इति स्थिते "लुङ्सुदि जित्परे" इत्यनेन विसर्गलोपे कृते सस्य षः । आप्यायतान्निष्ट्यायताम् । निष्टनिहि ॥ ततक्षौ । ७८ । नि इत्यस्मात्परः सकारः षकारमापद्यते ततक्षौ परे । तथयोरिति सस्य षः । स्वधया निष्टतक्षुः ॥ अनोः स्तुवन्त्याम् । ७९ । अनोः परः स्तुवन्ति सकारः षकारमापद्यते । अनुष्टुवन्ति पूर्व्वथा ॥ दुःष्वप्न्यम् । ८० । इदं कृतषत्वं निपात्यते । दुःष्वप्न्यꣳ सुव । स्थितोपस्थिते दुःस्वप्न्यमिति दुःस्वप्न्यम् ॥ वन्दारुर्म्माकिः । ८१ । एतयोः सकारः षकारमापद्यते । इह यानि विसर्गान्तानि पदानि तेषां तथयोरिति सत्वे जाते षः । गृणाति वन्दारुष्टे । माकिष्टे व्यथिरादधर्षीत् ॥ सहेः पृतनायाः । ८२ । पृतनाशब्दात्परः सहेः सकारः षकारमापद्यते । पृतनाषाह्याय च । स्थितोपस्थिते पृतनासह्यायेति पृतना । सह्याय । अ-

भाविपूर्वादप्राप्ते विधिः ॥ सधिरठं॰शुरदितिः । ८३ । एतेषां त्रयाणां सकारः षकारमापद्यते । अ- प्सवन्ने सधिष्टव । अठं॰शुरठं॰शुष्टे । अदिति- ष्टे ॥ वायुरग्निरग्नेरेकाक्षरे । ८४ । एतेषां त्रया- णां सकारः एकाक्षरे पदे षकारमापद्यते । वायु- ष्ट्वा पचतैः । अग्निष्टेऽधिपतिः । अग्नेष्ट्वा तेज- सा । एकाक्षरे किम् । अग्निस्तिग्मेन । अग्नेस्त- नूः ॥ सकारपरे च । ८५ । भाव्युपधः सकारः स- कारे परे एकाक्षरे पदे षकारमापद्यते । अवतत्य धनुष्ट्वम् । सकारपरे किम् । सवितुस्त्वा प्रसवे ॥ मातृभिरर्चिर्भिः पायुभिर्वरूत्रीः । ८६ । एतेषां चतुर्णां सकारः षकारमापद्यते । सठं॰ सृज्य मातृभि- ष्ट्वम् ॥ शिवेभिरर्चिर्भिष्ट्वम् । अदब्धेभिः सवितः पा- युभिष्ट्वम् । वरूत्रीष्ट्वा ॥ प्रकृत्या नानापदस्थे तका । ८७ । अधिकारोऽयम् । अनु सन्तनोतु बृहस्प- ति सुतस्य सुसमिद्धाय सुसन्दृशमभि सत्वाऽभिसँवि- शन्तु सुसस्या ऽअतिस्थूलस्सुसत्ते पत्नी सँय्याजान् क्र- तुस्थलाञ्जिसक्थ्यो दिविस्पृशा हृदिस्पृशठं॰ सीक्षं- क्षसामाभ्यां तित्तिरिस्ते सीसेन सीसाः सीसं पशुस- नि गोसनि प्रतिसद्दङ् प्रतिसद्दत्वासस्त्वतुस्त्वेठं॰ शत् । ८८ । एते षड्विंशत्सकाराः प्रकृत्या भवन्ति । हि-

ठं॰सीरि"त्यत्रानुस्वाराच्चेति" प्राप्तिः । ऋक्सामेति द्वये "वारेफाभ्यां चेति" । तित्तिरिस्ते सर्पाणामित्यत्र 'सकारपरे चेति'। अन्यत्र समानपदत्वात्। चतुस्त्रिठं॰ शदिति किम् । घर्त्रञ्चतुष्टोमः । अत्र 'लुङ्मुदीति' विसर्गलोपे 'भाविष्य' इति षत्वं भवति । वीर्य्यं पुत्रो-ऽनुसन्तुनोतु । बृहस्पतिस्सुतस्य । सुसमिद्धाय, सुसन्दृशन्त्वा । अभिसत्त्वा सहोजाः । देवाऽअभिसँ-विशन्तु । सुसस्याः कृषीस्कृधि । अतिस्थूलं चातिकृ-शम् । उलूखलमुसले । शँय्युना पत्नीसँय्याजान् । पु-ञ्जिकस्थला च क्रतु स्थला । शितिकक्षोञ्जिसक्थः। बृहता दिविस्पृशा । भद्रद्रठं॰ हृदिस्पृशम् । एनठं॰ हिठं॰सीः । ऋक्सामयोः शिल्पे । ऋकसामाभ्याऽ-सन्तरन्तः । तित्तिरिस्ते सर्पाणाम् । सीसेन तन्त्रम् । हरिणीः सीसाः । सीसञ्च मे । प्रजासनिपशुसनि । गो सनि । प्रति सदृङ् । प्रतिसदृश्चासऽएतन। चतुस्त्रिठं॰ श-द्वाजिनः॥ ऋकारेफाद्वयस्य।८९। ऋकारो रेफऽअ-रइत्येतत्त्रयपरः सकारः प्रकृत्या । तिसृभिरस्तुवत । तिस्रश्च मे। व्वाचो व्विसर्ज्जनम्॥ पृथिवि दिव्युपरि-चर्षणिशकुनियासिभ्यः।९०। एतेभ्यः षड्भ्यः सकारः प्रकृत्या । पृथिवि सदन्त्वा। दिवि सदन्त्वा । उपरि स-दो दुवस्वन्तः । चर्षणी सहाँव्विन्तु । शकुनि सादेन कू-

स्मीन् । अत्रयासिसीष्टाः । इतिषत्वप्रकरणम् । ऋषरे-भ्यो नकारो णकारङ्ँ॰ समानपदे, स्वरयवहकपैश्च । ६१ । ऋकारषकाररेफेभ्यः परः स्वरयकारवकारह-कारकवर्गपवर्गव्यवहितोऽपि नकारो णकारमापद्यते समानपदे । तस्मादित्युत्तरस्येत्युत्तरस्येत्युक्तत्वाद्यवधाने अप्राप्तवचनादेतैर्यस्तैर्यथासम्भवमिलितैश्च व्यवाये भव-ति नान्यैः । नृमणाः । पुरीषवाहणः । स्थितोपस्थिते तु नृमना इति नृ । मनाः । पुरीषवाहन इति पुरीष । वाहनः । प्रवाहन इति प्र । वाहनः । एतैः किम् । र-श्मिना । रसेन । रुचानः । रथेन ॥ प्रनेति नुदाति हिनोमीनाम् । ६२ । प्रेत्यस्मान्नीनुदधात्वोर्हिनो-मिशब्दस्य च नकारो णकारमापद्यते । प्रणय देवा-व्यम् । प्रणुदानः । प्रहिणोमि ॥ प्रकृत्या पदा-न्तीयः । ६३ । पदान्तीयो नकारः प्रकृत्या भव-ति । पूषन् । अश्क्रन् । पितॄन् ॥ निवनिन-सः प्रपीनम् । ६४ । ऋषरेभ्यो निवनिनस इत्येषां प्रपीनमित्ययं नकारः प्रकृत्या । धूम्रा बभ्रुनीका-शाः । ब्रह्मवनि त्वा क्षत्रवनि । वार्ध्रीनसस्ते । प्रपी-नमग्ने ॥ श्रीमना इत्येके । ६५ । एकशब्दो मुख्य-वाची । अयं च निपात्यते । श्रीमनाः शतपयाः ॥ इ-न्द्राग्नी चित्रभानो वार्त्रघ्नन्दुः ध्वान्तं ग्रु वसीनिः पुरोऽ-

नुवाक्याभिःपुरोऽनुवाक्याश्वान्यसम्पन्नम् । ९७ । एतान्यष्टौ निपात्यन्ते । इन्द्राग्न्योरुज्जितिम् । इन्द्रायाहिचित्रभानो सुताः । इन्द्रस्य वार्त्रघ्नमसि । दुःष्वप्न्यर्ठं० सुव । ध्रुवक्षितिर्ध्रुवयोनिः । ऋचः पुरोऽनुवाक्याभिः । पुरोऽनुवाक्याभिः । पुरोऽनुवाक्यायाज्याभिः । साह्नोभ्यश्वान्यसम्पन्नम् ॥ तवर्ग्गे च । ९८ । ऋषरेभ्यः परो नकारः प्रकृत्या पवर्गे परे । तृम्पन्तु होत्राः । अवक्रान्देन तालु । क्रन्दते ॥ षादनन्तरऋकारे । ९९ । षात्परो नकारः प्रकृत्या ऋकारे परे । उग्रस्त्वेष नृम्णः ॥ निषण्णाय रथवाहणमिन्द्रऽएणं परिणीयते समिन्द्रणऽउरुष्याणो रक्षा णः षुणः षूणःषुणा स स्या स्वर्ण्णस्थूरिणौ प्रणऽआयूᳪंषि । १०० । एतानि त्रयोदश निपात्यन्ते । निषण्णाय । रथवाहणम् । इन्द्रऽएणम् । परिणीयते कविः । समिन्द्र णो मनसा । उरुष्याणोऽअघायतः । रक्षाणो ब्रह्मणस्पते । मोषूणऽइन्द्र । अभीषुणः । गोमदूषुणा सत्या । स्वर्ण्णं घर्म्मः । अस्थूरिणौ । निसन्नायेतिनि । सन्नाय । रथवाहनमितिरथ । वाहनम् । इति णत्वप्रकरणम् ॥ दीर्घम् । १०१ । अधिकारोऽयम् ॥ अश्वरश्मिस मति सुमति चारय इषिसेंदिमेंन्द्रिय धारय चित्रभङ्गुरवयुनाश्वस्य हृदयघुष्यत्तीस्यवताध्यवृंशक्ति पुरुषाभि-

वकारे । १०२ । एते पञ्चविंशतिर्ह्रस्वा दीर्घमापद्यन्ते वकारे परे । अश्वावतीम् । रश्मीवतीम् । मतीविदे । सुमतीवृधः । स्वाविद्गौमी । सुतावतः । धारयावृषन् । सेदिमावयम् । इन्द्रियावान् । धारयाव्वहूनि । चित्रावसो । भङ्गुरावताम् । वयुनाविदेकः । अश्वस्याविशस्ता । ऋतावानम् । अभीवर्त्तः । प्रावतावचः । अधीवासम् । अच्छा विश्वानराय । शक्तीवन्तो गभीराः । इमाऽउत्वा पुरूवसो । स्थितोपस्थिते तु अश्ववतीमित्यश्व । वतीम् । रश्मिवतीमिति रश्मिवतीम् । मतिविदऽइतिमति । विदे । सुमतिवृधऽइतिसुमति । वृधः । स्वविदितिस्व । वित् । सुतवतऽइति सुत । वतः । वृषणवानिति वृषण वान् । इन्द्रियवानितीन्द्रिय । वान् । चित्रवसो ऽइति चित्र । वसो । भङ्गुरवतामिति । भङ्गुर । वताम् । वयुनविदिति वयुन । वित् । हृदयविधऽइति हृदय । विधः । ऋतवानमित्यृत । वानम् । अभिवर्त्तऽइत्यभि । वर्त्तः । अधिवासमित्यधि । वासम् । शक्तिवन्तऽइति शक्ति । वन्तः । पुरुवसोऽइति पुरु । वसो । शचीवसो । अन्यशाखीयमिदमुदाहरणम् ॥ नाश्ववद्धिरण्यात् । १०३ । हिरण्यवच्छब्दात्परश्वइति शब्दरूपं वदित्येतस्मिन्परे न दीर्घमापद्यते । हिरण्यवदश्ववत् ॥ अभिविकखयेषँ वी-

रविश्वत्रसहत्रवाजयन्तेषु । १०४ । अभीत्ययं ह्रस्वो विवक्षयेषमित्यादिषट्सु न दीर्घमापद्यते । अभि विवक्षयेषम् । अभि वीरोऽअभिसत्त्वा । अभि विश्वे गृणन्तः । अभि वत्सन् । अभिष्टनम् । अभिवाजयन्तः ॥ अश्वस्य वाजिन इति च । १०५ । अश्वस्येति ह्रस्वो वाजिन इत्येतस्मिन्परे न दीर्घमापद्यते । अश्वस्य वाजिनः । इति चेत्येवं विधान्योदाहरणसूचनार्थम् । तेनाधिवक्तेति न दीर्घः ॥ विश्वसहभुवपुषवसुषु । १०६ । नेति नानुवर्त्तते । विश्वेत्ययं ह्रस्वः सहादिषु चतुर्षु दीर्घमापद्यते । विश्वासाहमवसे । विश्वानराय विश्वाभुवे । उत विश्वापुषम् । गन्धर्वस्त्वा विश्वावसुः । स्थितोपस्थिते तु । विश्वसहमिति विश्व । सहम् । विश्वभुवऽइति विश्व । भुवे । विश्वपुषमिति विश्व । पुषम् । विश्ववसुरिति विश्व । वसुः ॥ तिष्ठाद्युदात्तम् ॥ १०७ ॥ आद्युदात्तं तिष्ठेतिपदं दीर्घमापद्यते । तिष्ठा रथमधियम् । तिष्ठा देवो न सविता । आद्युदात्तं किम् । आतिष्ठ वृत्रहन् ॥ प्रवणशृङ्गयासेषु ॥ १०८ ॥ प्रेत्ययं ह्रस्वो वनादिषु त्रिषु दीर्घमापद्यते । प्रावणेभिः सजोषसः । प्राशृङ्गा माहेन्द्राः । प्रायासाय । स्थितोपस्थिते प्रवणेभिरिति प्र । वणेभिः । प्रशृङ्गाइति प्र ।

ष्टङ्गः । प्रयासायेति प्र । यासाय ॥ धारयास योजा- व सचस्व नुद मोषु जयतोरुष्य रक्ष युज युच्छ म- त्स्वथ पिष्टत गायता तु येन नकारे ॥ १०९ ॥ धारया- सेत्यादयः षोडशह्रस्वा नकारे दीर्घमापद्यन्ते । धार- यासा नमोभिः । योजान्विन्द्र । अवानो देव्या धि- या । सचस्वानः स्वस्तये । प्रणुदानः । मोषूणः । मो- षु किम् । ऊर्ध्वऽऊषुणः । जयता नरः । उरुष्याणः । रक्षाणः । युजानो मित्रावरुणा । युच्छानः शर्म । मत्स्वथा नो विप्रस्वम् । पिष्टतानिरवह्वथात् । गायता नरः । आतूनः । आतुकिम् । तु चेतुनो भवन्तु । ये- ना नः पूर्व्वे ॥ भव च ॥ ११० ॥ अयं ह्रस्वो दीर्घमाप- द्यते नकारे परे । भवानः ॥ सचावरूत्थ्यवाजस्य पायुषु च ॥ १११ ॥ भवेत्ययं ह्रस्वस्सचादिषु चतुर्षु दीर्घमापद्यते । भवासचा । भवा व्वाजस्य । भवा पा- युः ॥ नावनयामि ॥ ११२ ॥ अवेत्ययं ह्रस्वो नयामि- शब्दे परे न दीर्घमापद्यते । अवनयामि ॥ अष्टक्त्वः सौ ॥ ११३ ॥ उकारः सौ परे दीर्घमापद्यते । मक्षीमू षु ॥ रथितकारनकारयोः ॥ ११४ ॥ रथीत्ययं ह्रस्वस्त- कारनकारयोर्दीर्घमापद्यते । रथीतमम् । रथीनाँव्वा- जानाम् । स्थितोपस्थिते रथितममिति रथि । तम- म् । रथिनामितिरथि । नाम् ॥ अथोदारियशोच

पनय सादयस्नुं इषभत्तु सलक्ष्माघाघारात्वृतभवता यकारे ॥ ११५ ॥ अथादयस्त्रतुर्दश ह्रस्वा यकारे दीर्घमापद्यन्ते। मह्यमथ अथाय। उद्दारिथा युज। बृहच्छोचा यविष्ट्य। पनया युजम्। सादया यज्ञम्। ऋजूयताम्। इषायमाणः। शत्रूयती हन्ता। सलक्ष्मा यत्। आघाये। अघायतः। अरातीयतः। ऋतायते। स्थितोपस्थिते तु अथयेति अथय। ऋजुयतामित्यृजु। यताम्। इषयमाणऽइति इष। यमाणः। शत्रुयतऽइति शत्रु। यतः। अघयतऽइत्यघ। यतः। अरातियतऽइत्यराति। यतः। ऋतयतऽइत्यृत। यते ॥ वष्टघष्टजोः ॥ ११६ ॥ व इत्ययं इधष्टजोर्दीर्घमापद्यते। वाष्टधे। प्रवाष्टजे। स्थितोपस्थिते वष्टधऽइति वष्टधे। वष्टजऽइति वष्टजे ॥ अद्य तमं इकारचकारभवत इषीमहे देवेषु ॥ ११७ ॥ अद्येत्ययं तमित्यादिषट्सु दीर्घमापद्यते। अद्यातमस्य। तमिति किम्। अद्य तेऽअपरम्। अद्याऽद्वेम। इत्रमद्या च। अद्या भवत। अद्या इषीमहे। अद्या देवाः ॥ न होतरि ॥ ११८ ॥ अद्येत्ययं न होतरि दीर्घमापद्यते। अद्य होतारम् ॥ इष्णुत त्विषि धजि भवत पिबेत स्म तिष्ठ रक्षामकारे ॥ ११९ ॥ इष्णुतादिनव ह्रस्वा मकारे परे दीर्घमापद्यन्ते। इष्णुता म-

ऽङ्गमम् । शचिष्मङ्गराय त्विषीमते । व्वातऽइवध्रजी-
मान् । इदं शाखान्तरविषयम् । माध्यन्दिनानान्तु
दीर्घत्वादेव मतुप् । अतएवाचान्तःपददीर्घीभाव
इति स्थितोपस्थितं न । भवताम्टडयन्तः । पिबामि-
त्यस्य । इता मरुतः । हिरण्मा मनवे । तिष्ठा महा-
ꣳसि । रथा माकिः । स्थितोपस्थिते । त्विषिमतऽइ-
ति त्विषि । मते ॥ विश्वदेव्यसोमौ वत्याम् ॥ १२० ॥
एतौ ह्रस्वौ वतीशब्दे दीर्घमापद्येते । विश्वदेव्याव
ती । सोमावतीम् । स्थितोपस्थिते विश्वदेव्यवती-
ति विश्व। देव्यवती । सोमवतीमिति सोम। वतीम् ।
वत्यामितिकिम् । सोमवताम् ॥ उषमहोभिर्नक्तमीका-
रैकारौकारनकारेभ्यः ॥ १२१ ॥ महोभिरित्यादि-
भ्यईकारादिचतुर्भ्यश्च पर उष इत्ययं ह्रस्वो दी-
र्घमापद्यते । प्रकरणानुसारादन्यस्य व्याख्यानात् ।
महोभिः उषासा नक्ता । नक्तोषासा । आयतीमुषा-
सम् । देवीऽउषासौ । उपाकेऽउषासा नक्ता । यो-
नाऽउषासा नक्ता । नऽउषासः । अव्यवहितस्यास-
म्भवाद्व्यवधानेऽपि । स्थितोपस्थिते उषसानक्तेत्युष-
सा । नक्ता । नक्तोषसेति नक्तोषसा । उषसमित्युषसम् ।
उषसावित्युषसौ । उषसऽइत्युषसः । एतेभ्यः किम् । अ-
ग्रऽउषसाम् ॥ पूरुषोऽवसाने ॥ १२२ ॥ पूरुष इत्ययं

आदिर्दीर्घो निपात्यते अवसाने चेत् । सनवथ पूरुषम् । अवसाने किम् । उदैत्पुरुषः ॥ पूष्णो नहीमस्तेष्वत्र ॥ १२३ ॥ अत्रेत्ययं ह्रस्वः पूष्णइत्यादिषु त्रिषु दीर्घमापद्यते । अत्रा पूष्णः । अत्रा ते भद्रा ॥ नरः सप्तऽऋषीन्नस्तऽआङ्गर्नियुद्भिष्षु यत्र ॥ १२४ ॥ यत्रेत्ययं ह्रस्वो नरइत्यादिषु पञ्चसु दीर्घमापद्यते । यत्रा नरः । यत्रा सप्तऽऋषीन् । यत्रा नश्चक्रा । यत्रातऽआङ्गः । तऽआङ्गः किम् । यत्र ते यथुः । यत्रा नियुद्भिः ॥ अभिमातिपृतनासु सपत्नधूर्विश्वसमत्सुपृतना व्रातेभ्यः सहेः ॥ १२५ ॥ अभिमातीत्याद्यष्टभ्यः सह धातोर्ह्रस्वो दीर्घमापद्यते । अन्त्यस्यासम्भवादनन्त्यस्य । तत्र द्वयोः प्राप्तौ "सन्निकृष्टविप्रकृष्टयोः सन्निकृष्टस्येत्यादेः । अभिमातिषाहः । पृतनासु सासहिम् । सपत्नसाही । द्रुतं धूर्षाहौ । विश्वासाहमवसे । समत्सु सासहः । पृतनाषाह्याय च । व्रातसाहाः । स्थितोपस्थिते अभिमातिसहऽइत्यभिमाति । सहः । ससहिमिति ससहिम् । सपत्नसहीति सपत्न । सही । धूः सहाविति धूः । सहौ । विश्वसहमिति विश्व । सहम् । ससहऽइति ससहः । पृतनासह्यायेति पृतना । सह्याय । व्रातसहाऽइति व्रात । सहाः ॥ उक्थयाम्न शसेः ॥ १२६ ॥

उक्थशब्दात्परः शसेर्ह्रस्वो दीर्घमापद्यते । उक्थशासश्चरन्ति । स्थितोपस्थिते उक्थशास ऽइत्युक्थ । शसः ॥ एवाच्छचक्रमाथ ॥ १२७ ॥ एतेषां चतुर्णां ह्रस्वा दीर्घमापद्यन्ते । संहिताऽधिकारादवसाने न । एवा नो दूर्वे । गिरिशाच्छावदामसि । चक्रमा वयम् । अथा नऽइन्द्रः । एवशब्दोऽत्रोपमार्थे एव व्याख्यानात् । अवधारणार्थस्य तु न । तदेव शुक्रम् । सऽएव जातः । अवसाने तु तानो ऽअच्छ ॥ विद्मा सौत्रामण्याम् ॥ १२८ ॥ विद्मेत्ययं ह्रस्वो दीर्घमापद्यते सौत्रामणीमन्त्रान्वर्जयित्वा । विद्मा तेऽअग्ने । असौत्रामण्यां किम् । विद्म यँ २ ॥ ऽउ च न ॥ अधायत्स्वग्नावायुषु ॥ १२९ ॥ अधेत्ययं ह्रस्वो दीर्घमापद्यते यत्स्वग्नावायु एतान्वर्जयित्वा । अधासपत्नान् । अयाह्यग्ने । अयदित्यादि किम् । अधयत् । अधरस्य ते व्रजनम् । अधग्ना: । अधवायुम् ॥ पिबासोमं पिबासुतस्य स्थामयो भुवो नूरणे शमीष्व मामहानो मामहन्त्वामशीतम रीरिषो रीरिषत यामयन्ति हि ष्मा ते वर्द्धयारयिं अधीहवञ्चरा सोम स्वयवसिनी श्रोताग्रावाणो धर्षा मानुषः पाथा दिवो युद्धा हि गमया तमः सिञ्चता सुतं परीवाप ऽउक्था शस्त्राण्यत्ता हवींष्याच्या जानु क्षामारे-

रिहत्वामा भिदन्तो रुहेमा स्वस्तये जनयथा च धा-
रयाम पितरा न्वधो बोधा मे विचृता बन्धमवता हवेषु
इत्गुधी गिरो रचा तोकं चर्षणीसहां चर्षणीधृतो
येना समत्सु वनेमा तऽऋद्धामा ते भिचासखिभ्यस्त्वा
रथं दीया रथेनेता जयत वह्वया त्वं प्रब्रवामा हतस्या-
जगन्या परस्यारश्मिमाहि पुरीतता लोहाकर्णशुण्ठाक-
र्णौ प्रकृतिदीर्घाविल्येके नौकाभा अनूकाशेन चक्रा-
जरसम्भियूकस्तरता सखायः सासह्वानपामार्गभि-
यादतऽऋतीहमभीषु सुष्टरीमा जुषाणो यजा देवान्ये-
ना पावकाम्वायन्तो यदी सरमा स्वदया सुजिह्व नि-
षद्या दधिष्व सदतना रणिष्ट न भरा चिकित्वान्त्साद-
या गविष्टावरा दद्दृह्वा चायुनक् स्तृजा रराणः सादन्य-
मिति च ॥ १३० ॥ पिबासोममित्याशीन्यष्टसप्ततिरूपा-
णि कृतदीर्घाणि निपात्यन्ते । यत्र तु पदद्वयपाठस्त-
त्र यथोक्तो दीर्घः । अन्यत्र तु एकपदस्थः । लोहाकर्ण-
शुण्ठाकर्णौ प्रकृतिदीर्घौ । इति चकारोऽनुक्त-
समुच्चयार्थः । तेन यच्छ देवायुवम् । यच्छेति किम् ।
यज्ञपतिं देवयुवम् । पुरीततेति विभक्तिरविवक्षिता ।
पुरीतत् इत्यपि भवति । स्थितोपस्थिते शमिष्वेति
शमिष्व । ममहानऽइति ममहानः । ममहन्तामिति
ममहन्ताम् । अशितमेत्यशितम । रिरिषऽइति रि-

रिषः । रिरिषतेति रिरिषत । सुयवसिनीऽइति सु । यवसिनी । परिवापऽइति परि । वापः । चर्षणि सहामिति चर्षणि । सहाम् । चर्षणिधृतऽइति चर्षणि । धृतः । पुरितेति पुरि । तता । पुरितदिति पुरि । तत् । स्रीहकर्णऽइति स्रीह । कर्णः । घुण्ठकर्णऽइति घुण्ठ । कर्णः । बभ्रुनिकाशाऽइति बभ्रु । निकाशाः । अनुकाशेनेत्यनु । काशेन, अन्वयन्तऽइत्यन्व । यन्तः । अयुनगित्ययु । नक् । सदन्यमिति सदन्यम् । देवयुवमिति देव । युवम् । आकारोपधो यकारमिति सूत्र एतदध्यायस्याप्येतदध्यायस्थत्वात् । स्थितोपस्थिते वृष्टिमानिवेति वृष्टिमान् । इव ॥ स्वरात्संयोगादिर्द्विरुच्यते सर्वत्र ॥ १३१ ॥ स्वरात्परः संयोगस्यादिवर्णः पदान्तमध्यादिषु द्विरुच्यते । अनुष्टुप्त्वे । इषे त्त्वा । आच्च्या जानु । स्वरादिति किम् । सुधि श्रुत्कर्ण ॥ परन्तु रेफहकाराभ्याम् ॥ १३२ ॥ तु एवार्थः । रेफहकाराभ्यां परं व्यञ्जनमेव द्विरुच्यते न रेफहकारौ । सूर्य्यः । पूर्व्वः । प्रबाह्व्वाय । बाह्व्वोः । रेफहकारयोः प्रत्यक्षश्रुतिनिमित्तत्वेन सामान्यप्राप्तकार्यित्वबाधः । तेन रहभिन्नस्यैवानेन द्वित्त्वम् । अति ह्रस्वम् । अर्हतः । अनैतयोर्न्न द्वित्वम् । स्वरे परे रेफात्परेषामूष्मणामनेन द्वित्त्वम् । तत्र रेफस्य ए-

कारसहितोच्चारणविधानाद्रेफधर्माभावात्। दर्श-तम्। वर्षा, यत्र तुल्यरत्वं तत्र विधानाभावाद्विद्वत्वं भवत्येव। वर्स्वैः। वर्ष्याय। अत एव पाणिनिना "शरोऽचीति" द्वित्वनिषेधः कृतः। परं रेफहकाराभ्यां व्यञ्जनं तूष्मवर्जितम्। द्वित्वमापद्यते रेफहकारौ तु न कुत्र-चित्॥ १॥ ऊष्मान्तस्थाभ्यश्च स्पर्शः॥ १३३॥ च ए-वार्थो भिन्नक्रमः। ऊष्मभ्योऽन्तस्थाभ्यश्च परः स्पर्श एव द्विरुच्यते न ऊष्मान्तस्थाः। अश्मन्नूर्ज्जम्। पूष्णः। ह-स्ते। दधिक्राव्णः। शल्मलिः॥ विसर्ज्जनीयाद्व्यञ्ज-नपरः॥१३४॥ विसर्ज्जनीयात्परः स्पर्शो द्विरुच्यते व्य-ञ्जनपरश्चेत्। विष्णोः क्रमः। हिरण्यपाणिः स्प्र-ति गृभ्णातु। व्यञ्जनपरः किम्। न्यङ्कुः। गौरस्तगः पितृभ्यः॥ ङ्नौ चेद्ध्रस्वपूर्वौ स्वरे पदान्तौ॥ १३५॥ प-दान्तस्थौ ङकारनकारौ स्वरे परे ह्रस्वपूर्वौ द्विरुच्ये-ते॥ युङ्ङसि। अघ्नन्नमीमदन्त। ह्रस्वपूर्वौ किम्। सु-प्राङजः। कुटरूनालभते॥ नास्वरपूर्वा ऊष्मान्तस्थाः॥ १३६॥ अस्वरेति पर्य्युदासः। तेन स्वसदृशस्य वर्णस्य ग्रहणम्। ये ऊष्माणोन्तस्थाश्च व्यञ्जनपूर्वास्ते द्विर्व-चनस्य निमित्तं न भवन्ति। वर्ष्मन्। पार्ष्ण्यां वा। व्य-ञ्जनेति किम्। अप्स्वे॥ यैस्तु परं तैर्न्न पूर्व्वम्॥१३७॥ यैर्हेतुभूतैः परस्य द्विर्भावः क्वचिदुक्तस्तैः सह संयुक्तं

पूर्वं तद्व्यञ्जनं न द्विरुच्यते । कृत्स्नहृदयेन । सकारस्य ऊष्मत्वात्स्पर्शद्विर्भावस्य निमित्तत्वं तेन संयुक्तं पूर्वस्पर्शः तकारो न द्विरुच्यते । अत्र पूर्वस्थानेन निषेधः परस्य पूर्वेण । यत्र चोभयतः स्पर्शैः संय्युक्ताः शषसाः सह ॥ तत्र नाद्यः क्रमो ज्ञेयो नापरो बोधितो बुधैः ॥ २ ॥ प्रथमैर्द्वितीयास्तृतीयैश्चतुर्थाः ॥ १३८ ॥ द्वितीयाः प्रथमैश्चतुर्थास्तृतीयैः सह द्विरुच्यन्ते । परिभाषेयम् । यत्र द्वितीयानां चतुर्थानां च द्विर्भावः प्राप्तस्तत्रेदमुपतिष्ठते । विक्ख्याय । श्रीग्ध्राय । परमेष्ठ्ठी ॥ विष्फ्फुरन्ती ॥ अन्तःपदेऽपञ्चमाः पञ्चमेषु विच्छेदम् ॥ १३९ ॥ पदमध्ये विद्यमानाः पञ्चमभिन्नाः स्पर्शाः पञ्चमेषु यममापद्यन्ते । विच्छेद इति यमसंज्ञा । रुक्क्मः । अग्ग्निः । वार्त्त्रघ्नम् । तनच्चिम । आत्न्नी । विद्मा ते । सिद्धमलम् । पाप्मने । अत्र "स्वरात्संयोगादिरिति" द्वित्वे जाते "विकारी यथासन्न" मिति प्रतिवर्गमाद्यानां जित्सञ्ज्ञकत्वात्प्रथमो यमः । द्वितीयानां जित्सञ्ज्ञकत्वात्सोष्मसञ्ज्ञकत्वाच्च द्वितीयः । तृतीयानां धिसञ्ज्ञकत्वात्तृतीयः । चतुर्थानां धिसञ्ज्ञकत्वात्सोष्मसञ्ज्ञकत्वाच्च चतुर्थः । एवं चत्वारः । अत एव चत्वारश्च यमाः स्मृता इति पाणिनीयशिक्षायामुक्तम् । एते ज्ञेयाः । न त्वेषामुच्चारणम् ॥ अशरीरं यमं

प्राङ्गरिति शिक्षायामुक्तत्वात्केवलं ज्ञानमात्रफलम् । नानुस्वारः ॥ १४० ॥ अनुस्वारो न द्विरुच्यते । इम ए स्तनम् ॥ सवर्णे ॥ १४१ ॥ सवर्णे परे व्यञ्जनं द्विर्न्न भवति । संय्यौमि । यन्ते ॥ ऋवर्णे ॥ ॥१४२ ॥ ऋवर्णे परे न द्विरुक्तिर्भवति ।, अनिष्टृतः । ऊष्मान्तस्थाभ्यइति प्राप्तम् । यमे ॥ १४३ ॥ यमे परे न द्वित्वम् । यक्क्ना । अत्र अन्तःपदइति ककारात्परे यमे जाते ककारस्य संय्योगादित्वात्प्राप्तं द्वित्वन्न ॥ विसर्ज्जनीयः ॥ १४४ ॥ न द्विरुच्यते । दिवः ककुत् । स्वरात्संयोगादिरिति प्राप्तम् ॥ स्ववर्गीये चानुत्तमे ॥ १४५ ॥ उत्तमभिन्ने स्ववर्गीये वर्णे परे द्वित्वन्न । यत् ते । तत् देवानाम् । अनुत्तमे किम् । तन्नः ॥ अवसितं च ॥ १४६ ॥ अवसानगतं व्यञ्जनं न द्विरुच्यते । ऊर्क् । 'परन्तु रेफहकाराभ्या'-मिति 'ऊष्मान्तस्थाभ्यश्चेति' वा ककारस्य द्वित्वप्राप्तिः ॥ द्वियकारम् ॥ १४७ ॥ इत्यधिकारः ॥ आप्याय्यमानो यमो रय्यै धाय्या रूपं श्रवाय्यं नृपाय्यं पौरुषेय्या हृदय्याय सह रय्या निचाय्य सन्ताय्येति च ॥ ॥ १४८ ॥ इमानि दशरूपाणि द्वियकाराणि निपात्यन्ते, चकारोऽनुक्तसमुच्चयार्थः । तेन रय्या पोषेण । आप्याय्यमानो यमः । यम इति किम् । आप्यायमानो ऽश्र-

ऋताय सोम, रय्यै त्वा । यजेति धाय्या रूपम् । त-
न्नो गीर्भिः श्रवाय्यम् । वर्त्ती रुद्रा नृपाय्यम् । पौं-
स्येय्या गृभः । नमो हृदय्याय च । सह रय्या निवर्त्त-
स्व । अग्ने ज्योतिर्निचाय्य । धारसि सन्ताय्यमा-
ने ॥ द्विसकारं० धारस्वरास्त्वेति ॥ १४९ ॥ इमे द्वे
द्विसकारे 'स्वरात्सँय्योगादिरिति' द्वित्वे प्राप्ते द्विसकार-
त्वविधानं ज्ञापकम् । सामान्यतः अन्तस्थासु सकारस्य
द्वित्वन्न । उक्तं च शिक्षायाम् । सकारस्य द्विरुक्तिर्य्या
सा द्वयोरेव नान्यतः ॥ आ च धारस्वा च रास्स्वेति स-
कारोऽत्र द्विरुक्तिजः । १ । अत एव केशवेनापि "न सो
व्योस्त्वेति सूत्रमकारि ॥ न त्वष्टचिश्विसतयेभ्यस्त्वैकम् ॥
१५० ॥ त्वादिभ्यः सप्तभ्यस्त्व इत्यत्र एकमेव व्यञ्जनं न
द्वे ॥ चत्रस्य योनिः । इत्त्रम्वधेत् । चित्रन्देवानाम् ।
श्वित्रऽआदित्यानाम् । सत्रस्यऽऋद्धिः । लोके तत्र । स-
चन्त यत्र पूर्व्वे ॥ वीड्ध्राय वाद्धृध्रीनसोद्राश्चराश्चेत् ॥
१५१ ॥ एतेषां त्रयाणां द्वित्वं न प्राणिवाचकाश्चेत् ।
नमो व्वीड्ध्राय च । वाद्धृध्रीनसस्ते मत्यै । अपा रुद्रो मा-
साम् । चराः किम् । समुद्राय शिशुमारान् । एतत्प्र-
करणं ज्ञानार्थं क्वचिदुच्चारणार्थम् । न व्यञ्जनपरस्यैक-
स्यानेकस्य वोच्चारणे विशेषोऽस्तीति श्रीभाष्योक्तिः ॥
स्वरोऽक्षरम् । सहाद्यैर्व्यञ्जनैरुत्तरैश्चावसितैरित्युक्तम् ।

तत्र स्वरयोर्मध्ये यत्रानेकं व्यञ्जनं तत्र किं पूर्वस्याङ्गं किं परस्येति निर्णयार्थमाह ॥ सँय्योगादिः पूर्व्वस्य ॥ १५२ ॥ सँय्योगस्यादिवर्णः पूर्वस्याङ्गम्भवति । इषेत्त्वा । अत्र द्वित्वे द्वौ तकारौ । तत्र प्रथमस्तकारः पूर्वस्य द्वितीयस्तकारो वकारश्च परस्य ॥ यमश्च ॥ १५३ यमश्च पूर्वस्याङ्गम् । रुक्मः । अत्र ककारो यमश्च पूर्वस्याङ्गं मकार उत्तरस्य ॥ क्रमजं च ॥ १५४ ॥ सँय्योगादेः परस्य द्वित्वेन जातं व्यञ्जनं क्रमजं तच्च पूर्वस्याङ्गम् । पार्श्व्यम् । रेफः एकः शकारः पूर्वस्य द्वितीयशकारवकारयकारा उत्तरस्य । वर्ष्ष्याय । रेफः एकः षकारः पूर्वस्य द्वितीयषकारयकारौ परस्य । बाह्व्वोः । हकार एको वकारः पूर्वस्य । द्वितीयो वकार उत्तरस्य । तस्माच्चोत्तरꣳ स्पर्शे ॥ १५५ ॥ क्रमजादुत्तरं व्यंजनं स्पर्शे परे पूर्वाङ्गं भवति । पार्ष्ण्यां वा । रेफो द्वौ षकारौ पूर्वस्य णकारयकारौ परस्य । व्वर्ष्ष्मन् । रेफो द्वौ षकारौ पूर्वाङ्गं मकारः पराङ्गम् । यदर्थं पूर्वाङ्गपराङ्गत्वविचारस्तदाह ॥ व्यञ्जनꣳ स्वरेण सस्वरम् ॥ १५६ ॥ यद्व्यञ्जनं यस्योदात्तादेः स्वरस्याङ्गं तत्तत्स्वरयुक्तं स्यात् । उक्तान्युदाहरणानि । उक्तं च, स्वरउच्चः स्वरो नीचः स्वरः स्वरितएव च ॥ स्वरप्रधानं त्रैस्वर्यं व्यञ्जनं तेन सस्वरम् ॥ सँय्योगपूर्वा व्यञ्जनान्ता अवसानगताः स्वरा द्विमा-

त्राः ॥ १५७ ॥ द्विमात्रा इति ह्रस्वापेक्षया किञ्चित्का-लाधिक्यस्योपलक्षणं न तु दीर्घत्वस्य । उक्तं च शिक्षा-याम् । स्वराः सँय्योगपूर्व्वा ये व्यञ्जनान्तास्तथान्तगाः । एषां कालो द्विमात्रः स्यान्न तु दीर्घा हि ते स्मृताः । १ । अग्निः । तत् । जातः । तन् । उत । च । इति सामान्य-विकाराः ॥ स्वरितवर्ज्जमेकोदात्तं पदम् ॥ १५८ ॥ स्व-रितमक्षरं अस्ति यस्मिंस्तत्स्वरितवत्पदं वर्जयित्वा ए-कोदात्तं पदं स्यात् । एकः स्वरः पदे उदात्तः स्वरितो वा भवति । उत्सर्गोऽयम् । द्युदात्तानि तु वाचकानि वक्ष्यति । अवशिष्टं तु ॥ अनुदात्तम् ॥ १५९ ॥ अनुदा-त्तोऽस्त्यस्मिंस्तदनुदात्तं स्वरविशिष्टं स्यात् । सादन्यम् । वीर्य्यम् । अनमीवाः । अनुदात्तमित्यधिकारः ॥ नो नौ मे मदर्थे त्रिह्येकेषु ॥ १६० ॥ नः नौ मे एतानि पदानि अनुदात्तानि स्युः । आनः । तन्नौ । यन्मे । त्रिह्येकेष्वि-ति स्पष्टार्थम् । मदर्थे इत्युत्तरार्थम् । संदेहे साहचर्य्यं नियामकमिति सर्वादेशस्यैव ग्रहणं तेन मे इत्यादेश-विशिष्टस्य न । रायो मे ॥ मा च ॥ १६१ ॥ मा इ-त्येतत्पदं अस्मदर्थे विद्यमानं अनुदात्तं स्यात् । प्रमा-तिर । मदर्थे किम् । मा नो मित्रः ॥ वो वान्ते त्वदर्थे ॥ १६२ ॥ वः । वाम् । ते । इमानि पदानि युष्मदर्थे वर्तमा-नानि अनुदात्तानि स्युः । देवो वः । सँव्वाम् । मा ते ।

त्वदर्थं किम् । ते नोऽअर्व्वन्त ॥ ॥ त्वा च ॥ १६२ ॥ इद-मनुदात्तं स्यात् । भूताय त्वा । गन्धर्व्वस्त्वा ॥ पूर्ववानन्-देशः ॥ १६३ ॥ पूर्वोक्तार्थवाचकं यत्पश्चादुच्चारितं प्र-दमनुदात्तं स्यात् । घासमस्मै । एषाङ्छगुर्हि । आ-स्मिन् । पूर्व्ववानिति किम् । अस्मै चत्राय । एषाम्प-शूनाम् । अस्मिन्त्सधस्थे ॥ असि ॥ १६४ ॥ इदमनु-दात्तं स्यात् । वेदोऽसि । कृष्णोऽसि ॥ यथा गृभो भु-वोऽग्निभ्यः ॥ १६५ ॥ गृभ इत्यादित्रिभ्यो यथेति पदमनुदात्तं स्यात् । जीवगृभो यथा । अचिभुवो य-था । अग्नयो यथा । एभ्यः किम् । करद्यथा ॥ गि-र्व्वणः ॥ १६६ ॥ इदमनुदात्तं स्यात् । परित्त्वा गिर्व्वणः ॥ अग्ने ष्टतेनेति च ॥ १६७ ॥ अग्ने इत्येतत्पूर्वं ष्टतेने-त्येतत्पदमनुदात्तम् । अग्ने ष्टतेन । अग्ने किम् । अ-ङ्गिरो ष्टतेन ॥ प्रचिकितश्च ॥ १६८ ॥ प्रेत्येतत्पूर्वकं चिकित इत्येतत्पदमनुदात्तम् । प्रचिकितो मनीषा । एनोऽपापे ॥ १६९ ॥ एन इत्येतत्पदमनुदात्तं पापेऽवि-द्यमानं चेत् । उदेनम् ॥ मैनाम् । अप्स्वेनत् । अवि-शेषात्सर्वलिङ्गं गृह्यते । अपापे किम् । एनस्कृतम् ॥ इह पूर्व्वं श्रुतम् ॥ १७० ॥ इहेत्येतत्पूर्व्वं श्रुतमित्येत-दनुदात्तम् । ममेदिह श्रुतम् । तस्याख्यातत्वादनुदा-त्तमाख्यातमित्यनेनानुदात्तत्वे सिद्धे विधानं ज्ञापक-

म् । सुधातो राख्यातस्य तेन नानुदात्तत्वम् । तेन वरुण सुधोऽर्वमित्यस्य न निघातः । इह किम् । युवाना सुतम् ॥ मन्ये पदपूर्वं ठ० सर्वं च ॥ १७१ ॥ पदपूर्वंमन्ये इत्येतदनुदात्तम् । होतारम्मन्ये । सर्वं चेति यद्वृत्तोपपदाच्चेति निषेधबाधनार्थम् । तम्मन्येयुः ॥ वा च कसुचितत्समस्माद्विहस्मात्वद्दीम्मय्यों अरे स्विन्निपातास्चेत् ॥ १७२ ॥ वा इत्यादयस्त्वनुर्द्दशशब्दा अनुदात्ता निपातास्चेत् । वातो वा ॥ अग्निश्च ॥ इमा नु कम् । यु ऽउसम्भूत्याम् । हृदया चिद्धश्चित् । अघायतः समस्मात् । आघा ये । दधे ह गर्भम् । हि ष्मातें । पीयति त्वो ऽअनुत्वः । काऽई मरे । आविर्मर्य्याः । अजारे पिशङ्गिला । कः स्वित् । निपाताः किम् । चिदसि । द्रविणमष्टु यङ्कम् । अन्ये निपाता आद्युदात्ता इति । अथो निपाता आद्युदात्ताइत्युक्तत्वात् ॥ पदपूर्व्वमामन्त्रितमनानार्थे पादादौ ॥ १७३ ॥ पादादौ अविद्यमानं पदपूर्वं सम्बोधन विभक्त्यन्तमनुदात्तं स्यात् तत्पदमामन्त्रितं च परस्वरानन्वितं । अरातिमग्ने । रोदसी विष्णो । नियुद्भिर्व्वायो । तव पूरुषः । पदपूर्व्वं किम् । अग्ने व्रतपते । वायोऽअस्मिन् । पूषन्तव । अनानार्थे किम् । अग्निर्वह्नि देवाः । अपादादौ किम् । इषन्नग्ने ॥ तेनानन्तरा षष्ठ्येकपदव-

त् ॥ १७४ ॥ आमन्त्रितेन अर्थतो देशतश्च सम्बद्धं ष-
ष्ठ्यन्तमेकपदवत्स्यात् । विश्वासां भुवां पते । उच्छि-
ष्टस्य ब्रह्मणस्पते । देशतः पूर्व्वं परञ्च । अत एव "न
पृथिवीत्यादिनिषेधः कृतः । अनन्तरं किम् । पते त्वमस्य ।
यस्यौषधीः प्रसर्प्पथ । अत्र यस्येति अङ्गमङ्गमित्यनेन
सम्बध्यते ॥ न पृथिवि देवयजन्योषध्या देव भूरेः प-
वित्रपते पवित्रपूतस्यापान्नपान्नृणान्नृपते सोमाग्नेः
सोमेन्द्रस्य सोम सुवीर्य्यस्य सोम विश्वेषान्देवानां प्र-
जापते यस्य यस्य देवायने तवाग्ने वाजस्याग्ने वरु-
णस्यापोऽअस्माकम् ॥ १७५ ॥ एतानि पञ्चदश ष-
ष्ठ्यन्तानि नैकपदवत्स्युः । प्रतिरत्नन्निति किम् । अ-
पान्नपाद्यो वः ॥ सुमङ्गल सत्यराजन्निष्किरिहृ विलो-
हित दरिद्र नीललोहित श्रेयस्कर भूयस्कराम्बेऽअ-
म्बिकेऽम्बालिके शरव्ये ब्रह्मसंशिते मरुतोऽअश्वि-
ना यव्येगव्ये द्यावापृथिवीऽउरोऽअग्ना ३ इपत्नीवँ-
स्वाजो३ न् शाची३न्मीदुष्टम शिवतम सहस्राक्ष शतेषुधे
वसुपते वसुदावन् ॥ १७६ ॥ एतान्येकोनत्रिंशदा-
मन्त्रितानि नानुदात्तानि । अत्र यानि अपूर्वाणि पा-
दादीनि वा तेषामनुदात्तत्वाभावः सिद्ध एव । अन्ये-
षामनेन निषेधः ॥ दृडोत्तराणि नव स्थानोत्तराणि
षडग्न्युत्तराणि चत्वारि भगोत्तराणि चेन्द्रोत्तरमेक-

हं सिनीवाल्युत्तरं च प्रजापतये ब्रह्मन्निति च ॥ १७७ ॥ इडशब्दादुत्तराणि नव । स्वानशब्दादुत्तराणि षट् । अग्निशब्दादुत्तराणि चत्वारि । भगशब्दादुत्तराणि चत्वारि । इन्द्रशब्दादुत्तरमेकं । सिनीवालिशब्दादुत्तरमेकं, प्रजापतये शब्दादुत्तरे ब्रह्मन्निति । एतानि षड्विंशतिरामन्त्रितानि नानुदात्तानि स्युः । इडे । रन्ते । हव्ये । काम्ये । चन्द्रे । ज्योते । अदिति । सरस्वति । महि । विश्रुति । स्वान । भ्राज । अङ्घारे । बम्भारे । हस्त । सुहस्त । कृशानो । अग्ने । इन्द्र । वरुण । मित्र । देवाः । भग । प्रणेतः । भग । सत्यराधः । । भग । इन्द्र । गोमन् । सिनीवालि । पृथुष्टुके । प्रजापतये । ब्रह्मन् ॥ भूतिराद्युदात्तम् ॥ १७८ ॥ अथाद्युदात्ताधिकारः । भूतिरित्येतदाद्युदात्तं स्यात् । भूतिश्च मे । नमो भूत्यै येदम् ॥ कदा नरिष्येम पूर्वम् ॥ १७९ ॥ नरिष्येमेत्येतत्पूर्वं कदा आद्युदात्तं स्यात् । नरिष्येम कदाचन । नरिष्येम किम् । कदाचन स्तरीः ॥ आमन्त्रितं च ॥ १८० ॥ सम्बोधनविभक्त्यन्तमाद्युदात्तम् । अग्ने गृहपते ॥ "तेनानन्त"इत्येकपदातिदेशात् ऊर्ज्जो नपादित्यत्र ऊर्ज्जः शब्द आद्युदात्तः । वस्तुत ऊर्ज्जः शब्दस्तु अन्तोदात्तः । ऊर्ज्जो नपातम् । "पदपूर्वमिति तु एतस्यापवादः । तस्याप्र-

प्तिर्निषेधविषयस्यात्रोदाहरणम् ॥ कृष्णो मृगसँय्योगे । १८१ । कृष्णशब्द आद्युदात्तः स्यात् । पशुवाचकस्य विशेषणं न चेत् । कृष्णोऽसि । कृष्णो रात्र्यै । अमृगेति किम् । श्वा कृष्णः । अत्र श्वेत्यस्य कृष्णइति विशेषणम् ॥ व्ययवाँश्चान्तः । १८२ । विकारवानन्तःशब्द आद्युदात्तः स्यात् । परोऽअन्तः । व्ययवान्किम् । अन्तर्मेहति । अथमव्ययम् अतो वचनादिकृतो विकारो न ॥ परः प्रधाने ॥ १८३ ॥ अयमाद्युदात्तः प्रधानवाचकश्चेत् । जातः परोऽअन्न्यः । प्रधाने किम् । परो दिवा । अत्र परशब्दोऽन्यवचनः ॥ मात्रा च परिमाणे ॥ १८४ ॥ मात्राशब्द आद्युदात्तः परिमाणवाचकश्चेत् । कस्य मात्रा । परिमाणे किम् । त्रिभूर्मात्रा । इदं मातृशब्दस्य तृतीयैकवचनम् ॥ दक्षिणा च ॥ १८५ ॥ अयमाद्युदात्तः । दक्षिणामारोह ॥ न दशविश्वकर्म्मनिषद्येन्द्रस्य पातु सदः सद्भ्येषु ॥ १८६ ॥ दशेत्यादिसप्तसु दक्षिणाशब्दआद्युदात्तो न । निषद्यादिषु त्रिषु अव्यवहितस्यासम्भवेऽपि निषेधो भवत्येव । तस्मिन्निति वर्णसप्तमीनिर्द्देशविषयं "पदे चेति ज्ञापकात् । दक्षिणा दश । दक्षिणा विश्वकर्म्मा । दक्षिणतो निषद्य । दक्षिणतऽइन्द्रस्य । दक्षिणतः पातु ॥ तसिलादि"ष्विति पुंवद्भावः । अत्र दीर्घान्तत्वाभावात्पूर्वसूत्रस्याप्राप्तौ निषेधो ज्ञा-

पकः । यत्किञ्चिदवयवभेदेऽपि कार्यं प्रवर्तत एवेति । अतएव "एनोऽपापे" इति अत्वेनदित्यत्र भवत्येव । दक्षिणासदः । दक्षिणासद्भ्यः ॥ कर्णः स्वाङ्गे ॥ १८७ ॥ कर्णशब्द आद्युदात्तः स्वाङ्गवाचकश्चेत् । कर्णौ ते दनी । स्वाङ्गे किम् । कर्णो गर्द्दभः ॥ मह्नो नपुंꣳसके ॥ १८८ ॥ मह्न इत्येतदाद्युदात्तं नपुंसकलिङ्गं चेत् । मह्नस्त्य । मह्नश्च मे । नपुंसके किम् । मह्नोऽअग्निः । अयं पुंल्लिङ्गः । अवश्च ॥ १८९ ॥ अयं चाद्युदात्तो नपुंसकश्चेत् । तव श्रवः । नपुंसके किम् । अवश्च मे । अयं पुंसि ॥ अन्धो वीर्य्ये ॥ १९० ॥ अन्धशब्द आद्युदात्तो वीर्यवाचकश्चेत् । अन्धस्त्य । वीर्यें किम् । अन्धन्तमः । अत्रान्धशब्दो निविडार्थः ॥ एता वर्णे ॥ १९१ ॥ अयमाद्युदात्तो वर्णवाचकश्चेत् । एताऽऐन्द्राग्नाः । एताश्चित्राः । वर्णे किम् । एता मे ॥ रोहितश्च केवलः ॥ १९२ ॥ केवलरोहितशब्द आद्युदात्तः । रोहितो धूम्ररोहितः । केवलः किम् । धूम्ररोहितः ॥ यन्त्री राट् ॥ १९३ ॥ यन्त्रीशब्द आद्युदात्तो राट्शब्दपरश्चेत् । यन्त्री राट् । राट् किम् । यन्त्र्यसि ॥ ओषधीरनामन्त्रिते ॥ १९४ ॥ अनामन्त्रितओषधीशब्द आद्युदात्तः । याऽओषधीः । अनामन्त्रितइति किम् । यस्यौषधीः ॥ सर्व्वा विश्वमानुषाश्च

स्वाहा वाजः पयो नमः ॥ १९५ ॥ सर्वादयश्शब्दा आद्युदात्ताः । सर्वँ व्यत् । यत्र विश्वम् । यश्शीमानुषः । विश्वा ऽआशाः । स्वाहा यज्ञम् । वाजश्च मे । पयः पृथिव्याम् । नमः परस्मै ॥ असि शिवासुषदा पयस्वतीयज्ञे मधुमतीर्वर्च्चस्वानोजिष्ठभ्राजिष्ठशुष्मिणी भद्रवाचच्याय वन्द्यो मेध्यो यम आदित्यस्त्रितः सोमेन स्वसेत्येतेषु ॥ १९६ ॥ शिवादिषु सप्तदशसु असिशब्द आद्युदात्तः स्यात् । असि शिवा । असि यज्ञे । भागोऽसि । मधुमतीर्नः । असि वर्च्चस्वानहम् । असोजिष्ठोऽहम् । असि भ्राजिष्ठोऽहम् । असि शुष्मिणी । असि भद्रवाचच्याय । असि वन्द्यश्च । असि मेध्यश्च । असि यमः । असादित्यः । असि त्रितः । असि सोमेन । असि स्वसा अत्र "सन्निकृष्टविप्रकृष्टयोरि"त्यनेन व्यवहितस्य असि स्योनेत्यसिशब्दस्य सुषदाशब्दपरत्वेऽपि आद्युदात्तत्वं । न पयस्वती सहचरितत्वात्सुषदा चासिति सुषदा शब्दस्य आद्युदात्तत्वनिमित्तत्वं । तेनासहचरितस्य स्योनासि सुषदासि ॥ धनदारत्नधाभ्यां च ॥ १९७ ॥ आभ्यां च परोऽसि शब्द आद्युदात्तः । धनदाऽअसि । रत्नधाऽअसि ॥ रायोऽपोषे ॥ १९८ ॥ रायइत्येतत्पदमाद्युदात्तं स्यात्पोषशब्दः परो न चेत् । रायो मे ।

तोतो रायः । अपोषि किम् । रायस्पोषम् ॥ न भागमीभिषयोः ॥ १९९ ॥ एतयोः परयो रायइत्येतदाद्युदात्तन्न । रायो भागम् । रायऽईभिषे ॥ त्रिधा बद्धहितयोः ॥ २०० ॥ एतयोस्त्रिधाशब्द आद्युदात्तः । त्रिधा बद्धः । त्रिधा हितम् ॥ सुकृतं भूते ॥ २०१ ॥ सुकृतपदमाद्युदात्तं भूतकालवाचकं चेत् । पृथुः सुकृतः । भूते किम् ॥ सुकृतं च मे । अयं पुण्यवाचकः ॥ द्विरुदात्तानि ॥ २०२ ॥ अधिकारोऽयम् ॥ बृहस्पतिर्वनस्पतिर्नराशंसस्तनूनपात्ते तनूनपान्नक्तोषासोषासानक्ता द्यावापृथिवी द्यावाक्षामा क्रतूदक्षाभ्यामेतवाऽअन्वेतवा इति च ॥ २०३ ॥ चकारादुत्तरसूत्रादनामन्त्रितानीत्यपकृष्यते । अनामन्त्रितानि बृहस्पतिरित्यादिद्वादशपदानि द्विरुदात्तानि भवन्ति । अनामन्त्रितानि किम् । तनूनपात्पथः । बृहस्पतेऽअति । वनस्पते वीड्वङ्गः । द्यावापृथिवीऽउरो ॥ देवताद्वन्द्वानि चामन्त्रितानि ॥ २०४ ॥ आमन्त्रितानि वर्जयित्वा देवताद्वन्द्ववाचकानि पदानि द्विरुदात्तानि । अग्नीषोमौ । मित्रावरुणौ । देवतेति किम् । दीक्षातपसोः । अनामन्त्रितानि किम् । धेनुर्मित्रावरुणा ॥ इन्द्राबृहस्पतीभ्यामिन्द्राबृहस्पती इति त्रीणि ॥ २०५ ॥ अनयोः शब्दयोस्त्रीण्यक्षराण्युदा-

त्तानि स्युः । इन्द्राबृहस्पतिभ्यान्त्वा देवाऽव्यम् । इ-
न्द्राबृहस्पतीऽऊरुभ्याम् ॥ सर्वमग्ना ३ इ लाजी-
ञ्छाचीनिति त्रिमात्राणिच ॥ २०३ ॥ अग्ना इत्या-
दिपदत्रयं सर्वमुदात्तं स्यात् । त्रिमात्रोऽस्ति येषु
तानि त्रिमात्राणि त्रिमात्रस्वरविशिष्टानि निपात्यन्ते ।
अग्ना३इ । लाजी३न् । शाची३न् ॥ प्रणवश्च ॥ २०४ ॥
अयंच सर्वोदात्तस्त्रिमात्रश्च स्यात् । मादयन्तामो ३
म्प्रतिष्ठ । ओं३क्रतो ॥ विवेशा३इति चानुदात्त-
म् ॥ २०५ ॥ उत्तरम्पूर्वं इत्युत्तरसूत्राभ्यामपकृष्यते ।
अवसाने विद्यमानमनुदात्तं विवेशाइ३ति पूर्वं त्रिमा-
त्रस्वरविशिष्टं निपात्यते । विश्वम्भुवनमाविवेशा३ ।
उत्तरं किम् । आविवेश कान्यन्तः । अनुदात्तं कि-
म् । येषु व्विश्वम्भुवनमाविवेश । हिरण्यगर्भऽइत्य-
ध्याये विवेशपदस्य चतुर्वारमेकस्मिन्दर्भे पठितत्वात्पू-
र्वत्वस्य सापेक्षत्वात्तदध्यायस्यस्यैव प्लुतत्वम् । तेनान्य-
त्र अत्रराँ२ ॥ ऽआविवेश । अभिसँव्विवेशेत्यादौ न ॥
आसीदितिचोत्तरँव्विचारे ॥ २०६ ॥ विचारे वर्त्त-
मानमवसानस्थं आसीदितिपदमनुदात्तविशिष्टं नि-
पात्यते । उपरि स्विदासीत् । विचारे किम् । स्वि-
त्कथाऽसीत् ॥ पूर्वमन्तोदात्तम् ॥ २०७ ॥ विचारे
वर्त्तमानं पूर्वमन्त्वमध्यस्थमासीदितिपदमन्तोदात्तं स्या-

त् । त्रिमात्रं च निपात्यते । अथः स्विदासी३त् । विचारे किम् । का स्विदासीत् । अन्तोदात्तमित्यधिकारः ॥ द्वन्द्वञ्चेन्द्रसोमपूर्वं पूषाग्निवायुषु ॥ २०८ ॥ पूषादिषु त्रिषु उत्तरपदभूतेषु इन्द्रसोमपूर्वंपदकं द्वन्द्वमन्तोदात्तं स्यात् । इन्द्रापूष्णोः । इन्द्राग्नी तमप । इन्द्रवायुभ्याम् । सोमापौष्णः ॥ अग्निश्चेन्द्रे ॥ २०९ ॥ इन्द्रशब्दे उत्तरपदे सति अग्निपूर्वो द्वन्द्वोऽन्तोदात्तः स्यात् । ऋक्सामयोः शिल्पे ॥ यतो गतौ ॥ २१० ॥ यतइत्येतत्पदमन्तोदात्तं स्याद्गत्यर्थकं चेत् । स्वर्यतो धिया । गतौ किम् । यतो जातः प्रजापतिः ॥ पायोर्विशः ॥ २११ ॥ पायुशब्दाद्विश-इत्ययमन्तोदात्तः । पायुर्विशः ॥ पायोः किम् । दैवीर्विशः ॥ आयुरर्यमोर्विश्वश्यस्त्रिभ्यः ॥ २१२ ॥ अर्यमादिभ्यस्त्रिभ्यः पर आयुःशब्दोऽन्तोदात्तः । अर्यमायुः । सर्वंश्यायुः । विधानसामर्थ्याद्व्यवधानेऽपि । कृष्णमस्ति । आयोऽस्त्वा । एभ्यः किम् । आयुर्मे ॥ अस्य रोचनासौ बोधा मे पारम्पुरऽएतारो दिवः कोऽहन्त्वमहीं व्यऽईशऽईशानेभ्यः ॥ २१३ ॥ रोचनादिद्वादशभ्यः परोऽस्य शब्दोन्तोदात्तः । रोचनाऽस्य । असावस्य पिता । बोधा मेऽअस्य । तमसस्पारमस्य । पुरऽएतारोऽअस्य । दिवोऽअस्य पृष्ठम् । कोऽअस्य ।

श्वेशाहमस्य । त्वमस्य यन्ता । महीमस्य स्तोत्रे, यऽईशेऽस्य । ईशानमस्य ॥ प्रतांय्यज्ञस्य हविषः पाहीत्यातं मरुद्भ्यो यजमानस्य होतुरजरासो लोकेषु च ॥ २१४ ॥ प्रतामित्यादेकादशसु अस्येत्यन्तोदात्तं स्यात् । अस्य प्रताम् । अस्य यज्ञस्योदृचः । अस्य हविषस्तमना । सुमनाऽअस्य पाहि ।अस्येदिन्द्रो वावृधे । अस्य यन्ता । अस्य मरुद्भ्यः पिबत । अस्य यजमानस्य । अस्य होतुः प्रदिशि । अस्याजरासः । अस्य लोकः सुतावतः । अनुदात्तमन्यत् ॥ २१५ ॥ उक्तान्यं यदस्येतिपदमनुदात्तम् । कच्यस्य विष्ठाः । षडस्य विष्ठाः ॥ अनुदात्तमाख्यातमामन्त्रितवत् ॥ २१६ ॥ तिङन्तमामन्त्रितवत्पदं पूर्वमपादादौ विद्यमानं परस्परान्वितार्थकं चेदनुदात्तम् । पशून्पाहि । हव्यं रक्ष । पदपूर्वं किम् । व्यन्तु वयः । विदेदग्निः । अपादादौ किम् । अरातीः सहस्व । परस्परान्वितार्थकं किम् । विष्णो पाहि । पाहि यज्ञम् ॥ परोपावप्रतिपर्य्यन्वप्यत्यध्याङ्प्रसन्निर्दुरुन्निविस्वभि ॥ २१७ ॥ परा । उप । अव । प्रति । परि । अनु । अपि । अति । अधि । आङ् । प्र । सम् । निर् । दुर् । उत् । नि । वि । सु । अभि । एते विंशतिरुपसर्गाः । तथा चोक्तम् । विंशतेरुपसर्गाणामुक्ता एकाक्षरा नव । आ-

द्युदात्ता दध्यैतेषामन्तोदात्तमभिस्वयम् । १ । उपसर्गं उपसर्गे ॥ २१८ ॥ उपसर्ग उपसर्गे परेऽनुदात्तः । सम्प्रच्यवद्ध्वम् । सम्प्रयात ॥ आम्रेडिते चोत्तरः ॥ २१९ ॥ द्विरुच्चारणे पर उपसर्गोऽनुदात्तः । प्रप्र यज्ञपतिम् । सꣳसमित् ॥ कृदाख्यातयोश्चोदात्तयोः ॥ २२० ॥ उदात्तोऽस्ति ययोरुदात्तवति कृदन्ते उदात्तवत्याख्याते परे उपसर्गोऽनुदात्तः । विभ्राजमानः । सम्भरन्ति । उदात्तयोः किम् । उत्पुनामि । अवधूतम् ॥ नाप्येकाक्षरस्य स्वरसन्धेयेऽकृति ॥ २२१ ॥ अभिरेकाक्षरश्चोपसर्गः स्वरात्मके उपसर्गेण सन्धिमति कृदन्तभिन्ने परेऽनुदात्तो न स्यात् । अभ्याऽदधामि । अभ्यषिञ्चन् । व्याकरोत् । न्यतीदत्पिता नः । व्यदधुः । अकृति किम् । एज्याऽऽद्दषः ॥ आपूतजातयोः ॥ २२२ ॥ आङ्त्ययमुपसर्गः पूतजातयोः परयोरनुदात्तो न स्यात् । आपूतः । आजातः ॥ अधि नि प्र प्रति श्रितावित्रिणं प्रभानवः पचतेषु ॥ २२३ ॥ अधीत्यादयश्चत्वारो यथासङ्ख्ये श्रितादिषु चतुर्षु नानुदात्ताः । अधिश्रिताः । विश्वन्यत्रिणम् । प्रभानवः सिस्रते । प्रतिपचता गृभीषत ॥ उज्जेषमावर्त्तऽआपनीफणत्सꣳसनिष्यदत्सँव्वतं प्रयाणꣳसञ्चरन्तꣳसꣳरभद्ध्वं प्रसितिँ विक्रमस्वे-

त्येष्वनु ॥ २२४ ॥ उज्जेषमित्यादिदशसु अनुरनुदात्तो न । अनूज्जेषम् । अन्वावर्त्ते । अन्वापनीफणत् । अनुसर्ठं॰सनिष्यदत् । अनुसँव्वतम् ॥ अनुप्रयाणम् । अनुसञ्चरन्तम् । अनुसर्ठं॰रभद्वम् । अनुप्रसितिम् । अनुविक्रमस्व ॥ आोपप्रोदात्ते ॥२२५॥ आ । उप । एतौ उदात्ते प्रशब्दे नानुदात्तौ भवतः । आप्रयच्छ । उपप्रागात् ॥ अभि प्रेह्युपस्मप्रयातप्रत्यातनुष्वासुषाव ॥ २२६ ॥ अभिप्रेहीत्यादि चत्त्वारि निपात्यन्ते । प्रकृत्याऽऽख्यातमाख्यातपूर्व्वम् ॥ २२७ ॥ नानुदात्तम् । पिबन्तुमदन्तु व्यन्तु ॥ उदात्तोऽस्ति यस्मिन्नुदात्तवतः आमन्त्रितात्परमाख्यातन्नानुदात्तम् । अग्ने पवस्व । होतर्य्यज । एकान्तरादपि ॥ २२८ ॥ एकपदान्तरितादपि उदात्तवतआमन्त्रितात्परमाख्यातन्नानुदात्तम् । ब्रह्मन्नश्वम्भन्त्स्यामि । अपिशब्दात्क्वचिदनुदात्तम् । इन्द्रायाहि । एतन्निर्णये सम्प्रदायएव शरणम् ॥ यद्वृत्तोपपदाच्च ॥ २२९ ॥ च अप्यर्थे । यदा यच्छब्देन वृत्तं समापितं यत् यदि यतः यत्र यथा ये इत्यादि सर्व्वविभक्त्यन्तं यद्वृत्तं तदुपपदं अर्थतः सम्बद्धं येन पदेन तस्मादपि परमाख्यातन्नानुदात्तम् । अपिना यद्वृत्तादपि । यमाहुः । यत्रऽऋषयो जग्मुः । यतो जातो

ऽअरोचथाः । यथा समुद्रद्रऽएजति । यऽउपरासऽ-ह्वयुः । दूरस्थस्यापि अर्थतः सम्बन्धो ग्राह्यः । तथा चो-क्तम् । यस्य येनार्थसम्बन्धो दूरस्थस्यापि तस्य तत् ॥ अर्थतो ह्यसमानानामानन्तर्य्यन्न कारणम् ॥ १ ॥ हेश्च ॥ २३० ॥ हिशब्दादुत्तरमाख्यातन्नानुदात्त-म् ॥ आपो हिष्ठ ॥ उत्तरेऽपि ॥ २३१ ॥ हिशब्दे परे चाख्यातन्नानुदात्तम् । वाम्रुशन्ति हि ॥ ने-त् ॥ २३२ ॥ अस्मान्निपातसमुदायात्परमाख्यातं नानुदात्तम् ॥ नेत्त्वदपचेतयातै ॥ समनसस्कर-त् ॥ २३३ ॥ समनसइत्यस्मात्परं करदित्याख्यातं नानुदात्तम् । असपत्नाः समनसस्करत् ॥ द्वयोः पूर्व्वं समुच्चये ॥ २३४ ॥ द्वयोराख्यातयोः समुच्चये वर्त्तमानयोः पूर्वन्नानुदात्तम् । शर्म्म च स्त्यो वर्म्म च स्त्यः । शञ्च वक्षच परि च वक्षच । समुच्चये किम् । तन्त-मिद्धतं वज्ज्रेण तन्तमिद्धतम् ॥ इति प्रकृतिस्वराः ॥ अर्थः पदम् ॥ २३५ ॥ अर्थोऽस्ति यस्मिन्नर्थवाचकः । अक्षर-समुदायो"ऽक्षरं वा पदं स्यात् । एषः । सः । तत् । उत । त्वा । आ । अवतु ॥ तच्चतुर्द्धा ॥ २३६ ॥ त-त्पदं चतुः प्रकारं स्यात् । उक्तं च । क्रियावाचकमाख्यात-मुपसर्गो विशेषकृत् ॥ सत्त्वाभिधायकन्नाम निपाताः पादपूरणाः ॥ २३७ ॥ अर्पयतु । पाहि । इत्याद्याख्यात-

म् । परा । उप । इत्यादयो विंशतिरुपसर्गाः । देवः । सविता । इत्यादीनि नामानि । वा च उतेत्यादयो निपाताः ॥ पदविच्छेदेऽसंहितः ॥ २३८ ॥ पदे पदे विच्छेदे विलम्बिनोच्चारणं असंहितः । न संहिता यस्मिन्त्सः पदपाठः । धिसञ्ज्ञकेषु विसर्गस्य लोपाद्विसर्गान्तत्वस्वरान्तत्वनिर्णयार्थं सन्दिग्धानि लिख्यन्ते । विभ्रभ्राजदृजयस्पृधः । विभ्रभ्रा विराजति । इति पदद्वये ऊष्मान्तं ऊष्मा विसर्गः । अन्यत्र स्वरान्तम् । विश्वा रूपाणि ॥ २३९ ॥ पृथिव्यापदं मत्यीत्यस्मिन्त्स्वरान्तमन्यत्रोष्मान्तम् । इमापदं विभ्रभ्रा । वः । ब्रह्म हरी युक्ता जजान नु कम् । इति सप्तसु स्वरान्तम् । अन्यत्रोष्मान्तम् । इमा रुद्रायेत्यादि । व्विष्णो बभूव नासत्या भिषजा न आवोढं या देवा हविषा नो मृडातः । नोऽअच्छ विश्रमुञ्चइत्येतेषु दशसु ताइति स्वरान्तमन्यत्रोष्मान्तम् । ताः । नः । हिन्वन्तु । हविर्हृम्यत्योः साध्यादा इति यथासङ्ख्यं स्वरान्ते अन्यत्र विसर्गान्ते । आशीर्हीः । वसुभिः ॥ २४० ॥ वरिवो विदंद्युवमित्यनयोर्धिषण्यास्वरान्तमन्यत्र विसर्गान्ते । ऊचिषे । धिषण्या । ये ॥ मर्त्ती वृरीत मर्त्तेष्वग्निः परोमर्त्तस्ते मर्त्तइति च ॥ २४१ ॥ एतेषु चतुर्षु मर्त्तशब्दोऽयकारः । अन्यत्र मर्त्त्यः ॥ क्रमोक्तावृत्तिः पदेषु ॥ २४२ ॥ क्रमप्रकरणे उक्ता आवृत्तिः

पदपाठे स्यादवसानवर्ज्जम् ॥ तद्यथा॥ पूर्व्वस्योत्तरसंहितस्य ॥ २४३ ॥ स्थितोपस्थितमवगृह्यस्य ॥ २४४ अन्तःपदेदीर्घी भावे ॥ २४५॥ विनामे॥ २४६ ॥ प्रगृह्ये ॥ २४७॥ रिफिते निरुक्ते॥ २४८॥ तत्रावग्रहवतः पदस्य स्थितोपस्थितं स्यात्।ये विधयः स्थितोपस्थितौ वेष्टने न भवन्ति ते तत्प्रकरणे एव दर्शिताः । कुत्रावग्रहः कर्त्तव्यस्तत्राह ॥ समासेऽवग्रहो ह्रस्वसमकालः॥ २४९ ॥ समासइत्यधिकारः । समासेऽवग्रहो ह्रस्वसमकालः एकमात्राकालो विरामः स्यात् । स च चर्चायां प्रदर्शनीयः सम्प्रदायात् ।अन्तःपार्श्व्यमित्यन्तः। पार्श्व्यम् ।अनुरूपमित्यनु। रूपम्। व्रतपतऽइति व्रत । पते। पुरोगाऽइति पुरः। गाः। मणिवालऽइति मणि । मालः। ऋटक्सामाभ्यामित्यृक् । सामाभ्याम् । अवग्रहइत्यधिकारः ॥ तरतमयोश्चातिशयेऽदक्षिणप्रत्यासङ्गे ॥ २५० ॥ समासाभावादारम्भः। अतिशये विद्यमानयोस्तरतमयोरवग्रहः स्यात् । दक्षिणशब्दः प्रतियोगी न चेत्। पूर्णतरमिति पूर्ण। तरम्। प्रप्रितममिति प्रप्रि। तमम्। अदक्षिणेत्यादि किम्। द्यावापृथिव्योर्ह्दक्षिणं पार्श्वं विश्वेषां देवानामुत्तरमित्यत्रोत्तरमित्येव । अतिशये किम्। कारोतरः॥ क्षीतमहूतमस्तूतमगोपातमरत्नधातमवसुधातमाः पू-

स्वंश ॥ ३५१ ॥ एते शब्दाः पूर्वेणावगृह्यन्ते । देववीतममिति देव । वीतमम् । देवहूतममिति देव । हूतमम् । सुहूतममिति सु । हूतमम् । सुगोपातमऽइति सु । गोपातमम् । सुधातमऽइति सु । धातमः ॥ सर्प्पदेवजनेभ्यश्च ॥ ३५२ ॥ इदं च पूर्वेणावगृह्यते । सर्प्पदेवजनेभ्यऽइति सर्प्प । देवजनेभ्यः ॥ तूणवध्ममुत्तरेण ॥ ३५३ ॥ इदमुत्तरेणावगृह्यते तूणवध्ममिति तूणव । ध्मम् ॥ रायस्पोषदे विजावेति च ॥ ३५४ ॥ इमे चोत्तरेणावगृह्यते । रायस्पोषदऽइति रायस्पोष । दे । विजावेति विजा । वा ॥ बहुप्रकृतावागन्तुना पर्वणा ॥ ३५५ ॥ बहुपदसमासे पाश्चात्कालिकेन पदेनावग्रहः स्यात् । प्रजापतिरिति प्रजा । पतिः । सुप्रजाऽइति सु । प्रजाः ॥ तद्वति तद्धिते न्यायसंहितं चेत् ॥ ३५६ ॥ वतीति तन्त्रेण द्विरुच्चारितं तदस्ति यस्मिंस्तस्तस्मिन्मत्वर्थे विद्यमाने तद्धिते वति प्रत्यये च परेऽवग्रहः स्यात् । शास्त्रोक्तसन्धिमत्पदं चेत् । मधुमदिति मधु । मत् । सँव्वतमिति सम् । व्वतम् । न्यायसंहितमिति किम् । मरुत्वान् । अत्र "समर्थोऽपञ्चमः" इति तृतीयः शास्त्रसिद्धोपि न दृष्टः । अतो न भवति ॥ अस्त्वन्ताताविषु च ॥ ३५७ ॥ असइत्यादिषु चतुर्ष्ववग्रहः स्या-

त् । ऋतुथाऽइत्यृतु । थाः । अमृतत्त्वमित्यमृत त्त्वम् । देवत्रेति देव । त्रा । ज्येष्ठतातिमिति ज्येष्ठ । तातिम् ॥ धात्त्वर्थे यकारे स्वरपूर्व्वे ॥ ३५८ ॥ धातुसञ्ज्ञानिमित्तभूतो यकारः क्यजादिः स्वरपूर्वे त-स्मिन्परेऽवग्रहः स्यात् । इषयमाणऽइति इष । यमा-णः । धात्त्वर्थे किम् । जायमानः ॥ वाᳬसौ च भूत-काले स्वरेण ह्रस्वादनुषि ॥ ३५६ ॥ स्वरेण तृतीया सञ्ज्ञस्यर्थे । ह्रस्वस्वरात्परभूते वांसशब्दे भूतकालार्थे परेऽवग्रहःस्यात्स उषरूपो न चेत् । यज्विवाᳬसऽइति यज्वि । वाᳬसः । सस्वाᳬसऽइति सस्व । वाᳬसः । स्व-रेण किम् । चिकित्वान् । ह्रस्वात्किम् । अन्यशाखी-यम् । जिगीवाᳬसः । भूतकाले किम् । सुविद्वाᳬसऽ-इति सु । विद्वाᳬसः । अनुषि किम् । तस्थुषः ॥ प्रत्नपूर्व्वविश्वेमर्तुभ्यस्था ॥ ३६० ॥ एभ्यः पञ्चभ्यः स्थाप्रत्ययेऽवग्रहः स्यात् । प्रत्नथेति प्रत्न । था । पूर्व्वथेति पूर्व्व । था । विश्वथेति विश्व । था । इमथेतीम । था । ऋतुथेत्यृतु । थां ॥ ह्रस्वव्यञ्जनाभ्यान्भकारादौ विभक्तिप्रत्यये ॥ ३६१ ॥ ह्रस्वाद्व्यञ्जनाच्च परे भका-रादौ विभक्तिसञ्ज्ञे प्रत्यये परेऽवग्रहः स्यात् । अ-ग्निभिरित्यग्नि । भिः । धावद्भ्यऽइति धावत् । भ्यः । तत्त्वभ्यऽइति । तत्त्व । भ्यः । समिद्भिरिति

समित् । भिः । ह्रस्वेत्यादि किम् । व्रातेभ्यः । पत्नीभ्यः । विभक्तीति किम् । गर्द्दभः । स्विति चानतौ ॥ ३६२ ॥ ह्रस्वव्यञ्जनाभ्यामकृतषत्वे सुइति विभक्तिप्रत्यये परेऽवग्रहः स्यात् हृत्स्विति हृत् । सु । अप्स्वित्यप् । सु । धामस्विति धाम । सु । अनतौ किम् । अग्निषु । स्नुषु । विभक्तीति किम् । असुम् । ह्रस्वेति किम् । यासु । वर्णसङ्ख्येऽन्यतरतः ॥ ३६३ ॥ समासइति मण्डूकप्लुतिन्यायेनानुवर्त्तते मध्ये त्वसम्भवान्न सम्बध्यते । वर्णवाचके सङ्ख्यावाचके च समासे विकल्पेनावग्रहः स्यात् । धूम्ररोहितइति धूम्र । रोहितः । पञ्चदशेति पञ्च, दश । त्रयोदशेति त्रयः । दश । विभाषितत्वात् । त्रिनवत्रयस्त्रिंशाविति त्रिनवत्रयस्त्रिंशौ । अत्र न । व्यवस्थितविकल्पः । सम्प्रदायानुसारेण पठनीयम् ॥ अनुदात्तोपसर्गौ चाख्याते ॥ ३६४ ॥ अनुदात्ते उपसर्ग आख्यातपरेऽवग्रहः स्यात् । उपधावतीत्युप । धावति । सम्भरन्तीति सम् । भरन्ति ॥ गिरित्रशयोः ॥ ३६५ ॥ गिरिशब्दोऽवगृह्यते त्रशयोः परयोः । गिरिशेति गिरि । श । गिरित्रेति गिरि । त्र ॥ इवकाराम्रेडितायनेषु ॥ ३६६ ॥ इवकारादिषु चतुर्ष्ववग्रहः स्यात् । सुचीवेति सुचि । इव । वषट्कारै-

भिरिति वषट् । कारेभिः । सर्ठं०समिति सम् । स-
म् । प्रायनायेति प्र । अयनाय ॥ एकात्समी-
ची ॥ ३६७ ॥ एकशब्दात्परः समीचीशब्दोऽवगृह्य-
ते । एकम् । समीचीऽइति सम् । ईची । एकात्कि-
म् । समीचीऽइति समीची । उरसा ॥ त्वायवः शँय्यो
र्बर्हिर्द्धाऽस्मयुर्मृन्मयीं॑सुम्नयाशुया साधुया धृ-
ष्णुया विशालमनुया ॥ ३६८ ॥ एतान्येकादशप-
दानि सावग्रहाणि स्युः । त्वायवऽइति त्वा । य-
वः । शँय्योरिति शम् । योः । बर्हिर्द्धेति बर्हिः । धा ।
अस्मयुमित्यस्म । युम् । मृन्मयीमिति मृत् । म-
यीम् । सुम्नयेति सुम्न । या । आशुयेत्याशु । या ।
साधुयेति साधु । या । धृष्णुयेति धृष्णु । या । वि-
शालमिति वि । शालम् । अनुयेत्यनु । या ॥ मृगयु-
मुभयादतोऽपामार्ग्गं किम्पूरुषमिति च ॥ ३६९ ॥
एतानि चत्वारि पदान्यवगृह्यन्ते । मृगयुमिति मृ-
ग । युम् । उभयादतऽइत्युभय दतः । अपमार्ग्गेत्यप ।
मार्ग्ग । किम्पुरुषमिति किम् । पुरुषम् ॥ अधीवा-
समित्येके ॥ ३७० ॥ एकशब्दो मुख्यार्थः । एतत्सा-
वग्रहं स्यात् । अधिवासमित्यधि । वासम् ॥ प्रति-
षेधे नावग्रहः ॥ ३७१ ॥ प्रतिषेधवाचिनि पूर्वपदे-
ऽवग्रहो न स्यात् । अन्तसा । अनिरा । उत्तरेणचा-

कारेण ॥ ३७२ ॥ प्रतिषेधवाचिनः परेणाकारेणा वग्रहो नस्यात् । अनाततताय । अनाधृष्ष्याः ॥ द्वापूर्व्वं ॥ ३७३ ॥ द्वाइतिपूर्व्वम्पदं नावगृह्यते । द्वादश ॥ सङ्ख्या पूर्व्वश्श्वा धा ॥ ३७४ ॥ सङ्ख्यावाचकपूर्वपदं धाइत्येतस्मिन्परे नावगृह्यते । त्रिधा । सप्तधा । कतिधा ॥ द्वन्द्वानि द्विवचनान्तानि स्वरान्तपूर्व्वपदानि ॥ ३७५ ॥ स्वरान्तपूर्वपदमेषां तानि द्विवचनान्तानि नावगृह्यन्ते । मित्रावरुणाभ्याम् । अग्नीषोमौ । स्वरान्तेत्यादि किम् । ऋक्सामयोरित्यृक् । सामयोः ॥ तद्धिते चैकाक्षरवृद्धावनिहिते ॥ ३७६ ॥ तद्धिते सत्येकाक्षरस्य पूर्वपदस्य वृद्धौ उत्तरपदेनाव्यवहितायामवग्रहो न स्यात् । सौभाग्यम् ॥ त्रैस्तुभेनेति त्रै । स्तुभेन । अनिहिते किम् । साम्राज्यमिति साम् । राज्यम् । एकाक्षरे किम् । आनुस्तुभमित्यानु । स्तुभम् ॥ अञ्चतिसहत्योः कल्लोपे ॥ ३७७ ॥ कल्लोपे सति अञ्चतिसहत्योः प्रयोर्नावग्रहः स्यात् । प्राङ् । प्रत्यङ् । ऋताषाट् । कल्लोपे किम् । आच्च्योत्या । अच्य । पृतनासह्यायेति पृतना । सह्याय । अनुरुसुभ्यां कल्लोपे ॥ ३७८ ॥ अञ्चतौ सहतौ च परेऽवग्रहनिषेधो न स्यात् । उदञ्च्यञ्चानित्युरु । अञ्चम् । सुमाहमिति सु । साह-

म् ॥ समिद्भ्यां वत्सरः ॥ ३७९ ॥ सम् । इदा अभ्यां वत्सरेऽवग्रहो न स्यात् । सँव्वत्सरः । इदा वत्सरः । समिद्भ्यां किम् । परिवत्सरऽइति परि । वत्सरः ॥ प्राग्निभ्यामनिन्धौ प्रक्षेपे ॥ ३८० ॥ प्रअग्निइत्येताभ्यां इन्धधातुभिन्ने परे एकीभावसम्बन्धावग्रहः स्यात् । प्राणः । आग्निध्रम् । अनिन्धौ किम् । प्रेद्धऽइति प्र । इद्धः । प्राग्निभ्यां किम् । अपानऽइत्यप । आनः । वीध्यायेति वि । इध्याय ॥ जनयत्याऽओषधयो ह्षायिषत नहि च नारमभ्यमजावयो व्वल्गम् ॥ ३८१ ॥ जनयत्या इत्यादीन्यष्टौ नावगृह्यन्ते ॥ जनयत्यै त्वा । ओषधयः प्रति । भागमाह्षायिषत । नहि तेषाममा च न । कदा चन । पावकोऽअस्मभ्यम् । उपहूताऽअजावयः । अहन्तँव्वलगमुत्किरामि ॥ समानोऽनश्वमेधे ॥ ॥ ३८२ ॥ समानशब्दो नावगृह्यते । अश्वमेधे न चेत् । ये समानाः । अनश्वमेधे किम् । समानऽइति सम् । आनः । तेजोऽसीत्यध्याये एतदारभ्याध्यायचतुष्टयमश्वमेधप्रकरणम् ॥वायुरसजातः समुद्रोऽहोरात्रे विश्वानरो विश्वाहाग्रहायणोऽसपत्ना गोधागे धूमाऽआग्रुग्रुजगिन्न्यग्रोधः पुरोडाशः प्रावणेनिरग्रोतमतष्कुरान्न्महस्मसाश्वत्यऽउपस्तिम्नीनिर्व्वि-

श्वामित्रो गोपाम्प्रऽउगमङ्गानि कक्षीवन्तम्दधा-त्यत्रीरवन्नीहारेण प्रावृतता घनाघनऽईहृद्भन्याद्रङ्-शूघनासः कुश्रवङ्कुचरः प्रियङ्गवो नीवारा एकादश षोडश चन्द्रमाऽश्रायुवो व्याघ्रोऽनड्वान्गविष्ठि-रः कपर्दिने पुलस्तये निषङ्गिणे कुलालेभ्यः क-र्मारेभ्यः पुञ्जिष्ठेभ्यो ह्रीप्याय नीप्याय किंशि-लायैलष्टदाः शूकाराय शूकृताय चराचरेभ्यः पाराव-तान्गोलत्तिकाऽऽखुरजगरो व्विपन्न्यवो दाचायणाऽ-श्रायुशठं० सुरामं बृहस्पतिर्व्वनस्पतिर्न्नराशठं० सुर-भिर्न्नरिष्टठायै ॥ ३८३ ॥ एतानि सप्ततिपदानि नावगृ-ह्यन्ते। इदं दिक्प्रदर्शनार्थम् । अन्यान्यप्येवंविधानि द्रष्टव्यानि। उतभ्नम् । आदिसंशयात्। विशौजाः अन्यायसमासात्। उगणाः। उपसर्गैकदेशलोपात्। पुं-स्त्रलूम्। अनुनासिकोपधत्वात्। अवत्तानाम्। धात्वे-कदेशलोपात्। इत्यादीनि। तथा चोक्तम्। आदिम-ध्यान्तलुप्तानि समासान्न्यायभाञ्जि च॥ नावगृह्णन्ति-कत्रयः पदान्यागमवन्ति च॥ १॥ चकारोऽनुक्तसमुच्चया-र्थः। तेन ध्रजीमानित्यत्र नावग्रहः। अत्र सम्प्रदाया-नुसारेण व्यवस्था॥ अनितावन्तर्व्विकारागमम्प्राग्रु-ष्का॥ ३८४॥ इतिरहितं पदं मध्यस्थविकारागम-सहितं पूर्व्वमुच्चार्य्य स्थितोपस्थितं कार्य्यम्। श्रेयस्कर।

श्रेयः करेति श्रेयः । कर । आयुष्पाः । आयुःपाऽइत्या-
यु । पाः । ऋतस्पते । ऋतपतऽइत्यृत । पते । अहस्पि-
तये । अहःपतयऽइत्यहः । पतये । दुदुक्षन् । दुधुक्ष-
न्निति दुधुक्षन् । विश्वप्सतीवेति च ॥ ३८५ ॥ इदं च पू-
र्व्वमुक्ता स्थितोपस्थितं कर्त्तव्यम् । विश्वप्सतीवोप-
स्थिते ॥ ३८६ ॥ विश्वप्सतीदमिवे परे प्रकृत्या भव-
ति । उपस्थिते विद्यमानं चेत् । विश्वप्सती व । वि-
श्वप्सतीवेति विश्वप्सती । इव । सᳪंहितावदवग्रहः
स्वरविधौ परश्च सर्व्वश्चेदनुदात्तम् ॥ ३८७ ॥ अवग्र-
हयोग्यं पूर्वं पदं स्वरविधौ संहितावद्भवति परं च स
र्वञ्चेत् संहितावत्सर्वमनुदात्तञ्चेत् । आखरे स्त्य ऽइत्या-
खरे । स्त्यः । "नोदात्तस्वरितोदय"मिति निषेधात्प्र-
चयो न । प्रजावतीरिति प्रजा । वतीः । अत्रो"दात्ता-
द्नुदात्त"मिति वकारस्य स्वरितः । वह्नितममिति
वह्नि । तमम् । अत्र"स्वरितात्पर"मित्यनेन तमस्मित्य
स्य प्रचयो भवति । स्वरविधौ किम् । धावद्भ्यऽइति धाव
त् । भ्यः । अत्र संहिताया अभावा"त्स्पर्शोऽपञ्चम"
इति तृतीयो न । सर्वानुदात्तत्वाभावे विशेषमाह ॥
इति परस्तिर्य्यङ्ङ्नीचान्तोदात्ते मध्योदात्ते पर्व्वणि का-
ण्वस्य वा ॥ ३८८ ॥ परमित्यनुवर्त्तते । अन्तोदात्ते-
मध्योदात्ते वा पदे इतेः परभूते चर्चापदे परो

भागस्तिर्यङ्नीचोऽविकृतोऽनुदात्तो यस्मिन्नेतादृशः स्यात् । व्रिरुरुचुरिति वि । रुरुचुः । सान्तपनेभ्यऽइति साम् । तपनेभ्यः । अत्र पूर्वसूत्रेण रुरुचुरित्यनयोः प्रचये प्राप्तेऽनेनानुदात्तएव विधीयते ॥ अन्तःपददीर्घीभावे ॥ २८९ ॥ पदमध्यस्थं दीर्घत्वं यस्य पदस्य तस्मिन् स्थितोपस्थितं स्यात् । मामहन्ताम् । ममहन्तामिति ममहन्ताम् । पूरुषः । पुरुषऽइति पुरुषः । इदं पदान्तस्थत्वाभावोपलक्षणम् । आयुनक् । अयुनगित्ययुनक् । अन्तःपदे किम् । पिब सोमम् । पिबा सोमम् ॥ विनामे ॥ २९० ॥ अन्तःपदइत्यनुवर्त्तते । अन्तः पदे दन्त्यस्य मूर्द्धन्यभावे सति स्थितोपस्थितं स्यात् । सुषाव । सुसावेति सुसाव । सीषधाम । सीसधामेति सीस । धाम । अन्तःपदे किम् । आपो हि ष्ठ । हिस्त्य ॥ प्रगृह्ये ॥ २९१ ॥ प्रगृह्ये पदे स्थितोपस्थितं स्यात् । द्वेऽइति द्वे । द्यावापृथिवीऽइति द्यावा । पृथिवी । इन्द्रवायूऽइतीन्द्र । वायू । चमूऽइति चमू । अस्मेऽइत्यस्मे । त्वेऽइति त्वे ॥ मे ॥ २९२ ॥ इत्यशात्तस्य प्रगृह्यत्वात् । मेऽइति मे । रायः । उदात्तं किम् । मे वरुण । अमीऽइत्यमी ॥ प्लुतमितौ ॥ २९३ ॥ प्लुतमक्षरमितौ प्रकृत्या । एतस्योदाहरणं क्रमप्रकरणे वक्ष्यते ॥ "पदान्तपदाद्योः सन्धिरिति नियमात्

प्लुतस्य इतौ परे एकपदस्थत्वा"त्कण्ठ्यादिवर्ण्ण एकार"मित्यस्य प्राप्तौ प्रकृतिभावविधानं व्यर्थन्तज्ज्ञापयति । इतौ पदान्तकार्यम्भवति तेन दुरोणसदिति दुरोण । सत् । इत्यादौ "नान्तःपद"इति निषेधाभावा"त्सर्गोऽपञ्चम"इति तृतीयादि भवति । परेण सन्धिस्तु उभे संहिते स्याद्दित्युक्तत्त्वात्स्थितस्य भिन्नपदत्त्वाद्भवति । अपहृतमित्यप । हृतम् । प्रतिज्ञासूत्रस्था धर्मा न भवन्ति । प्रतिज्ञासूत्रशेषभूतायाममोघनन्दिन्या"मवग्रहः पदान्तव"दिति सिद्धेऽपि अवग्रहे पुनर्जकारविधानात्तेन यृह्णोऽइति यह्णो ॥ ओकारश्च ॥ २६४ ॥ अयमितौ प्रकृत्या । वायोऽइति वायो । "ओकारश्च पदान्ते"इत्यनेन प्रगृह्यत्वे स्थितोपस्थिते सति प्रगृह्यत्वात्प्रकृतिभावे सिद्धे पुनर्विधानं नियमार्थं इताविव नान्यत्र । विष्णवेते । वायविह । अनवग्रहः किम् । गविष्टाविति गो । इष्टौ । अत्र गोशब्दे स्थितोपस्थिते मा भूत् । "उकारोऽपृक्त"इत्यनेन प्रगृह्यत्वात्स्थितोपस्थिते ॥ उकारोऽपृक्तो दीर्घमनुनासिकम् ॥ २६५ ॥ इतौ परे उदतिपदं दीर्घमनुनासिकं ऊँ इति रूपमापद्यते । इति पदं परे स्थितेऽपि । ऊँऽइत्यूँ इति सिद्धम् । अन्तरित्यन्तः । "अनाद्युदात्तमित्युक्तत्वात् । अन्तः । पृथि-

व्यः । सद्व्यक्तः । करिति कः । "अनुदात्तमित्युक्त-त्वात् । कः । स्वित् । स्वरिति स्वः । स्तभितम् । प-दमित्युक्तत्वात्पदावयवे न । राजस्वऽइति राज । स्वः । आवरित्यावः । वरिति वः । "समानस्वौत्यु-क्तत्वात् । सन्तु । वः । अन्तः श्लेषऽइत्यन्तः । श्लेषः । अत्र पूर्वभागेऽवग्रहः पदान्तवदिति स्थितं प्राप्तं "नक्वि-तिकरणमित्युक्तत्वान्न भवति ॥ त्रिपदाद्यावर्त्तमाने सङ्क्रमः ॥ २९६ त्रिपदादीनां पुनरावृत्तौ सत्यां स-ङ्क्रमः सङ्क्रम्यते इति सङ्क्रमः । आवृत्तानि पदान्य-तिक्रम्याग्रिमपरपदं न कर्त्तव्यम् ॥ अनन्तरे ॥ २९७ ॥ शब्दतस्त्वार्थतश्चानन्तर्य्ये सङ्क्रमः स्यात् । शब्दतश्चा-नन्तर्ये गन्धर्व्वस्त्वा व्विश्वावसुरित्यत्र व्विश्वस्यारि-ष्ट्यै इत्याद्येकदोच्चारितं पुनरिन्द्रस्य बाहुरित्यादौ सङ्क्रम्यते । अर्थतो मधुश्च माधवश्चेत्यत्रोच्चारितस्य पदसमुदायस्य शुक्रश्च शुचिश्चेत्यादौ सङ्क्रमः ॥ द्विपदैकपदान्यप्यनुवाके ॥ २९८ ॥ द्विपदे एकपदं च एकस्मिन्ननुवाके पुनरावृत्तौ सङ्क्रम्यते । अत्रा-प्यनन्तरइति वर्त्तते तेन याऽओषधीरित्यत्रैकदोच्चा-रितस्य याइत्यस्य याः फलिनीरित्यत्रोच्चारणम् ॥ त्रि-रावृत्ते ॥ २९९ ॥ त्रिरावर्त्ततेऽयं सङ्क्रमः स्यात् । व्वाजः । च । मे । प्रसवः । प्रयतिः । मा कन्दः ।

प्रमा । प्रतिमा । एकइत्यादिकिम् । पवित्त्रम् । अ-सि । धूः । असि । धर्म्म । त्रिरावृत्ते किम् । व्रतम् । कृणुत । व्रतम् । कृणुत । इषे । त्वा । ऊर्ज्जे । त्वा ॥ गूढे ॥ ३०० ॥ द्विरावर्त्तनेऽपि सङ्क्रमः स्यात् । गूढं नाम द्विवारमुच्चारणीयम् । उभयाभिप्रा-येण मध्ये एकपदं पठ्यते । यन्त्राऽसि यमनः । ध्रु-वोऽसि धरुणः । अत्र यन्त्रा । असि । यमनः । ध्रु-वः । धरुणः । संहितायां द्विरावृत्तस्याप्यसीत्यस्य स-ङ्क्रमो भवति । याः फलिनीरित्यत्र तु याः । च । पुष्पिणीः । अस्य याः शब्दस्य चतुर्वारमुच्चार-णीयस्य त्रिवारमुच्चारणात् । अपुष्पा इत्यनेनापि सम्बन्धं द्योतयितुं न संक्रमः ॥ पदसमूहे ॥ ३०१ ॥ पदानां बहुवारमुच्चारणे सङ्क्रमः स्यात् । वाजश्च म ऽइत्यध्याये च मे इतिपदद्वयस्यानुवाकान्तरेऽपि स-ङ्क्रमः ॥ अपराङ्गे ॥ ३०२ ॥ अपरस्याङ्गे अपराङ्ग-त्वेनैव पुनरावृत्ते संङ्क्रमः स्यात् । स्वाहा यज्ञमि-ति मन्त्रे स्वाहा द्यावापृथिवीभ्याꣳ स्वाहा वातादि-त्यनयोः स्वाहाशब्दयोः सङ्क्रमः स्यात् । रमे स्वा-हेत्यस्य न सङ्क्रमः । अपराङ्गत्वाभावात् ॥ अस्वर-विकारे ॥ ३०३ ॥ स्वरभिन्नत्वाभावे सङ्क्रमः स्या-त् । सुत्क्षा चासि प्रथमस्याप्यसिशब्दस्याद्युदा-

त्त्वात् । शिवा चासीत्यस्यानुदात्तत्वान्न सङ्क्रमः ॥ अलिङ्गविकारे ॥ ३०४ ॥ लिङ्गभिन्नत्वाभावे सङ्क्रमः स्यात् । भद्रद्रो न ऽइति मन्त्रे भद्रद्रशब्दस्य भिन्नलिङ्गत्वान्न सङ्क्रमः । अग्नेऽभीगोऽसीत्यनुवाके नपुंसकस्य सृतशब्दस्य सङ्क्रमः । व्रातः । सृतः । गर्भाः । सृताः । दिशः । सृताः । इत्येतेषु पुंल्लिङ्गत्वस्त्रीलिङ्गत्वान्न सङ्क्रमः । सन्ते पयाᳬसीति मन्त्रे प्रथमस्य सम्शब्दस्य नपुंसकविषयत्वाद्द्वितीयस्य पुंल्लिङ्गविषयत्वान्न सङ्क्रमः ॥ असमाने ॥ ३०५ ॥ असमाने विषये पुनरावृत्ते सङ्क्रमः स्यात् । आयुर्य्यज्ञेनेत्यत्रायुरादेर्य्यज्ञक्लृप्तेरसमानत्वात्सङ्क्रमः । यज्ञस्य तु यज्ञक्लृप्तेः समानविषयत्वान्न सङ्क्रमः ॥ संहितायाञ्च ॥ ३०६ ॥ आर्ष्यां चसंहितायां पुनरावृत्तौ सङ्क्रमः स्यात् । हिरण्यगर्भऽइत्येषः । तम्प्रत्नथेत्यादिप्रतीकपठितेषु सङ्क्रमः कार्यः । एषां मन्त्राणां ब्रह्मयज्ञादौ पठनं कार्यमिति केचित् । नेत्यपरे ॥ अवसानार्थम्पुनर्ग्रहणम् ॥ ३०७ ॥ समाप्तिद्योतनार्थं पुनरुच्चारणं स्यात् । आकूत्यै प्रयुजे इतिमन्त्रे द्वितीयादिस्वाहाकारस्य सङ्क्रमे पूष्णेऽग्नये स्वाहेत्यत्र न सङ्क्रमः ॥ अधिकारार्थम् ॥ ३०८ ॥ पदस्याधिककार्यज्ञापनार्थं च पुनरुच्चारणं स्यात् । व्राजस्येति

मन्त्रे च मे इत्यनयोः सङ्क्रमेऽपि स्वरिति स्वः । च मे इत्यत्र रिफितत्वज्ञापनार्थं न सङ्क्रमः ॥ उत्सर्गश्च ॥ ३०६ ॥ पूर्वोक्तस्य परित्यागोऽपि क्वचित्स्यात् । व्यवस्थितविषयोऽयम् । च शब्दोऽप्यर्थे । "द्विपदैकपदानीत्यनेनोक्तः सङ्क्रमः । तदेवाग्निरिति मन्त्रे न भवति ।" संहितायां चेत्यनेन विहितः सङ्क्रमः । लोकत्ताऽइन्द्रमित्यत्र न भवति । उक्तञ्च । पुनरुक्तानि लुप्यन्ते पदानीत्याह शाकलः ॥ अलोप इति गार्ग्यस्य काण्वस्यार्थवशादिति ॥ अत्र सम्प्रदायानुसारेण निर्णयः ॥ इति पदलक्षणम् ॥ अथ क्रमलक्षणम् । क्रमः स्मृतिप्रयोजनः ॥ ३१० ॥ संहितायाः पदानां च स्मृतिः स्मरणं प्रयोजनमस्य सः । संहिताया अवसाननिर्णयस्चेत्यादि । एवं प्रयोजनमुक्त्वा तल्लक्षणमाह । क्रमइत्यधिकारः । अध्यायपरिसमाप्तेः ॥ द्वे द्वे पदे सन्दधात्युत्तरेणोत्तरमावसानादृष्टक्तवर्जम् ॥ ३११ ॥ एतदुत्तरमवसानपर्यन्तं द्वे द्वे पदे संहितया उच्चारयति स क्रमः स्यात् । इषे त्वा । त्वोर्ज्जे । एवं पाहीति पर्यन्तं यत्र सङ्क्रमस्तत्र गलत्पदानि त्यक्त्वाऽग्रिमैः पदैः सन्धानं कर्त्तव्यम् । सङ्क्रमे सन्धिशास्त्रस्याचार्य्येणाभिहितत्त्वात् । युनक्ति सः । सकस्मै ॥ सङ्क्रमे च वैष्णवान् ॥ ३१२ ॥

वैष्णवानयं नकारः स्वरे परे न यकारमापद्यते सङ्-
क्रमे चेत् । रक्षोहणो व इति यजुषि वैष्णवानव ।
अव नयामि । अत्र चाकारोपधत्त्वात् यकारः प्राप्तः ॥
सङ्क्रमे च सर्वत्र ॥ ३१३ ॥ यजुष्षु ऋक्षु च ए-
दोद्भ्यां परोऽकारः पूर्वमापद्यते । प्राणश्च मइति
यजुषि प्राणोऽपानः । यद्ग्रामे इति मन्त्रे शूद्रेऽर्य्ये ।
कन्याऽइवेति ऋचि यज्ञोऽभि इत्यादि भवति । अ-
ष्टक्षवर्जं किम् । उदुत्त्वा । ऊर्ज्जमावद । अत्र पदद्व-
ये न विरामः । एतद्विषयक्रमलक्षणमाह ॥ अष्टक्ष-
मध्यानि त्रीणि स त्रिक्रमः ॥ ३१४ ॥ पूर्वस्मात्प-
दादष्टक्षं मध्ये उच्चार्य्य तदुत्तरे विरामः । एवं त्री
णि संहितया उच्चारयति स त्रिक्रमः स्यात् । उदुत्य-
म् । सोमेनातनच्मि ॥ पुनराकारेणोत्तरम् ॥ ३१५ ॥
एवं त्रीणि पदान्युच्चार्य पुनराकारेण संहितं तृतीय-
पदमुच्चारणीयं स्यात् । ऊर्ज्जमावद । आवद । वद त्त्व-
या ॥ मोषूणा भीषुणो च ॥ ३१६ ॥ मो षूणः । अभी-
षुणः । इमौ च त्रिक्रमौ स्याताम् ॥ चत्त्वार्य्यष्टक्षपू-
र्व्वे नकारपरे सौ ॥ ३१७ ॥ अष्टक्षपूर्वे नकारपरे
सुइतिपदे सति चत्वारि संहितया उच्चारयितव्यानि
स चतुष्क्रमइतिशेषः । ऊर्ध्वऽऊषुणः । एतादृशा-
सऽऊषुणः । गोमदूषुणासत्या ॥ पुनः सुपदेनोत्तर-

म् ॥ ३१८ ॥ एवं त्रीणि वा चत्वारि पदानि उच्चार्य पुनः सुपदेनान्त्यमुच्चारणीयं स्यात् । अभीषुणः । सुनः । नः । सखीनाम् ॥ पूर्वस्योत्तरसंहितस्य स्थितोपस्थितमवगृह्यस्य ॥ ३१९ ॥ उत्तरेण संहितस्याव-ग्रहवतः पूर्वपदस्य स्थितोपस्थितं कर्त्तव्यम् । त्वा स-मिद्भिः । समिद्भिरङ्गिरः । इति पूर्वमुच्चार्य । समि-द्भिरिति समित् । भिः । इति पठनीयं पूर्वस्योत्तरस-ꣳहितस्येत्य "वसाने चेति" यावदनुवर्त्तते ॥ अन्तःप-ददीर्घीभावे ॥ मामहन्तामदितिः । ममहन्तामिति ममहन्ताम् । आयुनगिन्द्रः । अयुनगित्ययुनक् ॥ वि-नामे ॥ ३२० ॥ सुषाव । सोमम् । सुसावेति सुसा-व ॥ प्रगृह्ये ॥ ३२१ ॥ इन्द्रवायूऽइमे । इन्द्रवायूऽइती-न्द्र । वायू । विष्णवेते । विष्णोऽइति । उदुत्यम् । ऊँ-ऽइत्यूँ । मोषुणः । मोऽइति मो । सुनः । ऊर्द्ध्वऽऊषु-णः । ऊँऽइत्यूँ । सुनः ॥ रिफितेऽनिरुक्ते ॥ ३२२ ॥ अ-न्तस्ते । अन्तरित्यन्तः । प्रातः सोमम् । प्रातरिति प्रा-तः ॥ अवसाने च ॥ ३२३ ॥ अर्द्धर्चादेः समाप्तौ विद्यमा-नस्य स्थितोपस्थितं स्यात् । पशून्पाहि । पाहीति पाहि । हव्यꣳ रक्ष । रक्षेति रक्ष ॥ भुवनमाविवेशा ३ । आ-विवेशा ३ ॥ विवेशा३इति विवेशा३ । अत्र "प्लुतमि-ता"विति प्रकृतिभावः ॥ यथा समाम्नातङ्क्रमावसान-

ठं॰ सङ्क्रमेषु ॥ ३२४ ॥ सङ्क्रमेषु पूर्वोक्तेषु यथासमाम्नातं क्रमशास्त्रानुसारेणावसानं स्यात् । विश्वधाः परमेण । द्वार्षीञ्छतधारम् । अत्र नावसानम् । ध्रुवेषु धर्म्मणा । धर्म्मणेति धर्म्मणा । वशाँ२ ॥ऽअनु । अन्विवत्यनु । अत्रावसानं भवति । सङ्क्रमेष्वित्युपलक्षणम् । अन्यत्रापि यथासमाम्नातमेव । अधुक्षः सा, साविश्वायुः । विश्वधायाऽइन्द्रस्य । अत्र नावसानम् । हव्यठं॰ रक्ष । रक्षेति रक्ष । यच्छन्ताम्पञ्च । पञ्चेति पञ्च । अत्रावसानम् । असन्देहार्थं प्रसङ्गात्क्रमसन्धानानि प्रदर्श्यन्ते । विश्वधाः परमेण । द्वार्षीञ्छतधारम् । सहस्रधारन्देवः । अधुक्षः सा । विश्वधायाऽइन्द्रस्य । राद्धतामिदम् । एमिकः । तस्मै कर्म्मणे । वाम्प्रत्युष्टम् । अरातयऽउरु । एमि धूः । धूर्व्वामो देवानाम् । देवहूतममहुतम् । हविर्द्धानँविष्णुः । हस्ताभ्यामग्नये । गृह्णामि भूताय । रश्मिभिर्द्दैवीः । देवयुवँय्युष्माः । स्वाग्नये । अग्नीषोमाभ्यान्दैव्याय । वेत्त्वह्निः । वेत्त्वग्निः । शमीष्व हविष्कृत् । इहि कुक्कुटः । वह दृंहस्व । वधायाग्ने । अन्तरिक्षन्धर्त्रम् । दिवँविश्वाभ्यः । केतु धान्यम् । अध्यानाय दीर्घाम् । रसेन रेवतीः । पृच्यन्ताञ्जनयत्यै । वधः पृथिवि । मोगप । वज्राः

समररो । स्कन्नृगायत्त्रेण । जागतेन सुम्ना । मा-
उत्तर्म्यं निघ्निता । माउत्तर्म्यं द्विरयै । पश्चश्वामभ्यरग्ने: । य्-
जुषेयजुषे सवितु: । त्वा तेज: ॥ ४२ ॥ इति द्विचत्त्वा-
रिंशत्क्रमसन्धानानि प्रथमाध्याये ॥ १ ॥ पतये गन्ध-
र्व्वं: । ईडितऽइन्द्रस्य । दक्षिणो मित्त्रावरुणौ । अ-
भिशस्त्यै सवितु: । ध्रुवा ध्रुवा । माऽिर्म नम: । स-
पत्नामस्माकम् । अश्नन्नाम्भ्येतम् । ब्रह्मणा तेन । ऊ-
ह्यामभ्यग्नीषोमौ । ऊह्यामीन्द्राग्न्योरिन्द्राग्नी । इ-
न्द्राग्नी व्वसुभ्य: । अवतांव्यन्तु । मरुद्भिरिन्द्र: ।
तस्मै पोषाय । व्वर्त्तेऽग्ने । इमाऽअचारिषम् । व्वे-
दिषदो ये ॥ १९ ॥ इत्येकोनविंशतिर्द्द्वितीयाध्या-
ये ॥ २ ॥ उषसा सूर्य्य: । गृहपते पुरीष्य: । पति-
वेदनमित: ॥ ३ ॥ इतित्त्रीणि तृतीये ॥ ३ ॥ चतुर्थे क्र-
मसन्धानाभाव: ॥ ४ ॥ पुरूरवा मन्थामि । रज:श्र-
या हरिश्रया । देववीतये सिह्ं०हि । ध्रुवो व्वैश्वव-
म् । ध्रुवऽऐन्द्रम् । हव्यवाहन: स्वात्त्र: ॥ अभूद्दया-
थायथम् ॥ इतिसप्त पञ्चमे ॥ ५ ॥ षष्ठेन सन्ति ॥ मादय-
स्वोदानाय । भूर्म्महेन्द्राय । इति द्द्वे सप्तमे । ७ ।
अष्टमे क्रमसन्धानाभाव: ॥ इन्द्रस्य सत्यप्रसव: । इन्द्रं-
व्वाजजित: । इति द्द्वे नवमे ॥ ९ ॥ दशमे क्रमसन्धा-
नाभाव: ॥ १० ॥ जागतेन हस्ते । हिरण्ययीमातुष्टु

मेन । इति द्वे एकादशे ॥ ११ ॥ परिचिल्लोक-म् । १ । इत्येकं द्वादशे ॥ १२ ॥ दिशामि साहस्त्र-म् । गयथमूर्द्धायुम् । उष्णमजः । शरभन्त्वम् । इति चत्वारि त्रयोदशे ॥ अन्तरिक्षँव्वायुः ॥ वायूराज्ञी । बृहती नभः । इति त्रीणि चतुर्द्दशे ॥ १४ ॥ अग्ने-देवः । रथेचित्रो मेनका । असमरथः प्रम्लोच-न्ती । अरिष्टनेमिर्व्विश्वाची । सुषेणऽउर्व्वशी । शै-शिरौ परमेष्ठी । दिवः सूर्य्यः । दिवन्ध्रुवे । इत्यष्टौ पञ्चदशे । १५ । षोडशसप्तदशयोर्न्न सन्ति ॥ १६ । १७ स्तोमः । रथन्तरँव्वेट् । १८ । इति द्वे अष्टाद-शे । १९ । एकोनविंशतिमेऽभावः । २० । व्वायु-र्ज्योग्यत् । स्वप्ने सूर्य्यः । शूद्रेऽर्य्ये । आपोऽयच्चि । इति चत्वारि विंशतिमे । २१ । एकविंशतिमेऽभा-वः ॥ २१ ॥ प्राणाय यत्ते । इति द्वे द्वाविंशे । २२ । चतुष्पद्रश्मिश्चन्द्रमाः । चन्द्रमा रात्रौ । व्वायुः सूर्य्यः । इति त्रीणि त्रयोविंशे । २३ । चतुर्व्विंशतिपञ्चविं-शतिषड्विंशतिसप्तविंशत्यध्यायेषु क्रमसन्धानाभा-वः । २४ । २५ । २६ । २७ ॥ शुचिर्मुष्मिन्स्वाहा । देवी त्रिष्टुभा । इति द्वे अष्टाविंशे । २८ ॥ ऊ-नत्रिंशत्त्रिंशदेकत्रिंशद्द्वात्रिंशत्त्रयस्त्रिंशच्चतुस्त्रिंशत्प-ञ्चत्रिंशत्स्वध्यायेषु क्रमसन्धानाभावः । २९ । ३० ।

। ३१ । ३२ । ३३ । ३४ । ३५ ॥ ऊतिभिः कया । ईमहे । इति द्वे षट्त्रिंशे । ३६ । पाहि म-धु । स्वाहा रात्रिः । इति द्वे सप्तत्रिंशे ॥ ३७ । सर-स्वत्यसौ । इत्येकमष्टत्रिंशे । ३८ । एकोनचत्वारिंशे क्रमसन्धानाभावः । ३९ । अविद्वद्याँव्विद्वद्यायाम् । ओम् ३ क्रतो । स्मर क्लिबे । क्लिबे कृतम् ॥ ४० ॥ इति चत्वारि चत्वारिंशे । ४० । इति पञ्चदशा-धिकैकशतं क्रमसन्धानानि । ११५ । एभ्योऽन्यत्र संहितावसानानुसारेण पाराशरीयचपलानुसारेण च निर्णयः कर्त्तव्यः । इति क्रमसन्धानानि समाप्ता-नि ॥ अथोष्मऋकारोपरितनरेफोच्चारणविषयो व्या-ख्यायते । उक्तं च प्रतिज्ञासूत्रे । अथापरान्तस्थस्या-युक्तान्यहलःसंयुक्तोष्मऋकारैरेकारसहितोच्चारणमे-वं तृतीयान्तस्थस्य क्वचित् । अस्यार्थः । अपरान्त-स्थस्य रेफस्य अन्यहला असंयुक्तस्य ऊष्मभिर्ऋकारेण संयुक्तस्य एकारसहितं रे इत्युच्चारणं कर्त्तव्यमिति शे-षः । उदाहरणम् । दर्शतमित्यत्र दरेशतमित्ययं पाठो न रेफसहितः । एवमन्यत्र । व्वर्षो व्वर्षीयसि । वर्हिः । निर्ऋते । सकारोदाहरणे षकारोदाहरणमेव भव-ति । अयुक्तान्यहलइति किम् । व्वर्ष्ष्याय । १ अत्र माभूत् । संयुक्तस्येति किम् । ऊर्ज्जेत्त्वा । एवं संयुक्ता-

संयुक्तस्थले तृतीयान्तस्थस्य वकारस्य क्वचिल्लक्ष्यानुरो-धेन पूर्वोक्तमेकारसहितोच्चारणं कर्त्तव्यम् । क्वचि-दित्युदाहरणानि लत्वपरमितिज्योत्स्नाकारः । यथा शतवल्शाइत्यत्र वल्शेशाइत्युच्चारः । सहस्रवल्शाः । उपवल्हामसि । अत्रास्मिन्सूत्रे ऊष्मऋकारोपरित-नरेफस्य प्राक् एकारसहितोच्चारणं कर्त्तव्यमित्युक्तम् । तथा च प्रतिज्ञासूत्रभाष्ये अनन्तयाज्ञिकैर्माध्यंदिन-शिक्षाया वचनं गृहीतम् ॥ तदेवाह । शषसहा यत्र दृश्यन्ते रेफेणाक्रान्तमस्तकाः ॥ स्वरभक्तिं प्रयु-ञ्जीत सँय्योगे नैव कारयेत् । १ । अत्रोष्मणामेव ग्रहणं न ऋकारग्रहणम् । तथा च प्रातिशा-ख्ये । रलाट्टलवर्णाभ्यामूष्मणि स्वरोदये सर्व्वत्र । अस्यार्थः । रेफलकारौ ऋलृवर्णाभ्यां ऋलृसदृशश्रुति-भ्यां यथासंख्यं व्यवधीयेते । ऊष्मणि परभूते स्वरोद-ये स्वरपरे इत्यर्थः । सर्व्वत्र संहितायां पदे च । गा-र्हपत्यः । अत्र हकाररेफयोरन्तरापि स्वरभक्तिः स-ती रेफहकारयोः सँय्योगं न विहन्ति । एवमन्यत्रा-पि द्रष्टव्यम् । शतवल्शः । वल्हामसि । स्वरोदयइति किम् । स्तर्द्दंव्वर्ह्वैः । पार्श्वतः । दिवो वर्ष्मन् । अस्तु-भिर्ह्वादुनीः । अत्रापि ऋकारान्तग्रहणं नास्ति । केव-लोष्मणामेव ग्रहणम् । तथा च नवाङ्कसूत्रे । अह-

वशल्यूर्द्ध्वरेफस्य सैकारः प्राक्च । अस्यार्थः । पदाद्य-न्तमध्ये हलिवहीनस्य शलि ऊर्ध्वरेफस्य सैकारः प्रागु-च्चारः स्याच्छन्दसि । शल्इति शषसहा ज्ञेयाः । द-र्शतमिति नतु सोर्ध्वरेफोच्चारः । व्हार्षीत । षकार-स्योदाहरणमेव सकारस्य कथं इण्कवर्गाभ्यां परस्य सस्य मूर्द्धन्यइति कृत्वा रेफस्त्विणमध्ये वर्त्तते तर्हि रेफात्परो यः सकारः स मूर्द्धन्य इतिकृत्वोभयोरेकमे-वोदाहरणम् । बर्हिषे त्वा । शतवल्शेत्यत्र वल्शेत्यु-च्चारः । एवमन्यत्रापि । ऋऌवर्णयोर्मिथः सावर्ण्या-ऌकारस्यापि प्राक्सैकारोच्चारः । न तु संयुक्तोच्चारः । अहलिति किम् । यज्ञपतिंव्हार्षीत् । शलीति किम् । ऊर्ज्जे त्वा । अत्रापि ऋकारग्रहणाभावः । एतदर्थं के-शवीशिक्षायाम् । विहलशल्यूर्द्ध्वरेफो यः सैकारः प्रा-क्समुच्चरेत् । अत्रापि ऊष्मणामेव ग्रहणमस्ति । त-था च लघुमाध्यन्दिनीयशिक्षायाम् । रेफो रेकारमा-प्नोति शषहेषु परेषु च ॥ ददर्श वर्षो अर्हाच्च सँय्योगं नैव कारयेत् । १ । वर्ष्यन्वर्ष्यायान्तर्हदा चारेयं प्रत्युदा-हृतिः । लकारोऽपि च सावर्ण्यादेकारसहितो भवे-त् । २ । शतवल्शा वल्हामसि तत्र तावदुदाहृतिः । अत्रापि ऋकारग्रहणं नास्ति । तथा च याज्ञवल्क्य-शिक्षायाम् । रलाभ्यां परऊष्माणो यत्र स्युः स्वरितोर-

या: ॥ स्वरभक्तिरसौ ज्ञेया पूर्व्वमाक्रम्य पठ्यते । ३ । स्वरभक्तिं प्रयुञ्जानस्त्रीन्दोषान्परिवर्जयेत् । इकारं चाप्युकारंच ग्रस्तदोषं तथैव च । ४ । उभयोर्मध्ये हि एकार: सैव स्वरभक्ति: । अत्रापि ऋकारग्रहणाभाव: । अमरीशिक्षाऽप्येतदर्थे । रकारोऽथ लकारो वा यत्रोष्मणि स्वरोदये ॥ स्वरभक्तिर्भवेत्तत्र पूर्व्वमाक्रम्य पठ्यते ॥ ५ ॥ ऊष्मणां स्वरभक्तिस्तु द्विर्भावं बाधते यथा । वर्षा वर्षीयसि व्हार्षीच्छतवल्शोऽपि सिध्यति । ६ । ऊष्मणामुपरिष्टस्तु रेफो याति रेवर्णताम् । रेफत्वं पुनरायाति यद्यूष्माणोऽन्यसँय्युता: । ७ । अत्रापि ऋकारग्रहणाभाव: । अत्र सिद्धान्त: । रेकारोच्चारणे भगवता कात्यायनेन प्रातिशाख्यसूत्रे ऊष्मणामेव ग्रहणं कृतम् । तथा च याज्ञवल्क्यमाध्यन्दिनादय: शिक्षाकर्त्तारऊष्माणामेव ग्रहणं कुर्व्वन्ति । एकस्मिन्नेव प्रतिज्ञासूत्रे ऋकारोष्मणां ग्रहणमस्ति। अतो वैदिका विकल्प इत्याहु: । तथा च कात्यायनेन प्रातिशाख्यसूत्रेऽप्यादृतं याज्ञवल्क्यमाध्यन्दिनादिभि: शिक्षासु च गृहीतं अनादिसम्प्रदायागतं यन्मतं तत्सर्व्वैर्वैदिकैर्ग्राह्यमिति स्पष्टं प्रतिभातीत्यलमतिप्रसङ्गेन । अत्र ऋकारोच्चारणे विशेष: । तथा च प्रतिज्ञासूत्रे "ऋकारस्य तु सँय्युक्तासँय्युक्तस्याविशेषेण

सर्व्वत्रैवम्” । अस्यार्थः । पदान्तमध्येषु संय्युक्तासंयुक्त-
स्य ऋवर्णस्य रेकारः स्यात् । सर्वत्र संहितायां पदे च ।
यथा कृष्णोऽसीत्यत्र क्रेष्णोसीत्युच्चारः । ऋत्वियो य-
तः । अत्र रेत्विय इत्युच्चारः । एवं “ऋलृवर्णयोर्मिथः
सावर्ण्यं वाच्यमिति” वार्त्तिकेन लृकारस्यापि ले इत्यु-
च्चारः । कॢप्तमित्यत्र क्लेप्तमित्युच्चारः । एतद-
र्थे केशवीशिक्षा । ऋकारस्य हलियुग्युक्च रैकारश्छन्द-
सि स्मृतः । इति ऋकारोच्चारणे विशेषः ॥ अथ
जकारोच्चारणविषयः । तथा च प्रतिज्ञासूत्रे ।
“अथान्तस्थानामाद्यस्य पदादिस्थस्यान्यहलसंय्युक्तासं-
य्युक्तस्यापि रेफोष्मान्त्याभ्यामृकारेण च विशेषेणादि-
मध्यावसानेषूच्चारणे जकारोच्चारणं द्विर्भावेऽप्येव-
म्” ॥ अस्यार्थः । अन्तस्थानामाद्यस्य यकारस्य पदादौ
विद्यमानस्य अन्यहला अन्यव्यञ्जनेन असंयुक्तस्योच्चा-
रणे जकारोच्चारणं स्यात् । रेफऊष्मणामन्त्यो ह-
कारश्च आभ्यां युक्तस्यापि अविशेषेणादिमध्यावसाने-
षु पदस्य जकारोच्चारणं स्यात् । ऋकारेण युक्तस्य अ-
विशेषेण अन्यहला संयुक्तस्य असंय्युक्तस्य वा आदिम-
ध्यान्तेषु जकारोच्चारणम् । क्रमेणोदाहरणानि । य-
न्ते । युञ्जते । घृताचीर्य्यन्तु हर्य्यत । सूर्य्यः । कण्ह्यद्-
ध्वरम् । प्रवाह्याय । सदोऽस्यृतस्य । व्यृद्धौ । पदादि-

स्येति किम् । अयजन्त । अन्यहलीत्यादिकिम् । अस्मिन्न्यज्ञे । एवं पदादिमध्यान्तेषु यकारद्विर्भावे द्वित्वे सति ज्ञेयम् नृपाय्यम् । धाय्या रूपम् । तँय्यज्ञम् । जराय्वसि । अत्र स्वरात्सँय्योगादेरिति द्वित्वम् । तथा च याज्ञवल्क्यः । पादादौ च पदादौ च सँय्योगावग्रहेषु च ॥ जः शब्द इति विज्ञेयो योऽन्यः स य इति स्मृतः ॥ युक्तेन मनसा तद्वत्तत्त्वायामि तथा परम् ॥ अनूकाशेन बाह्यश्च योगे योगे निदर्शनम् ॥ उपसर्गपरो यस्तु पदादिरपि दृश्यते ॥ ईषत्स्पृष्टो यथा वियत्पदच्छेदात्परं भवेत् ॥ तथा च कात्यायनशिक्षायाम् । आद्यान्तस्थस्य जोच्चारः पदादौ पठितस्य च ॥ उपसर्गपरो यस्तु तस्य छन्दसि नेष्यते ॥ पदस्याद्यन्तमध्ये स्यादृहैः सँय्युतस्य च ॥ द्विर्भावेऽप्येवमेव स्यादिति कात्यायनश्रुतिः ॥ उपसर्गात्परस्य न जकारोच्चारणम् । यथा अभियज्ञम् । द्विर्भावेऽयन्निषेधो न । सँय्यौमि । अतएव नवाङ्कसूत्रे केशवेन सम्पूर्वयोस्त्वित्युक्तम् । यज्ञञ्च मानुषाणां तथा च योनान्विन्द्र, इत्यत्र पादादिस्थत्वात् । उपसर्गात्परत्वेऽपि जकारोच्चारः । उप यज्ञर्ठ० हविरित्यत्र पादादिस्थत्वाभावाद्यकारत्वमेव । पदादित्वेन सिद्धे पादादौ पुनर्ज्जकारोच्चारणविधानम् । पादादौ च पदादौ चेति याज्ञवल्क्योक्तेः ॥ अतो

ज्योत्स्नाकृता स्तुतीरुप यज्ञमेव गृहीतम् । अतए-
वामरेशीशिक्षायाम् । अनुयोजान्विन्द्र ते तु उपय-
ज्ञं विना तथा ॥ अथो पूर्वकस्य न । उक्तं च । अथ
मासनशब्देभ्यो विभाषाऽऽम्रेडिते यवौ । यथा । अथो
ये । मा यज्ञम् । स योजते । मनो न येषु अत्र य-
कारोच्चारणे विकल्पः ॥ विकल्पविषये सम्प्रदायए-
व शरणम् । इति नकारोच्चारणविषयः । अथ वका-
रोच्चारणविषयः । तथा च प्रतिज्ञासूत्रे । अथान्त्यस्था-
न्तस्थानां पदादिमध्यान्तस्थस्य त्रिविधं गुरुमध्यमल-
घुवृत्तिभिरुच्चारणम् । अन्तस्थानामन्त्यस्य वकारस्य
अपदादौ मध्ये अन्ते च विद्यमानस्य यथाक्रमं गुरुम-
ध्यमलघुवृत्त्या चोच्चारणम् । यथा । वायवः । वा-
यष्टतस्पते । तथा च याज्ञवल्क्यः । वकारस्त्रिविधः
प्रोक्तो गुरुर्लघुर्लघूतरः ॥ आदौ गुरुर्लघुर्मध्ये प-
दान्ते तु लघूतरः ॥ सन्धिजौ तु पदान्तीयावुपसर्गप-
रौ लघु ॥ अथ मासनशब्देभ्यो विभाषाऽऽम्रेडिते य-
वौ । ये ये पदादिस्थयकारविषये निषेधास्ते वकारे-
ऽपि ॥ यथा वयम् । तथा च माध्यन्दिनशिक्षायाम् ।
गुरुर्वकारो विज्ञेयः पदादौ पठितो भवेत् । विम्बा-
डुदाहृतिर्ज्ञेया सविताऽन्तर्लघुस्स्मृतः । पदान्ते वै लघु-
तरस्तव वायष्टतस्पते । उपसर्गपरो यस्तु स वकारो

लघुर्मतः । वो वां वा वै मन्त्रपाठे लघवो गुरवः पदे ॥ तथा चामोघनन्दिन्यमरेशशिक्षयोः । त्वदर्थवाचिनौ वो वां वा वै यदि निपातजौ ॥ आदेशाश्च विकल्पार्थाई-षत्स्पृष्टा इति स्मृताः । देवो वः सविता या वां त्वातो वे-ति तथा न वै ॥ अत्रापि सम्पूर्वकस्य वकारस्य द्वित्वमे-व । यथा सँव्वाम् ॥ इति वकारोच्चारणविषयः ॥ अथ षकारोच्चारणविषयः । तथा च प्रतिज्ञासूत्रे । अथो मूर्द्धन्योष्मणोऽसँय्युक्तस्य टुम्हते सँय्युक्तस्य च खकारो-च्चारणम् । अथान्तस्थकथनानन्तरं मूर्द्धस्थानस्योष्मणः षकारस्य असँय्युक्तस्य टवर्गं विना अन्यहला संयुक्तस्य च खकारोच्चारणम् । इषे त्वा । त्रिभर्ष्यस्तवे । शु-ष्क्स्याय । टुम्हते क्षिम् । प्रत्त्युष्टम् । श्रेष्ठतमाय । कृष्णः । चकारे षकारवत् । अवयवसम्भावनेऽपि मातृकादौ गणनात् । एकवर्णत्वात् । अवयविभागा-भावेन खकारोच्चारणम्भवति । ककारयोगे खकारो-च्चारणाभावइति नियमस्तु न शुष्कमित्यादौ विपरी-तसँय्योगे ककारयोगेऽपि खकारोच्चारणं भवति । तथा च कात्यायनशिक्षायाम् । असँय्युक्तस्य मूर्द्धन्यो-ष्मणः खोच्चारणम्मतम् ॥ टुम्हते सँय्युक्तस्यापि कस्य योगे ष एव हि ॥ छन्दसीत्येव खोच्चारो लोके प्रकृ-तिरिष्यते ॥ इति षकारोच्चारणविषयः । इमे सर्वे

नियमा ब्रह्मयज्ञादौ अर्थविचारे तु प्रकृत्या ये वर्णा-
स्त एव न त्वर्थभेदः ॥ परसवर्णप्रकृत्या चान्यत्र ।
शषसहेभ्योऽन्यत्र तु मकारस्य परपञ्चमविधानात्स्प-
ष्टमुच्चारणे प्राप्ते परस्य वर्णस्य सवर्णो यः पञ्चम-
स्तस्येत्साद्दृश्येनोच्चारणं स्यात् । तज्ज्ञानम् । इत्यादौ
वाजाञ्जयतु इत्यादिवत् अकारादेर्न स्पष्टमुच्चारणम् ।
विसर्गेष्वीषद्विरामः ॥ विसर्गेषु नान्तरीयकार्द्धमात्रा-
कालापेक्षया किञ्चिदधिककालो विरामः । अवसानं
कृत्वाऽग्रिमवर्णोच्चारणं कार्यम् । वसोः पवित्रम् ।
याः फलिनीः ॥ पदाद्यस्य संयुक्ताकारस्येषद्दीर्घता
च भवति ॥ पदस्यादिभूतस्य हल्संयुक्तस्य अकारस्य
ह्रस्वस्येषद्दीर्घता च एकमात्राकालापेक्षया किञ्चि-
दधिककालोच्चारणं स्यात् । वसोः पवित्रम् । पदा-
दिस्थस्येति किम् । वायवः । हल्संयुक्तस्य किम् ।
अनुनः । अकारस्येति किम् । ध्रुवाः ॥ अथ जटा-
द्यष्टविकृतीनां लक्षणान्युच्यन्ते । तत्र विकृतीनां पा-
ठे फलं पङ्क्तिपावनत्वम् । जटादिविकृतीनां ये पा-
रायणपरायणा ॥ महात्मानो द्विजश्रेष्ठास्ते ज्ञेयाः प-
ङ्क्तिपावना इत्यादित्यपुराणात् । अन्यान्यपि वि-
ष्णुलोकानि फलानि वाराहपुराणपाराशरस्मृत्यादि-
षु । तासान्नामानि प्रदर्श्यन्ते । जटा माला शिखा रे-

खा ध्वजो दण्डो रथो घनः ॥ अष्टौ विकृतयः प्रोक्ताः
क्रमपूर्वा महर्षिभिः । तत्र प्रथमत्वाज्जटालक्षणम् ।
क्रमं यथोक्तं प्रब्रूयाद्व्युत्क्रमेण क्रमेण च ॥ सलक्षणं
सर्वसन्धौ जटा सा प्रोच्यते बुधैः ॥ अस्यार्थः । क्रमं
यथोक्तं द्वित्रिचतुष्क्रमात्मकं पुनश्च तमेव वैपरीत्येन पु-
नश्च क्रमेण एवं त्रिवारं सर्वसन्धिषु लक्षणयुक्तं पठेत्सा
जटा इति तत्त्वज्ञैरुच्यते । वायवस्थ स्थ वायवो
वायवस्थ । इत्यादि । अथ जटायां पठ्यमानान्क्रमा-
न्नामतो निर्दिशति । अनुक्रमश्चोत्क्रमश्च व्युत्क्रमोऽ-
भिक्रमस्तथा ॥ सङ्क्रमश्चेति पञ्चैते जटायां कथिताः
क्रमाः ॥ वायवस्थ । इत्यनुक्रमः । स्थस्थ । इत्युत्क्र-
मः । स्थवायवः । इतिव्युत्क्रमः । वायवो वायवः ।
इत्यभिक्रमः । इमे पञ्चक्रमा एव पृथक्पृथक् पठनेन
पञ्चसन्धिरिति वैदिकैः पठ्यते ॥ स्वापूर्वांशं पदद्वन्द्वं
स्वागर्भे त्रिचतुष्क्रमे ॥ पुनरुक्तमसन्देहार्थं जटात्वं
न चार्हति ॥ सु आ इति पदद्वयगर्भे त्रिक्रमे मोषूणः
सोमेनानज्मि इत्यादौ तथा चतुष्क्रमे गोमदूषुणा स-
त्या इत्यादौ सु आ पूर्वांशं पदद्वयं असन्देहार्थं द्विपद-
त्वभ्रमवारणाय सुनः आतनज्मि । इति पुनरुच्चा-
रितं जटाभावं नार्हति । असन्देहार्थमिति हेतुगर्भं
विशेषणम् । यथा उदुत्यमित्यादौ द्विपदत्वभ्रमवार-

णाय ऊँदृतयूँ । इति मध्यस्थस्य वेष्टनम् । तथा इदं न तु क्रमः । अतो जटा न कार्या ॥ अथ माला सा द्विविधा पुष्पमाला क्रममाला च । पुष्पमाला लक्षणमाह । मालामालेव पुष्पाणां पदानां ग्रन्थिनी हि सा ॥ आवर्त्तन्ते त्रयस्तस्यां क्रमव्युत्क्रमसङ्क्रमाः ॥ सुसमिद्धाय शोचिषे । शोचिषे सुसमिद्धाय । इत्यादि । अथ क्रममाला । ब्रूयात्क्रमविपर्यासावर्द्धर्चस्यादितोऽन्ततः ॥ अन्तं चादिं नयेदेवं क्रममालेति गीयते ॥ अर्द्धर्चस्यादितः क्रमं अंततो विपर्यासं क्रमेण पठेत् । अनेन प्रकारेण क्रममन्तं नयेत् । विपर्यासमादिं प्रापयेत्सा क्रममालेति ऋर्षिभिरुच्यते । त्रिर्ठंशद्धाम । धीयतऽइति धीयते । धाम व्वि । धीयते पतङ्गाय । व्विराजति । पतङ्गाय व्वाक् । राजति व्वाक् । व्वाग्राजति । व्वाक्पतङ्गाय । राजति व्वि । पतङ्गाय धीयते । व्विधाम । धीयतऽइति धीयते । धाम त्रिर्ठंशत् । इत्यादि । अथ शिखा । पदोत्तरां जटामेव शिखामार्याः प्रचक्षते ॥ पूर्वोक्तां जटामेव अन्ते एकपदाधिकां शिखां विकृतिं मुनय आहुः । अन्तश्चरति चरत्यन्तरन्तश्चरति रोचना । इत्यादि ॥ अथ रेखा । क्रमाद्द्वित्रिचतुष्पञ्चपदक्रमसुदाहरेत् ॥ पृथक्पृथग्विपर्यस्य रेखामाहुः पुनः क्रमात् ॥ क्रमेण द्विपदत्रिपद-

चतुष्पदपञ्चपदक्रमानुक्त्वा प्रतिक्रमे पृथक्पृथक्विपर्या-
सेन पठित्वा पुनः क्रमं पठेत्तां विकृतिं रेखामाहुः ।
व्विद्माते । तेव्विद्म । विद्माते । तेऽअग्ने त्रे-
धा । त्रेधाऽग्ने ते । तेऽअग्ने । अग्ने त्रेधा । त्रेधा त्र-
याणि व्विद्मा ते । ते विद्म त्रेधा त्रयाणि । त्रयाणि
विद्म । विद्माते । ते धाम विभृता पुरुत्रा ।
पुरुत्रा व्विभृता धाम ते । ते धाम । धाम व्विभृता ।
विभृता पुरुत्रा । विभृतेति वि । भृता । पुरुत्रे-
ति पुरु । त्रा । विद्माते । ते विद्म । विद्माते ।
ते नाम परम् । परमन्नाम ते । ते नाम । नाम पर-
मम् । परमङ्गुहा यद्विद्म । विद्म यद्गुहा परमम् ।
परमङ्गुहा । गुहा यत् । यद्विद्म । विद्मा तमुत्सँ-
य्यतऽआजगन्थ । आजगन्थ यतऽउत्सन्तँव्विद्म । व्वि-
द्मा तम् । तमुत्सम् । उत्सँय्यतः । यतऽआजगन्थ
आजगन्थेत्या । जगन्थ ॥ अथ ध्वजः । ब्रूयादादेः क्र-
मं सम्यगन्तादुत्तारयेदिति ॥ वर्गे वा ऋचि वा यस्य
पठनं स ध्वजः स्मृतः ॥ वर्गे ऋचि वा आदेः क्रमं अ-
न्तपर्य्यन्तं ब्रूयात् । अन्तात्सम्यग्यथोक्तं क्रममेवोत्तार-
येत् । आदिपर्यन्तं पठेत् एवं यस्य पठनं स ध्वजना-
मा विकृतिः । विष्णोः कर्माणि । सखेति सखा ।
कर्माणि पश्यत । युज्यः सखा । पश्यत यतः । इन्द्र-

स्य युज्यः । यतो व्रतानि । पस्पशऽइति पस्पशे ।
व्रतानि पस्पशे । व्रतानि पस्पशे । पस्पशऽइ-
ति पस्पशे । यतो व्रतानि । इन्द्रस्य युज्यः ।
पश्यत यतः । युज्यः सखा । कर्म्माणि पश्यत ।
सखेति सखा । विष्णोः कर्म्माणि ॥ अथ दण्डः ।
क्रममुक्त्वा विपर्य्यस्य पुनश्च क्रममुत्तरम् ॥ अर्द्धर्ची-
देवमुक्तोऽयं क्रमदण्डोऽभिधीयते ॥ क्रममुक्त्वा अर्द्ध-
र्चान्तं । अर्द्धर्चादिपर्यन्तं पुनः पुनर्विपर्यस्य पुनः
क्रमं अर्द्धर्च्चसमाप्तिपर्य्यन्तं पठेत् एवमुक्तो विकृति-
विशेषो दण्ड इत्युच्यते ॥ यज्ञानः । नो यज्ञ । यज्ञा-
नः । नो मित्रावरुणा । मित्रावरुणा नो यज्ञ । यज्ञा-
नः । नो मित्रा वरुणा । मित्रावरुणा नो यज्ञ । यज्ञा-
नः । नो मित्रावरुणा । मित्रावरुणा यज्ञ । यज्ञ ।
मित्रावरुणा नो यज्ञ । यज्ञानः । नो मित्रावरुणा
यज्ञ । यज्ञा देवान् । अनेन प्रकारेण अर्द्धर्चसमाप्ति-
पर्य्यन्तं पठेत् ॥ अथ रथः ॥ समे ऋचौ गृहीत्वा
च रथवच्चलति क्रमः ॥ पादशोऽर्द्धर्च्चशो वाऽपि
सहोक्त्या दण्डवद्रथः ॥ ऋचि अर्द्धर्चि पादे वा क्रम-
विपर्यासौ दण्डवत्सहोक्तौ चेत्स विकृतिविशेषो रथ इ-
त्युच्यते । धानानाꣳ रूपम् । सक्तूनाꣳ रूपम् । रूपन्धाना-
नाम् । रूपꣳ सक्तूनाम् । धानानाꣳ रूपम् । सक्तूनाꣳ-

रूपम् । रूपङ्कुवलम् । रूपम्बदरम् । कुवलꣳ रूपन्धानानाम् । बदरꣳ रूपꣳ सक्तूनाम् । धानानाꣳ रूपम् । सक्तूनाꣳ रूपम् । रूपं कुवलम् । रूपम्बदरम् । कुवलम्परीवापस्य । बदरमुपवाकाः । परिवापस्य कुवलꣳ सक्तूनाम् । धानाꣳ रूपम् । सक्तूनाꣳ रूपम् । रूपङ्कुवलम् । रूपम्बदरम् । कुवलं परीवापस्य । बदरमुपवाकाः करम्भस्य । गोधूमाः परिवापस्य कुवलꣳ रूपन्धानानाम् । करम्भस्योपवाका बदरꣳ रूपꣳ सक्तूनाम् । धानानाꣳ रूपम् । सक्तूनाꣳ रूपम् । रूपं कुवलम् रूपम्बदरम् । कुवलं परीवापस्य । बदरमुपवाकाः । परीवापस्य गोधूमाः । उपवाकाः करम्भस्य । परिवापस्येति परि । वापस्य । उपवाका इत्युप । वाकाः । गोधूमा इति गोधूमाः । करम्भस्येति करम्भस्य । ज्योत्स्नायां प्रकारत्रयेण रथ उक्तः स तत्रैव द्रष्टव्यः । अथ घनः स द्विविधः[१] । अन्तारक्रमं पठेत्पूर्वमादिपर्यन्तमानयेत् ॥ आदिक्रमन्नयेदन्तं घनमाहुर्मनीषिणः ॥ अतिथिमित्यतिथिम् । बोधयतातिथिम् । घृतैर्बोधयत । दुवस्यत घृतैः । अग्निन्दुवस्यत । समिधाग्निम् । समिधेति सम् । इधा । अग्निन्दुवस्यत । दुवस्यत घृतैः ॥ घृतैर्बोधयत । बोधयता तिथिम् । अतिथिमित्यतिथिम् । इत्यादि ॥ अथ द्वितीयः । शिखामुक्ता

विपर्य्यस्य तत्पदानि पुनः पठेत् ॥ अयं घनइति प्रोक्त इत्यष्टौ विकृतीः पठेत् ॥ शिखां पूर्वोक्तामुच्चार्य्य विपर्यासेन तानि पदान्युच्चार्य पुनः क्रमेण तानि पदान्युच्चारयेत् । अयं घनइत्यृषिभिः प्रोक्तः । दस्रा युवाकवो युवाकवो दस्रा दस्रा युवाकवः सुताः सुता युवाकवो दस्रा दस्रा युवाकवः सुताः । इत्यादि । शेषं ज्योत्स्नादिषु ज्ञेयम् ॥ शाके द्व्यभ्राष्टभूमिते शुभे विक्रमवत्सरे ॥ माघे मासि सिते पक्षे प्रतिपज्ज्ञानुवासरे ॥ १ ॥ प्रातिशाख्यप्रदीपाख्या शिक्षेयं रचिता शुभा ॥ गोडशे इत्युपाह्वेन बालकृष्णेन धीमता ॥ २ ॥ श्रीसदाशिवपौत्रेण श्रीप्रभाकरशर्म्मणा ॥ कृपया मह्यमादत्ता मुद्रायन्त्रे प्रकाशिता ॥ ३ ॥ युगलप्राक्किशोरेण पाठकेनानुजेन च॥विश्वेश्वरस्य पुत्रेण श्रीव्यासोपाधिधारिणा ४ ॥ सरयूपारिणा सम्यग्वेदविद्यालयस्य च ॥ अध्यापकेन छात्राणां शीघ्रं सम्बोधनायच ॥ ५ ॥ शिक्षासङ्ग्रहमध्ये तु ह्येतस्याः सङ्ग्रहः कृतः ॥ एतदग्रे तु वेदस्य श्रीमाध्यन्दिनशाखिनः ॥ ६ ॥ परिभाषाख्यसूत्रं तु श्रीमद्रामस्य निर्मितम् ॥ तदग्रे सूत्रशेषस्य कारिका सुप्रकाशिका ॥ ७ ॥ अथ वेदपरिभाषासूत्रशिक्षां व्याख्यास्यामः ॥ इषे त्वा । १ । अनुवाकः । पदानि । ३५ ॥

शुठिघस्व: । १ । व्वसो: पवित्रम् । ३ । ४२ । घाढक्षाचा । २ । अग्ने व्व्रतपते । ७ । १०८ । जैभातङमी: । ३ । पवित्रे स्थ: । २ । ५४ । ङीखडाडी । घर्म्मोऽसि । ३ । ६३ । जीवतिढ: । १३ । धृष्टिरसि । २ । ४४ । वीचक्षड । २ । धिषणाऽसि । २ । ६६ । गूघागङि: । ७ । सँव्वपामि । डगेन चभि । २ । श्रादद्दे । ५ । १०२ । आभुठुधी: । ७ । अनिशितोऽसि । ३ । ५१ । ङजञञि: । ७ । ऋच: । ३१ । अनुवाका: । १० । पदानि । ६१४ ॥ कृष्णोऽसि । ६ । १२४ । ढीवादिप् । १२ । अग्ने व्वाजजित् । ३ । ६५ । चुढाचीपू: । १ । मयीदम् । ५ । १०भौघाभ्रयी: । ५ । अग्नीषोमयो: । ५ । १२२ । ठासाढुपू: । २ । अग्ने दब्धायो । ४ । ७८ । क्षोमटाङ: । ३ । सँव्वर्चसा । ४ । ८८ । जीवङतू: । ४ अग्नये कव्यवाहनाय । ६ । जोङूठडु: । १ । ऋच: । ३३ । पदानि । ६६८ ॥ समिधाग्निम् । ४ । ३६ । गूवाङछि: । ३ । भूर्भुव: । ४ । ५० घौडाजिचे । अग्निर्ज्ज्योति: । २ । ३७ । गेमगश: । १ । उपप्रयन्त: । २६ । ३६७ । ले । १४ । स्व: सुप्रजा: । ३ । ४२ । घाखिणाभ्ली । ४ । गृहामा । ३ । ५३ । डानीभ्राजा । २ । प्रघासि-

नः ॥ ५ । ७२ । छाभिढाङ्कुः । १ । पूर्णा द-र्वि । २ । ३३ । गिकङ्घः । १ । अत्यन्नमीमद-न्त । ६ । ६८ । चैघोचिणा । ४ । एषते । ७ । ८६ । भोमाफशे । ४ । ऋचः । ६२ । अनुवाकाः । १० । पदानि । ८ । ५६ ॥ एदम् । २ । चादिछाढी । ४ । इत्रसासि । ४ । ४५ । घुत्तजर्वः । ३ । आकूत्यै प्र-युजे । १२ । ३६ ॥ गूजगिखः । ३ । ऋक्सामयोः शिल्पे । २ । ४७ ॥ घेंटघीगुः । ५ । व्रतं कृणु-त । ६ । १३६ । डूत्स्युथुभूः । ५ । एषा ते । ५ । ६७ । छेथञटि । ४ । व्यस्व्यसि । ३ । ६३ । चिणाढूछाः । ३ । एष ते । २ । ५५ । ङुनडिडिः । ३ । शुक्र-त्वा । ४ । ८१ । जणुञिठी । २ । अदित्या-स्त्वा । ८ । १४० । डौशुनार्धं । ६ । ऋचः । ३७ । अनुवाकाः । १० । पदानि । ७४२ ॥ अग्नेस्तनूः । छीताञञ । २ । आपतये त्वा । ४ । १०८ । अै-रिनिदिः । ५ । तप्तायनी मे । २ । ४८ ॥ वैडघ-चे । ४ । इन्द्रघोषस्त्वा । ३ । ४८ । वैपाटछू । ४ । युञ्जते मनः । ८ । १५७ । णोभर्दशै । २ । नारि-रसि । ४ । ७४ । छीधिघिदै । ४ । यवोऽ-सि । ५ । ८१ । जफाठाडी । ८ । विभूर-सि । ४ । ७८ । छैछिवणच् । २ । ज्योतिर-

सि । ५ । १०४ । ञोवोडाने: । ७ । उरु विष्णो । २ । ५४ । ङीटिचटा । ऋच: । ४१ । अनुवाका: । १० । पदानि । ८०६ ॥ अग्नेर्णीरसि । ५ । ८८ । ञैवभ्रुठः । ५ । उपावीरसि । ४ । ८८ । जैमिजाठ । ४ । माह्निः । ६ । ११२ । टावायित्रौः । ३ । सन्ते । ३७१ । छभातटैः । ५ । समुद्रं गच्छ । २ । ५७ । ङनागिटा । ४ । हविष्मतीरिमाः । २ । ३५ । गुथीखगः । ३ । हृदे त्वा । ५ । ५० । नौसुटग् । ६ । रावाऽसि । ८११७ । थेसुणीभै । २ । ऋच: । ३५ । अनुवाका: । ८ । पदानि । ६५८ ॥ वाचस्पतये । ३ । ५९ । डोदजाङी । २ । उपयामगृहीतोऽसि । २ । ३० । खोटछिखाः । १ । आवाहो । २ । ४ । गौटछीछ । अयंवाम् । २ । ३३ । गिचघडा । या वाम् । १ । १३ । किञगङ । तम्प्रत्कुथा । ४ । ६१ । भ्रणीनतोः । ५ । अयंवेनः । ३ । ६६ । चूयाथटाः । ३ । ये देवासः । ३ । ५३ । ङिठङञा । २ । इन्द्राय त्वा । २ । २९ । खोगचछी । मूर्द्धानन्दिवः । २ । ४२ । घाठा ङणीः । १ । यस्ते । १ । २५ । घुजघघुः । १ । प्राणाय मे । ३ । ३५ । गुरुन्वघाः । ३ । मघवे त्वा । १ । १५ । कुखकाअः । ३ । इन्द्राग्नी

ऽआगतम् । १ । १३ । किगखाङ । आघ । २ । १४ । ओमासश्चर्षणीधृतः । २ । १० । औचकक । इत्थगुतामें । १ । ६ । ओकअगा । इन्द्रमरुत्त्वः । १ । २२ । खाघाखक । मरुत्त्वन्तम् । १ । १७ । केकगाङः । मरुतान्त्वा । १ । ३० । इङ्अअकः । १ । सजोषाऽइन्द्र । १ । १६ । कोचिघखा । मरुत्वाँ २ ॥ ऽइन्द्र । १ । २० । कौभाछाई । यूओयक्षा । १ । ९ । ओगाकाअ । उडच्युम् । ६ । १०२ । भालठीफेः । ३ । ऋचः । ४६ । अनुवाकाः । २५ । पदानि । ९८८ । आदित्येभ्यस्त्वा । ४ । ७० । चौतीचिजे । २ । वामसद्य । २ ३५ । शुटङाच । २ । सुशर्मासि । १ । ६ । ओगगआः । बृहस्पतिसुतस्य । २ । ५१ । ङणिआठेः । १ । हरिरसि । ३४५ । घुतिर्थघिः । ३ । समिन्द्र । ६ । १११ । टरैघानी । उरुटं०हि । ४ । ८७ । जैपिणिते । २ । एजतु दशमास्यः । ५ । ७१ । छभठथाः । १ । आतिष्ठ । १ । १८ । कैकाकाखः । १ । युद्वाहि । किखगख । इन्द्रमित् । १२ । काखकाङा । यस्मान्न । २ । ४३ । धिठपङचीः । १ । अग्ने पवस्व । १ । २३ । खिगकिङा । २ । अष्टश्वमस्य । १ । २३ । खिचाअघः । १ । आजिघ्र । २४९ । घचगगिः । १ । विनऽइन्द्र । १ १७ । केङाखक । वा

चस्पतिम् । ६ । १६ । कोङङ्गा । १ । विश्वक-
र्मन्‌हविषा । १ । १७ । केङाखङ । अग्नये
त्वा । ४ । ५२ । ङाजीअटै । इह रतिः । ३ । ६७ ।
चेतुच्छ्रणैः । परमेष्ठ्यभिधीतः । १० । १६५ । युञ्ज्यै
न्मौमौ । ऋचः । ५७ । अनुवाकाः । २२ । पदा-
नि । १०१६ ॥ देवसवितः । ४ । ७६ । छोधया-
क्षिण । २ । इन्द्रस्य वृष्णः । युङ्येदनीः । ३ । देव-
स्याहम् । ६ । १ । ६२ । ताभ्या भिञ्चौ । ४ । आप-
ये स्वाहा । ३ । ६८ । चैथजैछा । ४ । वाजस्येम-
म् । ८ । १२३ । ठिफीणिशुः । ५ । अग्निरेकाक्ष-
रेण । ४ । ७२ । छाभूरथू । एष ते । ४ । ६६ । चू-
न्माराधौः । १ । सविता त्वा । १ । ४३ । घिङघा-
ङ । ऋचः ३६ । अनुवाकाः । ८ । पदानि । ९२८ ॥
अपो देवाः । ४ । ५६ । ङूङमीङङः । १ । सोमस्य
त्विषिः । ५ । ८६ । जोषपिठी । ४ । कवेष्टा
दन्दशूकाः । ६ । १०७ । जेवटुवौ । ८ । सोमस्य
त्वा । ३ । ७८ । छैढीजठै । ४ । मित्रावरुणयो-
स्त्वा । ५ । ६२ । क्षादिनिढैं । ४ । स्योनाऽसि । ४ ।
चेवातक्ष । ४ । सवितृत्वा प्रसवितृत्वा । १ । २४ ।
खिगगाय । अश्विभ्यां पच्यस्व । ४ । ६५ । चु-
टाटठू । ऋचः । ३२ । अनुवाकाः । ९ । पदा-

नि । ५७८ ॥ युञ्जानः प्रथमम् । ९ । १३४ ॥ डी-
सिदारो । ६ । प्रतूर्त्तँ वाजिन् ॥ १५ । २१९ ॥ पो-
न्वोडथीर्म्यूः । १ । अङ्गिरस्वत्खनामि । १० । ४४ ।
टीच्चवेर्धलै । ४ । अपो देवीः । १२ । २०९ । नो-
न्द्रोशुन्र्यो । ६ । आपो हि । ११ । १५८ । शौन्वि-
नाह्नु । १२ । अदितिष्ट्वा । ४ । ७४ । चौपभ्रुजो । ८
आकूतिमग्निम् । १७ । २४० । वोर्स्वीन्त्रीम्यै । ४ ।
ऋचः । ७८ । अनुवाकाः । ७ । पदानि । ११७८-
दृशानो रुक्क्मः । १६ । ३९७ । वेह्वेवाड्वोर्व्यौः । ५ ।
टीश्वेर्धलै । ४ । अपो देवीः । १२ । २० । नो-
न्ध्वोशुन्र्यो । ६ । आवो हि । ११ । १५८ । शौन्वि-
नाङ्ध्नु । १२ । अदितिष्ट्वा । ४ । ७४ । च्छौपभ्रु-
जो । ८ । आकूतिमग्निम् । १७ । २४० । वौर्स्वी
न्त्रीम्यै । ४ । ऋचः । ७८ । अनुवाकाः । ७ । पदा-
नि । ११२८ ॥ दृशानो रुक्क्मः । १६ । २९७ । येह्वे-
वाड्वोर्व्यौः । ५ । दिवस्पारि । १० । १८२ । दान्यू-
लुर्य्यैः । १ । उदुत्त्वा । १ । १७२ । थाह्मरुफः । ७ ।
अपेत । १५ । २३३ । विर्स्रिह्नो स्वी । असुन्वन्त-
मयजमानम् । ११ । २१७ । याऽओषधीः । २७ ।
३५१ । स्यच्यौम्ती । १२ । मा मा । १५ । १२२ ।
प्रश्रोह्वर्यैः । ११ ऋचः । १०८ । अनुवाकाः । प-

दानि । १६७३ । मयि गृह्णामि । १३ । २३२ । वा-
न्धमुवुन्मौः । ५ । ध्रुवाऽसि । ११ । १७२ । यावाले-
र्तः । ६ । मधु वाताः । ९ । १२५ । दुग्धौवड । ८ ।
सम्यक्स्रवन्ति । ८ । १२४ । ठीषीऽकृ । ४ । इम-
म्मा । ६ । १२ । झाती जएसु । २ । अपान्वा । १ । २० ।
कौदूंककः । ९ । अयम्पुरः । ५ । १०९ । षोर्म्नस्पर्कम् ।
ऋचः । ३ । अनुवाकाः । ६ । पदानि । ८०७४ ॥ ध्रुव-
क्षितिर्ध्रुवयोनिः । ५ । ९२ । झार्थटिताः । ५ । स-
जूर्ऋतुभिः । २ । ३८ । गैदझङती । मूर्द्धा वयः । २ । ४३ ।
घिशातर्चौ । इन्द्राग्नीऽअव्यथमानाम् । ३ । ३५ ।
गुङङिच्छुः । ३ । आयुर्मे । ६ । ७९ । छीमकजौ २ ।
आशुस्त्रिवृत् । १ । ४१ । घड्यवर्गः । अग्नेर्भा-
गः । ३ । ५९ । ङोधढणीः । १ । एकया स्तुवत । ४ ।
७८ । छेणिघलिङा । ऋचः । २६ । पदानि । ४६५ ।
अनुवाकाः । ८ । अग्ने जातान् । ५ । १६६ । रश्मि-
नासत्याय । ४ । ८० । छौतिथर्ठि । २ । राज्ञसि । ५ ।
८७ । जेअडुदः । २ । अयं पुरः । ५ । ७५ । छुलामा-
घे । ६ । अयमग्निः । २४ । ३२० । षोडव्यीब्रैथ-
च्चौं । ४ येनऽऋषयः । ७ । १२० । ठौञमेदिलेः । १ ।
तपस्तपस्यः । ४ । ६२ । चाटाः । ऋचः । ५४ । अनुवा-
काः । ७ । पदानि । ८३३ । नमस्ते । २३३ । विघ-

नसा । ११ । १०४ । जीवग्रभाणे, ऋचः ८१ अनुवाकाः । ६ । पदानि । १६४ ॥ इमस्मे । ८, ११८ टैरवाढावा । ४ । समिद्धोऽअग्निः । ११ ६८ । भ्रो-म्नोमीर्कं । वसन्तेनऽऋतुना । ६ । ४४ । घीतक्षघ । होता यक्षत् । १२ । १४८ । भैमूघुश्न्वं । २ । अभिश्व-नौ छागस्य । ६ । १४६ । ढ्स्किमर्ही । ६ । देवम्ब-र्हिः । १४ । २८६ । लोभ्यूर्मीर्का: । ६ । ऋचः । ५७ अनुवाकाः । ६ । पदानि । ६४२ ॥ तेजोऽ-सि । ५ ८० । छौफुटथ । २ । अपाम्मोदाय । १ । ६ । ओअअक । १ । हिङ्काराय । २ । ५४ । डीअवडी । हिरण्यपाणिमूतये । ६ । ८४ । जीधादप् । ब्भि मीत्रा । ६ । ३७ । नेयचङः । १ । काय का-स्मै । १ । २४ । खीकभ्फख । आनह्मन् । घापिजन्वः । १ । चक्षुषे श्रोत्राय । ६ । १४ । ईअअ-अः । १ । प्राच्यै दिशे । १ । ६ । ओअअअः । अद्भ्यो स्वाहार्य: । १ । १२ । काम्फखआ । वाताय धूमा-य । १ । १८ ॥ कैखडःखि । इन्द्राय पृथिव्यै । १ । ६ । ओखकआ । नक्षत्रेभ्यो नक्षत्रियेभ्यः । १ । २४ । खीनचकाः । १ । परिप्लवेभ्यः । १ । ३ । इगकअ । अ-सवे स्वसवे । १ । १५ । कुअचक । इषायोर्ज्जाय । १ । २ । आअलअ । स्वः स्वाहा । १ । ४ । ईककाअ प्राणे-

ऽपानः । १ । ५ । ञङचका । एकस्मै द्वाभ्याम् । १ । ६ ञकगक । १ । ऋचः । २९ । अनुवाकाः । १९ । पदानि । ४४१ ॥ प्रजापतये त्वा । १ । २३ । खिगागख । युः प्राणतः । १ । २३ । रिवङथकाः । १ । युञ्जन्ति ब्रध्नम् । ८ । १०८ । ऐभीकृतै । २ । वायुष्ट्वा । ५ । ९३ । भिडमुडाभ्यै । ६ । अम्बेऽअम्बिके । ३ । ४४ । घीतटाढ । २ । उपसक्त्याऽअव । १२ । ४४ । ठीफटाभूः । १ । गायत्री त्रिष्टुप् । ५ । ५६ । ङफटकैः । ३ । कस्त्वा । ६ । ८४ । जुयच्छिज । १२ । किंस्वित् । ६ । १०७ । अंयिजुतै । ४ । काऽईम् । ८ । १३८ । डैडयणीवि । २ । स्वभूः स्वयम्भूः । २ । २३ । खिम्भघचाः । ऋचः । ५७ । अनुवाकाः । ११ । पदानि । ८४४ । अश्वस्तूपरः । १० । १६९ । तोहमम्लङ् । धूम्रान्वसन्ताय । १० । ११६ । दृहज्वटिः । १ । समुद्राय शिशुमारान् । १० । १३७ । हेर्हयाङ । मयुः प्राजापत्यः । १० । १९२ । धह्निलयू । ऋचः । ४० । अनुवाकाः । ४ । पदानि । ५१४ । माद्रन्दङ्गिः । १ । ४० । गौठिभ्याणि ॥ वात प्राणेन । १ । ४१ । घचाडादि । मशकान्केशैः । ९ । खंघीचता । अग्नेः पक्षतिः । १ । ३७ । गायगच्छ । मरुताᳬ स्कन्धाः । १ । २४ । खीगगाङ । पूषणम्वनिष्ठुना । १ । २२ । खाङचठः । इन्द्रस्य क्रो-

डः । ९ । ३५ । गुजेङ्क्षा । विष्टतिन्नाल्ब्या । १ । २६ । खङ्गगङ्गा । यृष्यिमे । खैक्ष्णक्काशे । आनः । १० । १९१ । घम्मोभाद्रिः । ७ । मानः । ८ । १४८ । ठैर्यिथाभाः । ३ यृश्श्वस्य । ८ । ६३८ । डैभफास्तूः । ३ । यृसे । ६ । १९४ । जिग्रठुर्दे । २ । इमा नु । १ । ३० । खौक्ष्णगिङी । ऋचः । ४४ । अनुवाकाः । १५ । पदानि । ९१२ ॥ अ ग्निनश्च । १४ । २१८ । पैक्लोड्विर्भू । १० । उश्वा ते । ११ । १३६ । उडुप्राधिती । ४ । ऋचः । २५ । अ नुवाकाः । २ । पदानि । ३५४ । समास्त्वा । ९ । १७३ । धिधीरवो । ४ । ऊर्द्ध्वाऽअस्य । १२ । १३७ । डेभ्र- दूये । ४ । पीवोऽअन्ना । १२ । १७७ । थन्हर्वणे । ४ । अभित्त्वा । ११ । १६५ । तुम्पिपाभो । ३ । ऋ चः । ४४ । अनुवाकाः । ४ । पदानि । ६५० । होता यृत्तत् । ११ । १२४ । टिष्णुषुन्न । २ । देवर्म्बर्हिः । टोयेभील्युं । २ । समिधानम्महत् । १३ । ११८२ । टैभा न्योषू । देवर्म्बर्हिः । २ । ४१ । घकृरत्ति । ऋचः । २६ । अनुवाकाः । ४ । पदानि । ४२७ ॥ समिद्धोऽअञ्ज- न् । ११ । १६६ । धूंच्होन्हलुः । ६ । यङ्क्रान्दः । १३ । २३२ । वारान्त्रीसुन्देः । ५ । समिद्धोऽअद्द्य । १२ । २०२ । नकोवीकु । ८ । केतुङ्कृण्वन् । २४ । ४४१ । न्मष्टलैर्धर्वरलेर्ष्वि । १२ । ऋचः । ६० । अनुवाकाः । ४ ।

पदानि । १०७१ ॥ विष्टम्भानि देव । ४ । ६१ । चच-
ड्यो । तपसे कौलालम् । १६ । ३५० । ज्यैकुस्ङ्हु-
व्याह्स्ल्गु । ८ । ऋचः । २० । अनुवाकाः । २ । पदा-
नि । ४११ ॥ सहस्रशीर्षा पुरुषः । १६ । २३७ । फो
ल्पिर्ह्रर्षि । १ । अद्भ्यः सम्भृतः । ६ । १०५ । अलु-
टिपै । ऋचः । २२ । अनुवाकाः । २ । पदानि । ३३० ।
तदेव । ७ । १०३ । निऋयज्ञैर्भि । वेनस्तत् । १ । १५ ।
णोभृफोच्चु । ३ । ऋचः । १६ । अनुवाकाः । २ ।
पदानि । २६२ । अस्मा अराम्सः । १४ । २०३ । नाह-
ञ्जसोर्भुः । ५ । आपश्चिन्नत् । १२ । १४८ । दोट्हीयु-
र्ह । ४ । विभ्राड्बृहत् । १२ । २०० । धांमैंभीवधां-
। १० । प्रवाह्जे । १० । १५३ । गोम्नतोम्रु । २ । प्र-
वायुम् । १३ । १८० । यौव्योल्डमीः । ७ । प्रवीर-
या । १२ । १८६ । दोथ्व्यैव्हुः । ३ । आनः । १३ ।
१९२ । धाम्याषूर्सै । ६ । ऋचः । ८७ । अनुवाकाः । ७
पदानि । १३०५ ॥ यज्जाग्रतः । १० । १४७ । डेशु-
भिर्ण्यु १२ । पञ्चनद्द्यः । १० । १६७ । तेश्विपाश्रै । ६
सोमो धेनुम् । १० । १६३ । तिद्येनूशै । ४ । आरा-
त्रि । ९ । १६२ । ताम्पिविल्लोः । ५ । पूषन्तव । १०
१४९ । ढीभनूमेड्वेः । ३ । न तत् । ८ । १४६ । ढूम्बो-
घह्रो । ५ । ऋचः । ५७ । अनुवाकाः । ६ । पदानि । ८३४ । प्र

पेतः । ६ । ३९ । डोमेठियः । १ । अपाचम् । ८ । १३४ । डोनिज्यू । ४ । ऋचः । १८ । अनुवाकाः । २ । पदानि । २७३ । ऋचँश्चाचम् । ८ । ६८ । क्षैज्वाक्षाद्धु । १० द्यौः शान्तिः । १५ । ७३ । क्षिपादाणे । ४ । ऋचः । १३ । अनुवाकाः । २ । पदानि । १७२ । नारिरसि । ३ । ३६ । गृक्षगिरवाः । १ । यमाय मखाय । १० । १६२ । ताप्वीनीलृ । ऋचः । १२ । अनुवाकाः । २ । पदानि । १६८ । सरस्वत्यसौ । ६ । ७५ । कुणडिक्ली । ३ । यमायाङ्किरस्वते । १० । १२३ । ठिमीतियीः । ३ । घर्मस्य त्वा । ७ । १०७ । जभार्णीणो । १ । ऋचः । २३ । अनुवाकाः । २ । पदानि । ३०४ । स्वाहा प्राणेभ्यः । ६ । ४८ । जै धिगद्रू । उग्रश्च । ७ । ६१ । क्षमीलाघु । २ ऋचः । १३ । अनुवाकाः । २ । पदानि । १७१ ईशा वास्यम् । ८ । १३२ । डाघोडिर्षीः । १ । अन्धन्तमः । ६ । ७९ । कोणडिषे । ऋचः । १४ । अनुवाकाः । २ । पदानि । २११ ॥ इतिश्री पण्डितसिद्धेश्वरसूनुना पण्डितरामचन्द्रविरचिता वेदपरिभाषा शिक्षा समाप्ता ॥ अथ वेदपरिभाषा कारिका शिक्षा सटीका प्रारभ्यते ॥ श्रीरामं सद्गुरुं याज्ञवल्क्यं कात्यायनं तथा ॥ नत्वा पदानां वक्ष्यामि लक्षणं चतुरक्षरैः ॥ १ ॥ अनुवाकेऽनुवाके चाम्नाये माध्यन्दिनीयके ॥ परिभा-

षोच्यते हलयुक् केवलो वा स्वरोऽक्षरम् ॥ २ ॥ अ-
नयोरर्थः। श्रीराममुपास्यदेवतां विद्याप्रदं सद्गुरुं शा-
खाप्रणेतारं याज्ञवल्क्यं, सूत्रकारं कात्यायनं च न-
त्वा नमस्कृत्य माध्यन्दिनीयके माध्यन्दिनशाखायां
अनुवाकेऽनुवाके प्रत्यनुवाकं तस्मिन्ननुवाके पदानां
चतुरक्षरैः अक्षरचतुष्टयेन लक्षणनिर्णयं वक्ष्यामि।
कथयिष्यामि, तत्र परिभाषोच्यते। हलिति व्यञ्ज-
नसञ्ज्ञा। व्यञ्जनयुतं शुद्धत्वादि तद्धं अक्षरसञ्ज्ञं ज्ञे-
यम् ॥ २ ॥ पदसङ्ख्याऽऽदिमेन स्यादद्वितीयेन वि-
सर्गनौ ॥ सावग्रहं सेतिकारं तृतीयेन तुरीयतः ॥ ३ ॥
मान्तं क्वादिहलन्तं च सितुसेन्तं विसर्गतः ॥ एकरूपं
तु विषमं तदभावे समन्त वा ॥ ४ ॥ अनयोरर्थः। आदि-
मेनाक्षरेणानुवाकपदसङ्ख्या ज्ञेया, द्वितीयेनाक्षरेण
विसर्गनौ विसर्गान्तनान्तपदसङ्ख्या, तृतीयेनाक्षरेण
सावग्रहकेवलेतिकारसहितपदसङ्ख्या। चतुर्थेनाक्ष-
रेण मान्तकटतपङणान्तपदसङ्ख्या ज्ञेया। सितुसे-
न्तमिति सर्वान्ते विसर्गश्चेत्। तेन सिशब्दान्तं तु श-
ब्दान्तं च एकरूपं एकसङ्ख्याबोधितं च विषयं बोध्य-
म्। यथा प्रथमाध्यायस्य पञ्चमेऽनुवाके अग्नासीत्येत-
स्मिन् सिशब्दान्तानि अष्टौ तुशब्दान्तानि पञ्च मिलि-
त्वा त्रयोदश १३ विषमसङ्ख्या वा तद्बोधकः। गि-

वतिष्टूः। इति विसर्गो लिखितः । कति विषमाणी-
ति निर्णयार्थम्। अङ्कोऽपि यथा तत्रैव १३ तदभावे
यत्र विसर्गो न लिखितस्तत्र समानि अथवा न सन्ति।
तयोर्निर्णयार्थं यत्र समानि तत्राङ्क एव लिख्यते। यथा-
प्रथमाध्याये द्वितीयानुवाके वसोः पवित्रमित्येतस्मि-
न् षाढमचा इत्यक्षरान्ते तत्र स्वान्तकं त्वन्तकमेकम्
इति मिलित्वा द्वयं सः अङ्क एव लिखितः। अधुना
सङ्ख्यानिर्णयार्थं स्वराणां व्यञ्जनानां च सङ्ख्यानि-
यमक्रमं चाह ॥ ककारादिहकारान्तास्त्रयस्त्रिंशद्व-
लः स्मृताः॥ सङ्ख्यापूर्तिस्तु नैकेन संयोगं तत्र कार-
येत् ॥ ५ ॥ अस्यार्थः । ककारमारभ्य हकारपर्यन्तं
त्रयस्त्रिंशद्व्यञ्जनानि यस्मिन्नक्षरे यद्व्यञ्जनं लि-
खितं तस्य या सङ्ख्या सैव तदक्षरबोध्यस्य ज्ञेयाः।
गकारे त्रयः, चकारे षडित्यादि। यथा प्रथमा-
नुवाके"गु" इत्यत्र गकारेण त्रयः। "ठि" इत्यत्र
ठकारेण द्वादश। यत्र तु एकेन व्यञ्जनेन सङ्ख्या-
पूरणन्नास्ति तत्र सङ्ख्यापूर्तिपर्यन्तं व्यञ्जनानां सं-
योगं कृत्वा लेखनीयम्। यथा द्वितीयाध्यायस्यान्ति-
मेऽनुवाके। अग्नये कव्यवाहनायेत्यत्र ञोङ्वठडुः।
इत्यत्र द्वितीयाक्षरे ङकारेण पञ्च वकारेण एको-
नत्रिंशन्मिलित्वा चतुस्त्रिंशत्सङ्ख्या ज्ञातव्येति॥

५ ॥ ऋ ऌवर्ज्या अकाराद्या औकारान्ताः स्वरा दश ।
आद्ये द्वितीयादिषु तु नवैवाकारवर्जिताः ॥ ६ ॥-
अस्यार्थः । स्वरास्तु ऋऌवर्ज्या इत्यकारादयः औका-
रान्ताः अआ इई उऊ एऐ ओऔ इति प्रथमाक्षरे स्व-
रा ज्ञेयाः । यथा प्रथमाध्यायस्य प्रथमानुवाके "शु" इ-
त्यत्र उकारेण पञ्च । द्वितीयाद्यक्षरत्रये तु अकारं
त्यक्त्वा आकारमारभ्य एकादिनवपर्यन्ता गणनीयाः ।
यत्र तु अकारस्तत्र शून्यम् । यथा प्रथमानुवाके "ठ"
इत्यत्र इकारेण द्वौ । तथा तत्रैव "घ" इत्यत्र अका-
रेण शून्यमभावदित्यर्थः ॥ ६ ॥ नवाधिके तूपरिस्थरे-
फेण दश वा नवाः ॥ एकोनविंशत्यधिके ऽनुस्वारात्तिथ-
यः स्मृताः ॥ ७ ॥ अस्यार्थः । यत्र तु स्वरेषु नवापेक्ष-
या ऽधिकसङ्ख्या अपेक्षिता तत्र तदक्षरस्योपरि रे-
फवोधिका कुण्डली लेखनीया तया दशसङ्ख्या ज्ञा-
तव्या । तत्र यत्रैका कुण्डली तत्र दशैव । यत्र विंश-
तिः । यथा तृतीयाध्यायस्य चतुर्थेऽनुवाके उपप्रय-
न्तइत्यत्र चतुर्थाक्षरे "र्हि" इत्यत्र रेफेण दश इका-
रेण द्वौ मिलित्वा द्वादश । कुण्डली द्वयं तु सर्वग्रन्थ-
मध्ये स्थलद्वये लिखितं तत्र विंशतिः । यथा चतुर्वि-
शतितमेऽध्याये तृतीयानुवाके समुद्रायेत्यस्मिन् "डे"
हिंपडी इत्यत्र द्वितीयाक्षरे तथा एकत्रिंशेऽध्याये स-

ह्रस्वशीर्षेति प्रथमानुवाके "फौत्विर्ह्ईर्षिः" इत्यत्र चतुर्थेऽक्षरे इति । एकोनविंशतीति । स्वररेफौ मिलित्वा एकोनविंशतिस्तदपेक्षयाऽधिकसङ्ख्या । यत्रापेक्षिता तत्रोपरि अनुस्वारो लेखनीयस्तेन तिथयः पञ्चदश ज्ञेयाः । यथा द्वादशेऽध्याये षष्ठे या ओषधीरित्यनुवाके इत्यत्र चतुर्थेऽक्षरेऽनुस्वारेण पञ्चदश ओकारेणाष्टौ मिलित्वा त्रयोविंशतिरित्यर्थः ॥ ७ ॥
अधुना केन प्रकारेण सङ्ख्या ज्ञानं तं प्रकारमाह ॥
दशघ्ने हल्युते नाद्या पदसङ्ख्याऽऽदिमेऽक्षरे ॥ द्वितीयादिचिह्नहल्भिर्विसर्गोऽवग्रहश्च मः ॥ ८ ॥ अज्भिर्ज्ञातं सेतिकारं क्रमात्कादिहलन्तकम् ॥ अस्यार्थः । अच् इति स्वरसंज्ञा । आद्येऽक्षरे दशभिर्गुणितो यो हल् व्यञ्जनस्तेन युक्तो योऽच् स्वरस्तेन या सम्पन्ना सा पदानां सङ्ख्या । यथा प्रथमाध्यायस्य नवमेऽनुवाके यावद्देऽद्धाद्दतं इत्यत्र "आभुधुभी." अत्र प्रथमाक्षरं आ तत्र हल् अकारो दश स दशघ्नः शतं अच् आकारः द्वे मिलित्वा द्व्यधिकं शतम् । १०२ । सा पदसङ्ख्या । द्वितीयादिति । द्वितीयाक्षरस्थव्यञ्जनेन विसर्गसङ्ख्या । तृतीयाक्षरस्थव्यञ्जनेनावग्रहसङ्ख्या । चतुर्थाक्षरस्थ व्यञ्जनेन मान्तपदसङ्ख्या ।
तृतीयाक्षरस्थव्यञ्जनेनावग्रहसङ्ख्या । चतुर्थाक्षरस्थ-

व्यञ्जनेन मान्तपदसङ्ख्या । द्वितीयाक्षरस्थस्वरेण नान्तपदसङ्ख्या । तृतीयाक्षरस्थस्वरेण निरवग्रहसेतिकारपदसङ्ख्या । चतुर्थाक्षरस्थस्वरेण कटतपङणान्तपदसङ्ख्या । यथा तत्रैव द्वितीयाक्षरं "भु" । इति तत्र व्यञ्जनं भकारः । चतुर्विंशतिस्तावन्तो विसर्गाः स्वरः उकारः अकारादिगणनया चत्वारस्तावन्तो नकाराः तृतीयाक्षरं "ढु" इति तत्र व्यञ्जनं ढकारश्चतुर्दश तावन्तोऽवग्रहाः । स्वरउकारश्चत्वारस्तावन्तो निरवग्रहा इतिकाराः । चतुर्थाक्षरं धी इति तत्र व्यञ्जनं धकारइत्येकोनविंशतिः । तावन्तो मकाराः । स्वरईकारस्त्रयस्तावन्ति ककारादिव्यञ्जनानि । इति बोध्यम् ॥ ८ ॥ विसर्गः पदमध्यस्थः पदान्तश्च पदान्तगः । ९ । पदान्तं च पदान्तं च व्यञ्जनं सितुसेन्तकम् ॥ कटौ तपौ ङणनमा हलः पद्यपदान्तगाः ॥ १० ॥ सार्द्धैकपद्यस्यायमर्थः । अत्र सङ्ख्यागणने विसर्गः पदमध्यस्थः । धूः सहाविति । पद्यमवग्रहस्तदन्त्यः इतिकरणोत्तरे तत्रैव धूः । सहौ । पदान्तगो वायव इत्यादि स्त्रिविधोऽपि ग्राह्यः । ९ । व्यञ्जनं तु पदान्तं हृषदावस्तूऽइति हृषण् । वस्तू इति । अवग्रहान्तो णकारः पदान्तमवर्धयत् इति तकारः । एते सङ्ख्यागणने ग्राह्ये । तथैव सितुसेन्तमपि । पदान्ते यातुधा-

नाऽइति यातु । धानाः । पदान्ते पुनातु इत्यादिकम् । विषमसमगणने द्वे अपि ग्राह्ये । कटाविति । कटतपा ङणनमाः । एते अष्टावेव हलः पदान्ते च सन्ति । "प्रथमोत्तमाः पदान्तीया ऋच् औ" इति प्रातिशाख्यसूत्रात् । इयञ्चतुर्वर्णयुता निर्णीय परिभाषिका ॥ सौकर्यदात्री पाठस्य यजुर्वेदस्य कारिका ॥ १ ॥ इति श्रीमत्पण्डितसिद्धेश्वरसूनुना पण्डितरामचन्द्रविरचिता वेदपरिभाषा कारिका शिक्षा व्याख्यानयुता समाप्ता ॥

---

# अथ यजुर्विधान शिक्षा ॥

अथातो मन्त्राणामनुष्ठानकल्पनं वसिष्ठादिभिर्ब्र-
ह्मर्षिभिरनुष्ठितमनुव्याख्यास्यामो नान्यद्ब्राह्मणस्य
कदाचिद्धनार्जनक्रिया विद्यते होमानां यज्ञानां वेषा-
ऽवश्यं क्रिया किन्तु मन्त्राहुतिवीर्यज्ञानं विद्याधनानां
यजुर्वेदैरुपदिश्यते क एते मन्त्रा य एते मन्त्रा ऋग्यजुः-
सामाथर्वाङ्गिरस उभयात्मका मन्त्रा देवताभीष्टा वा
परा द्रव्यसंस्कारकाश्चेति य एते द्रव्यसंस्कारपरास्ते
तत्रैवोपयोगिनो ये पुनर्दैवताभिज्ञानाश्च फलं तेषा
ꣳ सर्वार्थत्वमभिसन्धायाऽऽराधितानां च फलाऽऽदा-
न ऽश्चाज्ञानसाधितानां फलदर्शनान्मन्त्रलिङ्गदर्शनाच्च
विनियोगान्तरं वक्ष्यामस्तत्र कर्मकरणे तुलापुरुषचा-
न्द्रायणकृच्छ्रातिकृच्छ्रादिभिः पूतशरीरेण कर्मापे-
क्षया द्वादशरात्रठं॰ षड्रात्रं त्रिरात्रमिति च कर्मणां
कर्माङ्गानि कार्याणि सर्वमन्त्राणां पूर्वमेव लक्षणमयु-
तठं॰ सहस्रमिति च सिद्ध्यपेक्षया कार्याणि कर्माव-
साने च फलावाप्तिर्ब्रह्मचारिणा भवितव्यठं॰ सरहस्ये
कल्पाश्च सिद्धयो भावज्ञातव्याश्चेति ॥ १ ॥ अथ स
र्वेशोङ्कारपूर्वाभिर्महाव्याहृतिभिराज्याहुतिसहस्रं

जुहुयात्सर्वदेवताऽऽराधने समर्थो भवति तेजस्वी-
भवत्यथ यथेष्टं कर्मकारणैः समेताभिरौदुम्बरसमिधो
जुहुयात्पश्वन्नकामो दधि पयो वा शान्तिकामोऽपा-
मार्गसुवर्णनार्कसमिधो हिरण्यकामोऽन्नाद्यकामो
जातीपुष्पाणां युग्मशो ग्रथितानामखण्डितानां घृ
ताक्तानामयुतं जुहुयात्कामो मुष्टिभिस्तिलतन्दुलाञ्जु
हुयाद्ग्रामकामोऽपामार्गकामः कर्कोटकान्वशीकर्तु-
कामोऽभिचारार्थं विषरुधिराक्ता गिरिमालुव्याधि-
घातकसमिधो जुहुयाद्विषरुधिराक्ता विभीतकस-
मिधो जुहुयाद्राजा वश्यो भवति क्रोधान्वितो जनम
रणे जये वा सर्वग्रीहीञ्जुहुयादुपशाम्यति दूर्वाव्री-
हिभिर्यत्प्रतिकृतिचयं जुहुयात्स राजा वशी स्यात्स-
र्वव्रीहिभिः प्ररूढैर्जुहुयाद्बहवो भवन्ति दूर्वामायुष्-
कामः पुष्पाणि वसुकामो वा संकुशाग्रं ब्रह्मवर्चसका
मो भस्मतुषकण्टककाष्ठान्प्रत्यङ्गिरे काकोलूकपक्षहो-
मो विद्वेषणे चन्द्रग्रहे कपिलाघृतैः सहस्रसङ्ख्याता-
भिर्हुतैः सुवर्णेनैव वचामालोड्याऽसुनाऽभिमन्त्रितां
कृत्वा पिबेत्परममेधावी भवति पुत्रकामो मासमादि-
त्याऽभिमुखः प्रतिदिनं पुरुषसूक्तमयुतं जपेत्पुत्रं लभते
यद्यदिच्छेत्तदर्थमपि याज्ञिकद्रव्यं जुहुयात्तत्तदवश्य-
मेव संपद्यते ॥ २ ॥ इत्यनादिष्टोऽयतहोमः ॥ ओङ्का-

रपूर्विकया गायत्र्या च पृथग्युक्तानि सर्वाणि कर्माणि कर्तव्यानि सर्वकामप्राप्त्यर्थोऽयं मन्त्रः सर्वफलसिद्धिदः सर्वकामदइत्यनादेशेऽयुतहोम ओङ्कारेण गायत्र्या पृथगुक्तानि कर्माणि भवन्ति सर्वमन्त्रगणस्याऽप्येषविधिर्द्दृंहवतो वधोऽसीत्यनेनैकादशाङ्गुलां लौहीं खादिरीं वा सूचीं सहस्राभिमन्त्रितां कृत्वा मधुगृहे निखनेदुद्वसति भुवनं, भुवपतये स्वाहेति मन्त्रत्रयस्य प्रतिमन्त्रं महाव्याहृतिवत्कर्म । सूर्य्यस्त्वेति परा रक्षा प्रत्यङ्गिरं च कर्म । देवं वर्षयितुकाम उदुम्बरबिल्ववेतसवारणानां समिधो दधिमधुघृताक्ताञ्जुहुयाद्धन्तु स्वयऽऽइत्यावहमब्दस्य प्लुतः कार्यश्चक्षुष्पाऽइति खल्वनेन मन्त्रेणापहतचक्षुरुदके प्रविश्याहोरात्रं जपेदनपहतचक्षुर्भवति॥ ३ ॥ उपप्रयन्तऽइत्यनुवाकेन महानसाग्निमुपसमाधाय प्रत्यृचमन्नमन्वहं जुहुयादन्नवान्भवति । तनूपाऽअग्नेऽसीति रुजा ग्रस्तो दूर्वामयुतं जुहुयाद्रुजा मुच्यते । सन्त्वमग्नऽइति नवभिर्ऋग्भिर्गोष्ठे गा उपतिष्ठेत तावत्सङ्ख्या भवन्ति गाव,इहैवेति यान्धेनुमिच्छति तस्या एव पतितं गोमयं गृहीत्वा दधिमधुघृताक्तं जुहुयात्तां धेनुं लभेदमोघं कर्मेत्याचक्षते । महिन्त्रीणामिति त्र्यृचं पथिगच्छञ्जपेत्क्षेमेण गच्छति । सुप्रजाइति महाव्याहृतिवत्कर्माभिचारवर्जं,पुष्टिमा-

मंसु चैष ते रुद्रद्रेति पूर्वार्द्धेन गवेधुकतण्डुलाञ्जुहु-
याद्धनकामो वीरक्रमेण शतपुष्पीं क्रीत्वा जुहुयात्त-
न्मूल्यर्ठ० शतगुणमुत्पद्यते द्वितीयार्द्धेन मूषकशल्लभो
त्पाते चेत्रमध्ये बलिं निवेदयेत्पिष्टपूरिकासुरामाण्-
सादिभिरुपशाम्यति ॥ ४ ॥ द्विपदचतुष्पदानामुपसर्गे
भेषजमसीति दधिमधुघृतं जुहुयाच्छान्तिर्भवति
त्र्यम्बकमित्यृचार्द्धेन शान्तिकामः पुष्टिकामो वा धा-
न्यव्रीहिसमिधो जुहुयात् त्र्यम्बकमिति कन्यानाण् सौ-
भाग्यकामानां पतिकामानां भगकामानां वा सर्वा-
भिस्त्रीभिराज्यहोमः पुरुषस्य कन्याकामस्यानेनैव हो
मः कन्यानामग्रहणं कृत्तिवासा इति भयेषु जपेद-
भयं भवति जपेन सर्वोत्तरवादी भवति लोकस्य वचन-
विधेयो भवति त्र्यम्बकमित्यृगुभयेन धत्तूरकपुष्पाणां घृ
तप्लुतानां चतुष्पथे शून्यायतने वाऽग्निमुपसमाधाय श-
तसहस्रं जुहुयात्साक्षाद्भगवन्तं त्र्यम्बकं पशुपतिं दृष्ट्वैव
तेनेत्युपतिष्ठते ह्युपस्थानात्तेऽभीष्टान्कामाँल्लभत ऽएते-
नैव गुग्गुलधूपो दीपश्च नवनीतेनाथ भगवन्तंत्र्यम्बकं
पश्यति चेत्सुवर्णरजतमिश्राणां भाजनानाण् सहस्रँल्ल-
भते ॥ ५ ॥ आकूत्याऽइत्यष्टौ स्रुवाहुतीर्जुहुयाद्राज-
कुलेभ्यो भयन्न भवत्यन्वहं जुहुयात्काण्स्यभाजना-
नाण् शतँल्लभते तिलाहुतीनामयुतं जुहुयाद्गो

श्चापदो न भवन्त्यकालेन कश्चिन्म्रियते । चिदसीति सहस्रं जपेत्सर्वोत्तरवादी भवति लोकस्य वचनविधेयो भवत्यग्नेस्तनूरिति ब्रीहितण्डुलान्पयोऽयुतान्त्सहस्रं जुहुयात्सर्वातिथिर्भवति । युञ्जते मनऽइति वैष्णवानुवाकं जप्त्वा सायंप्रातः प्रयुञ्जानो दीर्घायुर्भवति भयमन्यत्राऽपि न भवति । दिवो वा विष्णऽइति महाव्याहृतिवत्कर्म । विष्णो रराटमित्ययुतं जप्त्वाऽष्टसहस्रं जुहुयात्पातालेऽपि भयन्न भवत्ययन्नोऽग्निररिति रात्रौ शरीरमायुधश्चात्मानं चाभिमन्त्र्य सङ्ग्रामे प्रविशेज्जयो भवति ॥ ६ ॥ इदमापः प्रवहतेत्यप्सु निमज्ज्य जपेदहोरात्रोषितो यावज्जीवकृतात्पापात्प्रमुच्यते । देवाꣳशोऽइति व्याधिघातकराजिकाभिरभिचारी युद्धा हि केशिनेत्युपश्रुतिरहोरात्रोषितो भूत्वोपश्रुतिं कुर्याज्जुहुयादग्नऽआयूꣳषि पवस्वेति ब्रह्मवर्चसकामस्याज्यहोमऽउदुत्यमिति ब्रीहितण्डुलान्पयसा संयुक्तान्छतसहस्रं जुहुयात्सर्वातिथिर्भवति । चित्रन्देवानामिति महाव्याहृतिवत्कर्म । विनऽइन्द्रेति यस्मादधिको भवितुमिच्छन्ब्रह्मवर्चसेन विद्यया धनेन यशसा वा तस्य नामग्राहं जपेदधिको भवत्यनेनैवाज्याहुतीर्जुहुयाद्दासमिथुनँल्लभते । विश्वकर्मन्हविषेति यामेव कन्यामिच्छति तस्या

नामग्राहमायसीᳫं सूचीं द्वादशाङ्गुलाᳫं सहस्राभिमन्त्रितां कृत्वा तस्याऽएव गृहद्वारे निखनेन्न म्रियते न चान्यस्मै प्रदीयते ॥ ७ ॥ प्राणायमऽइत्यवकाशान्नित्यं जपेत्तेजस्वी भवति निरुक्षशानिघेति सहस्रं भुक्त्वाऽग्नौ समिधोदुम्बरगोमयहोमः पश्चाद्व्यं कर्म गोमयेन गोः प्रकृतिं कृत्वा देवसवितरित्यन्नभागभवति । वाजस्येममिति । सप्तभिर्ऋग्भिराज्याहुतिसहस्रं जुहुयाद्यज्ञादन्यत्र यज्ञ,होति तच्च मूल्यं सहस्रं गुणमुत्पद्यते तदक्षय्यं भवत्यग्नेऽअच्छेति सहस्राभिमान्यदुम्बरयवतिलधान्यापामार्गतण्डुलाञ्जुहुयाद्धनकामो वीरक्रयेण घृतपुष्पीं क्रीत्वा जुहुयात्तन्मूल्यसहस्रगुणमुत्पद्यते । उदुम्बरसमिधमयुतं जुहुयात्सुवर्णमुत्पद्यते । गोरोचनामष्टसहस्राभिमन्त्रितां कृत्वा ललाटे तिलकं कुर्यात्सर्वजनप्रियो भवति । सोमᳫं राजानमिति मासं पौर्णमास्याᳫं संवत्सरᳫं सोममुपतिष्ठेत ब्राह्मणायाग्रं दत्वा भुञ्जीत क्षिप्रᳫं सोमयाजी भवति । प्रनो यच्छत्वित्यन्नकामो होमद्रव्याणि जुहुयादयुतमर्थ्यमणमित्यादित्याभिमुखः प्रतिदिनं काममभिसन्धाय जपेत्क्षिप्रमेव लभते ॥ ८ ॥ एष ते निर्ऋतऽइति माᳫंसहोमा जम्बुकास्थि वा मूर्धन्यस्य चतुष्पथेऽहोरात्रोषितः क्षि-

रसि सहस्राभिमन्त्रितं कृत्वा क्षिप्रं क्षिप्त्वाऽप्रेक्ष-
माणो गच्छेद्यावत्क्रीतं तावदष्टगुणं भवत्यनेनैव तु-
षकण्टकहोमो गृहान्नैर्ऋतस्थानं गत्वाऽभिचारेण
होमविधानेनाग्निमुपसमाधाय घृतसहस्रं जुहुया
च्छत्रुकुलमुद्वरति विषरुधिराक्तैर्ग्राममुद्वरति राजा-
नं नगरं क्षोत्सादयितुकामो वैकङ्कतकण्टकानां ती-
क्ष्णतैलाक्तानां विषरुधिरेण कटुतैलाक्तानां सम्यग्द्वि-
गुणं० घृतसहस्रं जुहुयाद्धोमान्ते नदीं प्रस्रवणं
वा गत्वा कपिलागोमयेन लिङ्गं प्रतिष्ठाप्य पञ्चगव्येन
स्नापयेद्रुद्राध्यायं जप्त्वा गुह्यकैः कर्त्तुं गीतिर्भव-
ति ह्यमोघं कर्मेत्याचक्षते ॥ ६ ॥ देवस्यत्वेत्यभिचर्य-
माणः स्रुवेणापामार्गतण्डुलाञ्जुहुयात्स्रुवं च तस्मि
न्देशऽस्यागमने च प्रतिमन्त्रमेते च प्रत्यङ्गिरोऽपो दे-
वाऽइति देवं वर्षयितुकामऽऔदुम्बरबिल्ववेतसवारणा-
न्दधिमधुघृताक्ताञ्जुहुयात्प्रजापते न त्वदिति महा-
व्याहृतिवत्कर्म । कद्रुद्र यत्तऽइति पालाशसमिधो
जुहुयात्सुवर्णमुत्पद्यते पायसं जुहुयाद्घृतमधुमिश्र-
मथ पद्मेवापामार्गौदुम्बरवारणानाममावास्यायामेत-
त्कर्म ॥ १० ॥ हठं०सः शुचिषदिति विरजो मन्त्रो
नाभिमात्रमुदकमवतीर्यादित्याभिमुखः घृतसहस्रं
जपेदुपपातकेभ्यो मुच्यते द्विगुणेन महापातकेभ्य-

श्चतुष्कृत्वा सर्वान्वेदानवाप्नोति । चत्वारि शृङ्गेत्या-र्षभो मन्त्रः सकृदभ्यसनादेवपूज्यो भवति द्रुपदा-दिवेति त्रिरन्तर्जले जपेदहोरात्रोषितो विपापो भवत्यथ महापातकसँय्युक्तः पञ्चगव्याहारो गोष्ठेऽ-ग्निमुपसमाधाय गोमयेनानुलिप्ताङ्गोऽयुतं जप्त्वाऽष्ट-सहस्रं जुहुयाद्विपापो भवत्युद्वयमिति पापप्रणाशि-न्यादित्योपस्थानं कुर्यात्पापन्नाशयत्यादित्यस्य सायुज्य-मतोयादुदुत्यं चित्रन्तच्चक्षुरित्याभिमुखो जपेदनेना-होरात्रकृतं दुष्कृतमपहरति देवा यज्ञमिति ब्राह्म-णानुवाकं जप्त्वा ब्रह्मलोके महीयते । सुरावन्त-मिति चतुर्ऋचेन पौर्णमास्याᳪसँवत्सरᳪ सोम-मुपतिष्ठेत ब्राह्मणायाग्रन्दत्त्वा भुञ्जीत चिप्रᳪ सो-मयाजी भवत्यश्विनाभैषज्येनेति देवताऽभिषेकं कुर्य्या-द्यद्देवाऽइति त्र्यृचं कूष्माण्डᳪ हिरण्यगर्भो यः प्रा-णतो ब्रह्म यज्ञानं महीद्यौरुपयम्बासयाग्नेनय याते घ र्मा यमाय स्वाहेत्यष्टर्चं जप्त्वा सुरापानाद्ब्रह्महत्त्या-याः प्रमुच्यते । पितृभ्यः स्वधायिभ्यऽइत्यनुवाकशेषे-णोत्तरेणानुवाकेन पितॄणामक्षय्यतृप्तिर्भवति वस-न्तेनऽऋतुनेत्याज्याहुतिसहस्रं जुहुयात्सविता वरदो भवति ॥ ११ ॥ इति यजुर्विधानशिक्षायां प्रथमोऽध्याः-यः ॥ १ ॥ शिवो भवेत्यग्न्युत्पाते सर्वव्रीहिरसवतीः

समिधः सहस्रं जुहुयादुपशमयति इन्द्राऽऽइत्यौदुम्बरसमिधो जुहुयाद्धनकामः परस्याऽइति वैकङ्कतीर्जुहुयाद्रक्षणे परमस्याऽइत्यौदुम्बरीर्जुहुयादर्थसिद्धये । युः सेनाऽइति दुग्धमानीय क्षितौ जुहुयाद्दस्युभयन्न भवति प्रतिकृतिं जुहुयाद्रक्षायै दंष्ट्राभ्यामित्युग्रभयं जप्त्वा सर्वभयं नश्यति कुशकण्टकहोमो द्विषन्मोहनाय व्यवहारेष्वन्नपतऽइत्यन्नं जुहुयादन्नमुत्पद्यते सर्वोपकरणमिश्राणामन्नाद्याहुतीनां त्रिकटुकेनाभ्यज्य चतुष्पथे शून्यायतनेऽग्निमुपसमाधाय सहस्रं जुहुयाद्ग्राम्या व्रीहयोऽहत्या भवन्ति ॥ १ ॥ सुपर्णोऽसीत्युग्रभयस्य महाव्याहृतिवत्कर्म नमः सुतऽइति निगडबद्धो व्यसनस्थो वा जपेन्निगडान्मुच्यते । नमो भूत्याऽइति वीरक्रमेण शतपुष्पीं क्रीत्वा जुहुयाच्छतशो मूल्यमुत्पद्यते । कामङ्कामदुघऽइति कामधुङ्नाम्न्या चतुष्पथेऽहोरात्रोषितः करीषतप्तायां भूमौ सहस्रं घृतमाक्षेन जुहुयाद्ग्रामँल्लभेदथ वा सुवर्णशतं गोक्षफेनाज्याहुतिसहस्रं जुहुयाद्गोकामोऽन्यस्य महाव्याहृतिवत्कर्म । सजूरब्दऽइत्याज्याहुतिसहस्रं जुहुयाद्गोकामः ॥ २ ॥ याऽओषधीरित्यनुवाकेन वचामालोड्याभिमन्त्र्यारोपणं कृत्वेन्दुग्रहे शुद्धामुत्पाद्य चिरात्रोषितस्ताम्रभाजने-

संस्थाप्य कपिलाघृतेनालोड्य पञ्चदशधाऽभिमन्त्र्य च-न्द्रं दृष्ट्वा पिबेत्पयसा मासं भुक्त्वा श्रुतिधरो भवति याः ऽओषधीरिति द्वाभ्यामोषधीरभिमन्त्र्य पाययेदगदो भवति। शतंवऽइत्याम्रसमित्पर्णफलानि जुहुयादारोग्य-कामऽआयुष्मान्भवत्योषधीः प्रतिमोदध्वमिति बीजवापनं कुर्यान्निष्पन्नसस्यो भवत्योषधीरितीति मातृनाम्न्योदु-म्बरतिलयवापामार्गहोमो गोहिरण्यकामोऽश्वत्थे व-ऽइत्यश्वत्थसमित्पर्णहोमो गोधनकामः पुरुषनाम्नी चैषा यत्रौषधीः समग्मतेति रक्षोघ्नी यक्ष्मोऽन्यत्रापि राक्ष-सपिशाचडाकिन्यादिभीतस्याज्यहोमोऽश्वावतीरित्य-रिष्टनाम्न्या शान्त्यर्थे पयोऽन्नं ब्रीहींश्च जुहुयादु-च्छुष्माऽइति बन्धनस्थो जपेन्मुच्यतेऽइष्कृतिरित्या-त्मनिष्कृत्यर्थं होमोऽति विश्वाऽइत्यात्मशरीरे पावना-य जपहोमौ रक्षणाय च,यदिमाऽइति ब्रीहिहोमो-ऽघनाशाय धान्यप्रतिकृतिनाऽभिचारे वशीकरणे च, यस्यौषधीरिति स सर्पनाम्न्याऽऽत्मपावनाय च यवहो-मोऽभिचारे, साकंयक्ष्मेति यस्मिन्काष्ठे चाष उपवि-शेत्तदादायाष्टशतसहस्रमभिमन्त्र्य शत्रुगृहे निखनेदु-द्वसति शत्रुगृहं क्षिप्रं पदे निखनेत्कुष्ठी भवति चाष-पत्त्रेण सहस्राभिमन्त्रितेन गृध्रपत्त्रेण वा प्रतिकृतौ मर्मसु विद्धो म्रियते,ऽअन्याव:ऽइति वचो नाम्न्याऽऽ-

रोग्यकामो हस्तेनान्नं गृहीत्वा भुक्त्वा रोगात्प्रमु-
च्यतेऽस्या ऋगन्तरसङ्ख्ययाऽष्टसहस्राभिमन्त्रितां ब्रा-
ह्मीं वचां वा प्राश्नीयात्परममेधावी भवति तथा च
चत्वारो वर्णा वश्या भवन्ति, याः फलिनीरिति द्वा-
भ्याᳯ सर्वौषधीमिश्रेणोदकेन सहस्राभिमन्त्रितेना-
त्मानं स्नापयेद्यावज्जीवकृतात्पापात्प्रमुच्यते ॥ ३ ॥
मुञ्चन्तु मेति दृहस्रो मन्त्रः सर्वोपद्रवनाशनेऽस्या-
नुक्रमालभ्याऽष्टसहस्रं लिखकुम्भेत्सर्वोपद्रवाञ्छमयति श-
त्रुभये चर्य्यमाणः करम्भाहुतीनाᳯ रक्षणाय ता-
नि द्रव्याणि जुहुयाद्यावज्जीवमन्नान्यक्षय्याणि भवन्ति,
याऽओषधीरित्युभयेनौषधीमूलमुद्धरेत्कर्णे निधाय
सर्वजनप्रियो भवति। याश्चेदमिति रात्रिकाभिः
प्रतिकृतिं कृत्वाऽभिचरद्रव्यहोमोऽभिचारजपहोमस्था-
नेनैव पालाशपत्रजालपाशग्रथितास्य न लोष्ठप्रक्षे-
पऽस्यात्मरक्षा शिखाबन्धश्चेति, नाशयित्री बलास-
स्येति तुषलवणभस्ममिश्राणामन्नाद्याहुतीनां त्रिक-
टुकेनाभ्यज्य चतुष्पथे शून्यायतने वाऽग्निमुपसमाधा-
य शतसहस्रं जुहुयात्कृष्णाष्टम्यामारभ्य यावत्कृष्णा-
चतुर्दशीन्तावदुत्सादनं रात्रौ रुद्रस्यारिर्निधनमु-
पयाति मा वऽद्रुत्वनेनातुरमियाद्विद्वेष्यशान्तिकरणे प-
योऽन्नमश्नीहीन्वा जुहुयादोषधयः समिति सार्वका-

भिक्षया महाव्याहृतिवत्कर्म त्वाङ्गन्धर्वोऽ इति पाप-रोगमोचनाय होमः सहस्र मऽइत्यादिवशीकरणे-पयोऽन्नं ब्रीहीन्वा जुहुयात् ॥ ४ ॥ मा मा हिर्ठ० सीदित्यभिचर्य्यमाणऽआज्यं जुहुयाच्छान्तिर्भवत्यश्वा-वर्त्तस्वेति वल्मीकवपामादायायुतं तिलतन्दुलाञ्जुहु-यादेवं च जातरूपँल्लभते दधि मधुघृतं जुहुया-द्ग्रामँल्लभतेऽग्ने तवेत्यन्नं जुहुया दृष्टिर्भवति, इष्क-र्त्तारमिति मधुलवणहोमः स्त्रीपुरुषाणां सौभाग्य-कामः स्त्री पुरुषयोरनिच्छतो दधिमधुघृतं जुहु-यात्प्रीतिर्भवत्युतावानमिति व्रती भूत्वा,इष्सहस्रमाज्या-हुतीर्जुहुयात्सिद्धवाग्भवत्याते वत्सऽइति तथैव कुर्या-द्धनविद्य बन्धनकामस्तुभ्यन्ताऽअङ्गिरः प्रियेषु स्वस्ति-नऽइति त्रिभिः पलाशसमिधां दधिमधुघृताक्तानामयुतं जुहुयात्कार्षापणानाᳯ सहस्रमुत्पद्यते सिद्धं श्रु-तम् ॥ ५ ॥ प्रातर्हीने दिने द्रप्सऽइति दधिशरमयुत-होमः पशुपुष्टिकामस्य च नमोऽस्त्विति घृतपायसं नागस्थाने जुहुयात्सुवर्णमुत्पद्यते याऽइषवऽइति बिले प्रविष्टर्ठ० सर्पन्दृष्ट्वा तत्रैवाज्याहुतिसहस्रं जुहुया-त्सुवर्णशतद्वयमुत्पद्यते सिद्धे तदर्द्धं नष्टे सुवर्णमसोघं कर्मेत्याचक्षते कोटरावस्थितस्याप्येवं विधिरिष्यते कृ-णुष्व पाजऽइति प्रत्यङ्गिरे जपेदुदग्नऽइति मन्त्रोर्न-

मध्याह्ने तुषकण्टकराजिकासर्षपाणां विषरुधिराक्ता-
नां जुहुयाद्वन्तं वश्यो भवति शत्रोः क्रुद्धस्य जपेत्तुष-
कण्टककणसर्षपान्वा जुहुयाद्वशीकरणम् ॥ ६ ॥
काण्डात्काण्डादिति द्वाभ्यां दूर्वाप्रवालानामयुतं जुहु-
याद्ग्रामे जननमरणमुपशाम्यति द्विगुणेन नगरे त्रि-
गुणेन देशे मधुमान्नऽइत्यष्टौदुम्बरीर्जुहुयाद्धनकामो-
ऽपाङ्गम्भन्निति दैवं वर्षयितुं कामऽउदुम्बरबिल्ववेत-
सवारणानां पूर्वं दधिमधुघृताक्तानामयुतं जुहुयान्म-
हावृष्टिर्भवत्यग्निर्देवतेति यवमुष्टिसहस्रं जुहुयादप्र-
तिहतवाक्यो भवत्यग्ने जातानित्युभयेन महाव्या-
हृतिवत्कर्म द्वितीयोत्तरार्द्धं चमयम्पुरऽइत्यनेनानुवाकेन
पद्मे वा व्याहृतं कर्मेत्याचक्षतेऽथ वशीकर्त्तुमिच्छन्पला-
शाश्वत्थापामार्गविल्ववेतसमावाँसकशाखोदकसमिधो
दधिमधुघृताक्ता जुहुयात्सर्वे वशा वश्या भवन्ति ॥
७ ॥ अथ राज्यकामः पद्मकुमुदसौगन्धिकोत्पला-
दीनि भगवतो महेश्वरस्योभवतश्चन्दनाक्तानि शिर-
सि शतसहस्राण्यारोपयेत्सहस्रान्तस्य श्लोकपेयाद्वा-
द्भ्राद्ययात्पुरुषाद्वोराहा विरुध्येन त्रिगुणेन साचाद्यु-
पतिष्ठतेऽप्यभिचाराणां वेति अश्वत्थराजवृक्षसमिधा-
मयेत्र एव विधिर्दैवस्य दक्षिणायां मूर्त्तौ सघृतं गुग्गु-
लमष्टसहस्रं जुहुयात्षट्सहस्राणि वा न व्याहृतं

कर्मेत्याचक्षते यथा सिद्धे महानसेऽग्नावष्टसहस्रं जुहुयाद्द्रव्यमव्यवच्छिन्नमक्षय्यं भवति । मा नो महान्तमिति तिलाहुतीनामयुतं जुहुयाद्गृहे बालानां परिजनस्यारोग्यं भवति मा नस्तोका इत्युक्तानि कर्माणि भवन्ति ॥ ५ ॥ नमो हिरण्यबाहवइति षड्भिरनुवाकैः कटुतैलाक्तान्राजसर्षपाञ्जुहुयाच्छत्रुमुत्सादयति फट्कारेण देवस्योपरि मालायामधःशिरसमवलम्ब्य शस्त्रेण शिरसि रुधिरं स्राव्य स्नायेत्किकटुकेनाभ्यज्य देवं कराङ्गुलिनखेनोत्पाट्य शचीनाम स्मरन्नपेत्सर्वबलं शत्रुमुत्सादयेद्देवं कृत्स्नं ग्रामं नगरं वै तान्हा राजानमहोरात्रेण ब्राह्मणमर्द्धेन क्षत्रियं त्रिभागेन वैश्यं षड्भागेन शूद्रं स्त्रियं वा व्याहृतं कर्मेत्याचक्षते ॥ ६ ॥ अथ वशीकर्तुं प्लक्षपालाशाश्वत्थापामार्गैकंशतबिल्ववेतसोशीरादीन्प्रतिवर्णं प्रतिमन्त्रं दधिमधुघृताक्तानामयुतं जुहुयात्क्रमशो वर्णचतुष्टयं वशमानयत्यथ राज्यकामः कुमुदसौगन्धिकनीलोत्पलादीन् पूर्वकल्पनारोपयेत्साक्षाच्छ्रीर्भगवती तूपतिष्ठते नमः सिकत्यायेति कलशमभिमन्त्र्याष्टशतेन राजानं स्नापयेत्सर्वविनायकेभ्यो भयं न भवति रोगाभिभूतं स्नपयेन्मुच्यते सर्वरोगैर्नमो वः किरिकेभ्य इति तिलाहुतीनामयुतं जुहु-

यात्कार्षीपणानाᳲ सहस्रमुत्पद्यते ऽपामार्गसमिद्भिः सु-
वर्णंगुगुल्लप्रतिमानां चुरेणोत्कृत्याष्टसहस्रं जुहुयादल-
ङ्कृतां कन्यां लभतेऽथ वा सुवर्णशतं गोशफेनैका
दशसहस्रमाज्यहोमात्तावत्यो गावः स्युस्तिलतन्दुला-
नाᳲ शतसहस्रेण सर्वसम्पदस्य तिलयवधान्यशतपु-
ष्पमयीं प्रतिकृतिं कृत्वा जुहुयाद्राजमान्यवश्यौ स्याता-
मुत्पलपद्मानाᳲ शतसहस्रेण स्वरूपिणी राजलक्ष्मीर्भ-
वति चणकमितानां गुग्गुलुगुटिकानाᳲ शतसहस्रं
जुहुयात्स्फीतसामन्तराजो प्राप्नोति देवस्य दक्षिणायां
मूर्तौ विल्वसमिद्भिर्महाराज्यं महाचतुष्पथे वल्मी-
कमृदा गोमयेन लिङ्गं प्रतिष्ठाप्य रुद्राध्यायेनाभि-
मंत्र्य ष्टतथा पायसमन्वहं बलिमुपहरेद्भूतेभ्यो भूति-
कामो देवस्य दक्षिणस्यां मूर्तौ वचाफलमर्धं वा सूक्ष्मं पि
ष्ट्वा ताम्रभाजने न्युप्य कपिलघृतेनालोड्य प्रादेशिन्या-
ष्टसहस्रमभिमन्त्र्य पिबेदप्रतिहतवासः स्यादाक्ष-
द्विश्वौदुम्बरसमिद्भिर्दध्यक्ताभिर्महागोस्वामी स्यान्न च
गावः क्षीयन्ते विल्वफलैर्घृताक्तैः सुवर्णसिद्धे रज-
तमेतेनैवौदुम्बरामलकी हरीतकिविभीतका व्याख्या-
ताः ॥ ७ ॥ अन्तर्धानमिच्छन्पर्वतशिखरमारुह्य क-
थमुत्थिताञ्जनं सहस्रमभिमन्त्र्य देवस्य हस्ते निवे-
द्य तावज्जपेद्यावद्भूमायते पूर्णे शतसहस्रे सम्य-

अस्यापि ज्वलत्युष्मायमाणे सर्वलोकवशीकरणं धू-
मायमाने पादप्रसारित्वं ज्वलिते चाकाशगामित्व-
ठं॰ रुद्ररूपो शशांकप्रभः समुद्रान्तां पृथिवीं पर्यटेद्रु-
द्रस्यानुचरो भवति पद्मपुष्पाणा'१ सुरभिचन्दनाक्तानां
घृतपूर्णाक्तानां वा चतुष्पथे शून्यायतने वाऽग्निमु-
पसमाधाय शतसहस्रं जुहुयात्स्वयमेव श्रीरुपतिष्ठ-
तेऽनेन यथेच्छति तथा करोति द्राघेऽश्मन्त्रसऽइत्याज्यं
जुहुयाद्दासाश्वसचयाणि भवन्ति ॥ ८ ॥ इमा रुद्रा-
येति तिलाञ्जुहुयादयुतमयाचितं धनं स्यान्महारोगो-
पघाते दूर्वाप्रवालैर्गतायुर्दीर्घायुर्भवत्यथ जनशान्ति पु-
ष्टिकामो दधिमधुघृतपायसं जुहुयान्महाग्रहभूत-
पिशाचादिभ्यो मोचयति वैकङ्कतपलाशसमिद्भिर्घृ-
ताक्ताभिरयुतं जुहुयादाभिचारिकभयं न स्यान्महा-
जनेनाभिभूयमानस्तुषां जुहुयाच्छाल्मलीवैकङ्कत्यौ-
दुम्बरीयवतिलानां चायुतं जुहुयाद्बध्ये गवामुपघाते
गोष्ठमध्येऽग्निमुपसमाधाय वैकङ्कतसमिधो जुहुया-
च्छान्तिर्भवति यावन्तश्चतुष्पदास्तेषामेष विधिर्जनमरणे
चये वाऽयुतं तिलाञ्जुहुयाद्गृहग्रामनगरमध्येऽग्नि-
मुपसमाधाय सुप्तजनेषु चतसृषु दिक्षु देवबलीन्
दत्वा बलिभीरक्षितः कर्म कुर्यादोदनघृततिलपिष्ट-
माषाम्लपरमान्नकृशरादीनि देवबलिमुपहरेत्सर्वंरक्त-

पुष्पार्थाई० रक्तचंदनाक्तानां घृतपूर्णानां चतुष्पथे शून्यायतने वाऽग्निमुपसमाधाय शतसहस्रं जुहुयादुर्वंशीप्रतिमा कन्यालभतेऽथ वा सुवर्णशतमयमग्निः सहस्रिणऽइति महा व्याहृतिवत्कर्म गवार्द्धं० शांतिर्भवति गोशफेनाज्याहुतिसहस्रं जुहुयाच्छोशतं लभेदनेनैव समिद्धोमो हिरण्यपशुकामस्य सहस्रस्येति महाव्याहृतिवत्कर्म महाव्याहृतिवत्कर्म ॥ ६ ॥ इति यजुर्विधाने द्वितीयोऽध्यायः। २। नमस्तऽइति चतसृभिः प्रत्यृचं यवगोधूमगवेधुकजार्तिलान्वा दधिमधुघृताक्तानेकाहं जुहुयाद्वान्यं बहु भवत्येकादशरात्रेण जनमरणमुपशाम्यति पञ्चदशरात्रेण वा राष्ट्रोपद्रवं त्रिंशद्०-शतिरात्रेण देशोपद्रवं मासेन पृथिव्युत्पातं गवामुत्पाते गोष्ठेऽग्निमुपसमाधाय वैकङ्कतसमिधामयुतं जुहुयाच्छान्तिर्भवति द्विगुणेन महाशान्तिर्भवति ॥ १ अश्वत्थोचदिति सर्वत्र रक्षा कर्त्तव्या उरगेभ्यश्च सर्षपान्सप्तभिर्मन्त्रितान्कृत्वा चतुर्दिक्षु क्षिपेत्सर्वत्र रक्षा कृता भवति पथि गच्छन्क्षिपेत्क्षेमेण गच्छति सर्षपैर्ब्रह्मराक्षसभूतप्रेतपिशाचादिभ्यो मोक्षयति तैः सर्षपैः स्कन्दग्रहादिभ्यः शिखोपरिजप्याभितो विहाय रात्रौ क्षिपेद्रोगभयं न भवेत्सर्वरोगशमनायौषधमभिमन्त्र्य प्राशयेदुदकेन सर्वसत्वानार्द्धं० सर्षपैः सर्पाणां भस्मना

सर्वभूतानाꣳ स्तनमण्डलवल्म्यादग्निहोमेन लोहेन
त्रिशतर्ꣳ सहस्रमभिमन्त्र्य नागहृदि क्षिपेत्सकुल-
बान्धवो नागो नाशं गच्छति तालशब्देन भस्मनाऽती-
वत्तस्मात्स्यादनं करोति ॥ २ ॥ असौ य ऽइत्यृग्द्वयेनाहो-
रात्रयोरादित्यमुपस्थायाक्षय्यमन्नं भवति एवं दधिदु-
ग्धघृतेन स्नापयेद्रोगान्मुच्यते सविता प्रसन्नो भवति
वर्षति वाऽतसीपुष्पाणामयुतं जुहुयादवध्यो वध्यो
भवति सविता वरदो भवत्युदकसक्थाहारी वेतससमि-
धां गुडक्षीराक्तानामयुतं जुहुयाद्भगवानादित्यो म-
हावृष्टिं प्रमुञ्चति नमोऽस्त्विति घृतपायसꣳ स्थण्डि-
लमुपलिप्य कंसस्तम्पद्मास्तरे वा कृष्णाष्टम्यामारभ्य
यावत्कृष्णाचतुर्दशीꣳ सहस्राभिमन्त्रितं कृत्वा निवे-
दयेत्कार्षापणानाꣳ सहस्रमुत्पद्यते सिद्धे व्रतम् ॥ ३ ॥
प्रमुञ्चेति षड्भिरायुधान्यभिमन्त्र्य सङ्ग्रामोपनीताः
शत्रवः पलायन्ते न चाभिमुखास्तिष्ठन्ति दर्भकण्टका-
नामयुतं जुहुयादनामिकाङ्गुलिनखेनोत्पाद्य शा-
चीनाम स्मशानप्रत्सबलꣳ शत्रुमुत्सादयेद्ग्रामं न-
गरं वैकेनाह्ना राजानं प्रभूतशब्दवन्तं क्षत्रियं दिव-
सत्रिभागेन चतुर्थेन वैश्यं षड्भागेन शूद्रꣳ स्त्रियं
रक्षोभूतेभ्यो रुद्रेभ्यः पलाशपुटेष्वेवार्द्धमासेन जनम-
रणमुपसंयतीकृन्तनमुन्यन्नैः शान्तिषु यथोक्तेन व-

शोकरणमभिचारस्य शान्तिर्भवति ॥ ८ ॥ या ते रुद्रे-
ति जीवोर्णायाः प्रतिसरं सहस्राभिमन्त्रितमेका-
दशग्रन्थियुतं बालानां गुर्विणीनां च हस्ते बध्वा ता-
श्च सुखेन वर्त्तते धनिकधारणिकेभ्यो भयं न भवति
परि णऽइति वटप्ररोहसमिधोऽयुतं जुहुयादायु-
ष्मन्तः पुत्राऽउत्पद्यन्ते मीढुष्टमेति महाभये चोरभये-
ऽग्निभये प्राणसंशये सङ्कटे वा मनसा जपेत् क्षेमे-
णागच्छत्यायाति च विकिरिद्रेति महाजनविरोधे रा-
ज्ञा वा प्रत्यनीकपरिच्छन्नः सर्वमीडिं जुहुयात्सर्वे
भग्नमनसः शत्रवः पलायन्ते सहस्राणीति महाज-
नमरणे राजोपद्रवे वा शाल्मलिविकङ्कत्यौदुम्बरस-
मिधो यवतिलान्वैतान्मन्त्रखोऽभिमन्त्र्य शतसहस्रं
जुहुयात्[illegible] भूतेभ्यश्चैहि[illegible] रा-
क्षसान्मुच्यतेऽसङ्ख्यातानीति रक्तवासा रक्तोष्णी रक्त-
माल्यानुलेपनो देवमभ्यर्च्य श्मशाने एकवृक्षे नदीपु-
लिने चतुष्पथेऽरण्ये वैकादशशरानर्कमूलपरिवेष्टि-
तान्[illegible]ञ्छमशानाग्नौ प्रदीप्ते प्रक्षिपेद्दश-
चैकैकादशाभिमन्त्रितेन तक्षकाणां शत्रोः प्रतिकृ-
तिं कृत्वोरसि [illegible] तैलेनाभ्यज्य [illegible]स्था-
प्य एकैकेन सहस्राभिमन्त्रितेन शरेणैकादशसु शाखा-
यतनेषु विध्येदासहस्रयोजनगतं शत्रुमायातं भ

मनुमुत्सादयेद्देवासुरयक्षगन्धर्वरक्षोभूतपिशाचादौ शान्त्यर्थं देवं घृतक्षीरेण स्नापयेद्रुद्राध्यायेनाभिमन्त्र्य मा नस्तोक इति वा घृतमधुपायससमयुतं जुहुयादशेषदेशमधिष्ठाप्य कर्पटगृहादिषु मध्यतऽएषऽएव विधिरुत्पादने फट्कारेण सर्वकर्माणि कारयेत् ॥ १० ।
नमोऽस्तु त्रिकेण मध्याह्ने तुषकण्टकाञ्जुहुयात्सर्षपान्वाऽहरहर्भंशाप्रत्यङ्गिरेऽष्टौ देवयोनयः सपिशाचास्त्वरन्ति निशाचराः प्रद्रवन्ति ये यातुधानास्ते सर्वे भस्मीभवन्त्यथ प्रदीप्तेऽग्नौ स्वकेशानालुप्य जुयाद्राक्षसङ्कुलहस्तऽउपतिष्ठते यदुच्यते तत्करोति अथ वा ग्राममुत्सादयति ॥ ११ ॥ अथ वा कृत्यामुत्पादयितु कामो रक्तवासा रक्तोष्णीषो रक्तमाल्यानुलेपनो देवमभ्यर्च्य श्मशानाङ्गारेषु लोहकीलान्प्रादेशमात्रान्महातैलाक्तानाज्यहुतसहस्रं जुहुयादुत्तिष्ठति रक्ताङ्गी रक्तनेत्रोर्ध्वकेशी कृत्या तां क्षिप्रमेव रुधिरमांसेन पूर्णपात्रेण तर्पयेदन्यथा कर्त्तारमेव हिनस्ति सा त्वरितापितेति नामकदूतिकान्वधिष्यामीति वक्तव्यामुकं व्यापादयस्वेति सा तूर्णं वधमुत्पादयति यामाज्ञापयति त्रैलोक्यावस्थितमप्युत्सादयत्यथ वैकैकस्य शरीरस्य ग्रामे गृहे नगरे वा व्याहृतं कर्मेत्याचक्षतेऽथ प्रयोगः शाकयावकपयोभक्षो द्वादशरात्रमुपोष्य लघुभ्यो लघूनि गुरुभ्यो-

गुरूणि सहस्रेषु महितेषु महान्ति तुलापुरुषचान्द्रायणमध्यतऽएषऽएव विधिः कल्पग्रहणे त्वाचार्यमभिवाद्यावलम्ब्य पठेन्न चैवान्यथा पठेदिति न चैवान्यथा पठेदिति ॥ १२ ॥ इति यजुर्विधाने तृतीयोऽध्यायः । ३ ।

पयस्वान्महजर्थं० सङ्क्रामयितुमिच्छन्कर्तुं शिलां कृत्वा कुम्भेनोदकपूर्णेन सहस्राभिमन्त्रितेनात्मानं ठं० स्नापयेदस्मन्नूर्ज्जमिति प्रदक्षिणं परिहृत्य कुम्भे शिलां कृत्वा शत्रोर्नामग्राहं यं द्विष्मऽइति निरस्येत्कुले सर्वरुजस्तस्य सङ्क्रामन्ति विश्वतश्चक्षुरिति महाव्याहृतिवत्कर्म देवस्य दक्षिणायां मूर्तौ मधुघृतपायसाक्तानां पद्मानार्थं० सहस्रं जुहुयात्स्थण्डिलमुपलिप्यार्कप्रस्तरे कृष्णाष्टमीमारभ्य यावत्कृष्णचतुर्दशीं सप्ताहं सुवर्णं लभते यो नः पितेति महाव्याहृतिवत्कर्म ॥ १ ॥ आशुः शिशानऽइत्यनुवाकेनाप्रतिरथेन रथमायुधमात्मानं चाभिमन्त्र्य सङ्ग्रामे प्रविशेज्जयो भवति चौरमहिषव्याघ्रसिर्ठं०हराक्षससर्पादिभयेषु मनसा जपतद्धेमं भवति यमिच्छेत्स्तम्भयितुं तमनेन स्तंभयेदुदेनमित्युदुम्बरसमिदाज्यहोमः प्रजापशुपुष्ट्यर्थे सूर्यरश्मिरित्यर्कसमिद्भिः सुवर्णमुत्पद्यते विमानऽइति द्वयोर्महाव्याहृतिवत्कर्म मध्यन्दिने समुद्रगां नदीं गत्वा द्वीपमध्येऽग्निमुपसमाधाय घृताक्तानां कृष्णतिलाना-

द्गोशतं लभेदेतेनैव हस्त्यश्वमहिषाजाविका व्याख्या-
ताः घृतदुग्धाहुतीनां वारणेन स्रुवेणाष्टसहस्रं जुहुया-
द्धोमान्ते दशमहिषीर्लभते विधेमतऽइति वैकङ्कतीभिः
सर्वसमृद्धः स्यादग्नेऽइति दध्यौदुम्बरीभिःसमिद्भिर्दध्य-
क्तमयुतं जुहुयाद्गृहेऽन्नमक्षय्यं भवति ॥ ३ ॥ सप्ततऽ-
इत्याहुतिसहस्रेण तेजस्वी भवत्युदुम्बरापामार्गति-
लतण्डुलैः सप्तदशसहस्राणि जुहुयात्सप्तसुवर्णं लभे-
त्सर्वनासिकी या कृत्ता पृदुदुम्बरपात्रेण पूर्णाहुति-
होमेन यं लभते महावाते शुक्रज्योतिरिति सप्त-
वारं जपेच्छान्तिर्भवति इन्द्रं दैवीरिति जातिकलिका-
नाम् सुरभिचन्द्रनाक्तानां घृतपूर्णानाम् चतुष्पथे-
भूयायतनेऽग्निमुपसमाधाय शतसहस्रं जुहुयात्सर्वा-
लङ्कारभूषितां एव कन्यां लभते ॥ ४ ॥ इमम् स्तनमि-
ति समुद्रगां नदीं ग[illegible]यीयुतं जप्त्वाऽष्टसह-
स्रं जुहुयाद्ग्रामँल्लभते घृतधारयाऽर्कपुष्पाणि वा सुप्र-
विश्य अयुतं जुहुयादुदुम्बरपत्राणां सवत्सां गां लभ-
ते अपेहेतुं लभते घृतं मिमिक्ष इत्येकादशभिराज्या-
हुतिसहस्रं जुहुयादप्सु प्रविश्य जपेद्रोगभयं न भवति
वाजस्येति सप्तभिः पावमानैराज्यं जुहुयादप्सु जपेद-
क्षिरोगो नश्यति पशुकामस्यैवं श्रीरुद्रश्चेति सर्वौषधी-
न्पयसा शतसहस्रं जुहुयाद्ग्राम्यश्रीर्हयोऽक्षय्या भ-

न्ति च पुष्णाति ॥ ५ ॥ विश्वेऽअद्येति महाव्याहृतिवत्कर्म वाजो नऽइति त्रिभिर्व्रीहीञ्जुहुयादयाचितेन धनमाप्नोति सम्मेति पयोदधिमधुघृतमिश्रान्सर्वव्रीहीञ्जुहुयाद्वर्षति ॥ ६ ॥ ऋताषाडिति षडृचेनाऽऽज्याहुतिसहस्रं जुहुयाद्वर्षति स नो भुवनस्येति गृहवास्तुभ्यऽआज्याहुतिसहस्रं जुहुयाद्वास्तुदोषैर्न लिप्यते याऽस्तऽइति सौभाग्यकामो जपेद्वटप्ररोहसमिद्भिः पुत्रकामो दिवो मूर्द्धेति महाव्याहृतिवत्कर्म मूर्द्धन्नित्यस्याहोरात्रं प्रविश्य जपेदहोरात्रं वर्षतोदर्द्धं हविरित्यात्मनस्त्रोजोबलवृद्धे पयसा होमऽइन्द्रियविकलो जपेत्पूर्णेन्द्रियो दीर्घायुः प्रजावाँश्च स्यादग्नऽआयूंषीत्याज्यं हुत्वा शत्रुगृहे प्रविश्य जपेन्मित्रमिवोपचर्यतेऽपांफेनेनेति जयकामो लाजाञ्जुहुयादाज्यं वा यो भूतानां त्रातारमिति च महाव्याहृतिवत्कर्म महीमूषु तृचेन नावमारोहेत्तृचेमेण तरति ॥ ७ ॥ हिरण्यपाणिमूतयऽइत्यर्कसमिद्भिरयुतं जुहुयात्सुवर्णमुत्पद्यतेऽजीजनऽइति रहस्यो मन्त्रऽएतेन नागा वशमुपयान्ति लौहं त्रिशूलर्द्धं सहस्राभिमन्त्रितं कृत्वा दक्षिणपादेनाक्रम्य पयोदधिमधुघृतैरयुतं हुत्वा विकृतरूपास्त्रियऽउत्तिष्ठन्ति किमस्माभिः कर्तव्यमिति ब्रुवन्त्योऽभिरुचिकामेन ताऽआज्ञापयेतुनमोऽस्तु सर्पेभ्य-

ऽइति तिसृभिरर्घं दद्यादग्न्यागारे गोमयलिङ्गं प्रति-
ष्ठाप्य पञ्चगव्येन संस्नाप्य दक्षिणतः शूलं निखनेत्पु-
नः सहस्रं जपेत्सुवर्णशतँल्लभेत् सिद्धं कर्मेत्याचक्षते दृ-
ष्टौ शिखण्डानतसीपुष्पाणि वा युञ्जन्तीति महाभये
जपेदभयं भवति सर्वकर्म्मसु मध्ये कृच्छ्रेण गायत्र्या शत-
सहस्रं जपेत्पूर्वमेवैतत् ॥ ८ ॥ गणानां त्वेत्यौदुम्बर-
तिलयवापामार्गधान्यादिहोमार्थप्रदस्वतुष्टये वैतद्वशी-
करणे पिचुमन्दपत्रैर्हुत्वा त्र्यम्बकप्रतिकृतिं वल्मीकमृ-
दा कृत्वाऽर्च्चयेन्मार्ठ०समाषोदनमपूपतिलपिष्टकपर-
मान्नफलपुष्पादिभिर्बलिमुपहरेद्रुद्रगणस्यैतानि क-
र्म्माणि भवन्ति सर्वसम्पद्धः स्याद्गायत्री त्रिष्टुविति पञ्च-
भिः शङ्खेनाज्याहुतिसहस्रं होमात्सिद्धिः ॥ महाना-
म्न्यऽइति खादिरस्रुचा तिलतैलं निष्क्रप्याऽष्टसह-
स्रं जुहुयाद्वधबन्धान्मुच्यते वैकङ्कतकण्टकाकटुतैल-
विषरुधिराक्तानां द्विगुणं शतसहस्रं हुत्वा सगणं०
राजानमुत्सादयति ॥ ९ ॥ अथ वशीकर्त्तुमिच्छन् शिखां
परिजप्य बिल्वकण्टकान्हुत्वा राज्ञो रुक्छेदं जनये-
त्सर्वञ्च मध्यमकृच्छ्रो गायत्र्या लक्षं वेन्द्रस्य क्रोडऽइत्यु-
दरमभिमन्त्र्य रात्रौ स्वपेदुदरविकारो न स्याद्विष्ट-
तिमित्याज्याष्टसहस्रं भूमिलाभाय जुहुयाज्जुम्ब-
कायेति वरुणकृदपोमन्त्रोऽश्वमेधावभृथैर्युक्तो ब्रह्मह-

त्यायाः प्रमुच्यते सकृदग्ने जप्तः संवत्सरकृतᳫं स्तेय-
मतिहरत्यानो भद्राऽइत्यनुवाकं ० सततं जपेदायुष्मा-
न्भवति भद्रं कर्णेभिरिति जपेत्पूर्णेन्द्रियो दीर्घायुश्च
यद्दूवध्यमिति जप्त्वा नावसीदति नावसीदति ॥ १० ॥
इति यजुर्विधाने चतुर्थोऽध्यायः ॥ ४ ॥ अग्निस्तेत्यव-
श्यं जपेत्प्रश्नमानयति सकामानिति परेषा व्यवहारे
जपेत्सिद्धिर्लोमादृच्छयो तुल्यौ ॥ यथेमामिति क्षि-
प्रं कर्मारम्भे सिद्धिः प्रियो देवानामिति महाव्याहृ-
तिवत्कर्म्म ॥ बृहस्पतेऽअतीति धनाय जपेदग्निष्टं-
पिबिति तिलान्नयुतᳫं स्रुवेणोद्धृत्य गार्हस्थ्यं न
क्षीयते धान्यमक्षय्यं स्यात्समास्त्वेति नवर्चेन पायसाज्ज-
तीनामयुतं जुहुयाद्गोष्ठमध्येऽग्निमुपसमाधाय गो-
मयेनादीप्य यावतीमिच्छति तावतीं हुत्वा सुविपिता
धेनुर्लभते ॥ १ ॥ समास्त्वेत्यन्वहं ज्वलितमग्निमभिष्टुया-
च्छसमिद्धं ततोऽन्यत्रापि यज्ञो विद्रवन्ति सम्येति वैश्व-
ह्नतीभिर्यवोदधिमधुघृतैः सौभाग्यं स्यात्समन्ना इति तुषक-
णकैः यवनामयुतमाज्येन जपऽइन्दै येत्यन्नाज्येन हु-
त्वा श्रियं विन्दति परेषेति यवाग्वाज्यं हुत्वा ग्रा-
मग्राहमतिनिह ऽइत्याग्निमुपकराविः परैव वदतोऽन-
पवह्नः स्यादनाष्टयाऽइत्यग्निं प्रज्वाल्योल्काममावहलं ब-
ध्वा भयं नाशयति बृहस्पते सवितरिति दधिमधुघृतै-

हुत्वा सुभगः स्यात्कन्यादानसमये१००००जपेद्यावज्जीवं सौभाग्यं भवत्यऽसुत्रभूयादित्यायुः कामो दूर्वानभिघस्ततुषाञ्जुहुयात् ॥ २ ॥ ऊर्ध्वोऽअस्येति वैकङ्कताभिः शत्रुभयं नश्यति जातीकण्टकैर्वचनविधेयस्य तनूनपादसुरऽइति न्यग्रोधमूलेऽग्निमुपसमाधायाशोकपुष्पाणां घृताक्तानाम् शतसहस्रं हुत्वाऽसुरकन्यां पश्यति दृष्ट्वाऽनुवाकशेषे न दद्यादग्निमुखे दिव्यर्ट०सुवर्णं प्रयच्छति नचेत्तूष्णीमनुगच्छेद्भयान्निवर्तते विलप्रवेशनकाले पाणौ गृहीत्वा प्रविशति चिराच्चोषितस्तत्स्वामी भवति रायेन्वित्यनुवाकशेषं निवाते जपेद्वातो वात्येकया च तिसृभिर्घृतं जुहुयाद्वातरोगान्मुच्यते ॥ ३ ॥ अभित्वेत्यस्वहोरात्रं जपेद्वर्षति कया नऽइति माषोदनं तिलमिश्राणामन्नानां त्रिकटुकेनाभ्यज्य चतुष्पथे शून्यायतनेऽग्निमुपसमाधाय शतसहस्रं जुहुयाद्धोमान्ते चित्राङ्गदो विद्याधरराजो दिव्यर्ट०सुवर्णराशिं ददाति ॥ ४ ॥ ऊर्ज्जोनपातमिति दधिमधुघृतैरापभ्द्यो मुच्यते ॥ सँव्वत्सरोऽसीत्याज्यमष्टसहस्रं हुत्वा यावज्जीवमारोग्यं स्यात्प्रेत्याऽइति मधुतिलाक्तशतसहस्रं जुहुयात्सुवर्णमुत्पद्यते न च कश्चिदभिहर्ता भवति ॥ ५ ॥ केतुं कृण्वन्नित्यनुवाकेन रथं शस्त्रमायुधमात्मानं चाभिमन्त्र्य सङ्ग्रामे प्रविश्य जपेज्जयी भ-

वति धन्वनागेति धनुर्वेदमन्त्रः स्वाध्यायाद्यावद्गृणदी-
क्षितः क्षत्रियो भवति सा च दीक्षा त्रिविधा गोब्रा-
ह्मणदेवस्वाम्यात्मनां हितायेत्यात्मानं सन्नह्यतऽइ-
ति मर्माणितऽइति कवचं परिधत्ते धन्वनेति धनुर्गृ-
ह्णीयेते ऽआचरन्ती इतिविस्फुरणं वक्ष्यन्ती वेदिति
ज्याभिमर्शनमहिरिवेति हस्तवेष्टनमभिमन्त्रयते ब-
ह्वीनां पितेति तूणं कलापमभिमन्त्र्य परिधत्ते सुपर्णमि-
ति नेत्र्‌त्यां दिश्येकमिषुं क्षिपेदप ऽउपस्पृश्य वनस्पते
वीड्वङ्गऽइति रथमालभ्य युञ्जन्तीत्यश्वयोजनमसि यम-
ऽइतिवन्धनमाशुः शिशानऽइत्यनुवाकेनालभ्य विष्णोः
क्रमऽइत्यारुह्याजङ्घन्तीत्यश्वताडनमक्रान्दददित्युत्सर्जमा-
ने जपेद्याः सेनाऽइति परसैन्याभिमुखरथं रथं
वाहयेद्रथे तिष्ठन्नित्यवस्थापये त्सदुन्दुभऽइति दुन्दुभि-
स्ताडनमहिरिवेतीषुं गृह्णाति यत्र बाणाऽइति दिक्षु
नयेद्यदक्रन्दऽइतिरथं वाहयेत्तदेवमाविद्धाविध्य ध-
न्वाणां चालनमेव युध्यमानेऽपराजितो भवति यक्रो-
णापि युध्येत् ॥ ६ ॥ यमेन दत्तमित्यश्वानभिमन्त्रयेच्छ्रा-
न्तान्पुनस्त्वोणितऽइत्यश्वग्रन्थीन्मोचयेन्मही ॥ २८ ॥ इन्द्रऽ-
इत्यासनमिन्द्रो वृत्रमिति रथं कुतस्त्वमिति योधास्सह-
सामभिभाषयेत्तान्प्रतिजपेत्सुसमिद्धायेत्याहवनीये स-
मिधमादधाति न तद्रक्षाᳪसीत्याज्याहुतीनामयुतं जु-

हुयात्क्षत्रियाणां क्षत्त्राणाय गतायुरपि दीर्घायुर्भवति
शं नो देवीरित्युपस्थाय प्रविशेद्देवा रयादीचा ब्राह्म-
णोऽपि प्राणसंशये शस्त्रमाददीत यमेन दत्तमित्यश्वं
सकृदाज्याहुतीनामयुतं जुहुयाच्चतुरश्वयुक्तरथं रथं
लभतेऽसियम इति मधुतिलाञ्जुहुयाद्देवमनुलेपना-
दिभिरर्चयेद्विद्वान्पापो भवति ब्राह्मणमपि लक्षहोमेन
तारयेत्समिद्धोऽग्रद्येति होमकाले देवतानामाह्वान-
मग्नये गायत्रायेति सार्वकामिकं चरुं कुर्यात् ॥ ७ ॥
विश्वानि देवेति महाव्याहृतिवदादित्यमुदयउपति-
ष्ठेद्विपापो भवत्युदकसक्तुाहारी मासमेकमन्वहं स-
हस्रं जपेद्ब्रह्महत्यादेरपि मुच्यते विभक्तारमिति सप्त-
म्यां कुशपुष्पराजां कृत्वौदुम्बरसमिधो यावच्छुष्यति रा-
वत्पुष्पाराधार्द्रकेशस्य साहस्रिकं कर्म महानर्थो जायते
गोशफेना व्याहुतिहोमो गोकामाय मध्याह्नान्न-
पिंडं तहस्त्राभिमन्त्रितं निवेशयेद्रव्यमन्नं स्वादने वुभु-
क्षित आदित्याभिमुखो जपेत्सर्वतो भोजनं लभते ॥ ८ ॥
सहस्रशीर्षेति महाव्याहृतिवद्देदाहमित्यासु प्रविश्या-
होरात्रं जपेदामध्याह्नाद्वर्षति यो देवेभ्य इति रु-
चमिति रोचनामन्त्या महाव्याहृतिवच्छ्रीश्चेति कुमुद-
सौगन्धिकोत्पलान्युप्य हुत्वा श्रीमान्भवत्युत्तरनाराय-
णेनादित्योपस्थानं कामं नामग्रहणं च यथेष्टं कामं

सर्वत्र सिद्धं कर्म सद्सस्पतिमिति चन्द्रग्रहे निराहारो वचां ब्राह्मीं वा सहस्राभिमन्त्रितां पिबेत्परममेधावी स्याद्यांमेधामिति जपेदिदं मऽइति च श्रीकामो नित्यम् ॥ ९ ॥ अग्नाजरासऽइत्यग्निमुपतिष्ठेद्वरदो भवति तेजस्वीत्र द्वयोर्महाव्याहृतिवत् त्रीणि घृताऽग्नेघर्देति त्रिमधुरैः सौभाग्यं प्रवो महेऽइति भूमिकामस्तिलतण्डुलैरिन्द्रो वृत्रमित्यत्र पुष्टयाऽआयुषऽआज्यमाज्ञ ऽइत्यौदुम्बरीभिर्द्धनकामो विम्राडित्यनुवाकठं॰ सततं जपेत्प्रजाकामस्तेजस्वी निरुजश्वानऽइडाभिरित्यौदुम्बरीभिः पशुकामो यद्द्येति वासकादिभिर्वशीकरणं तिलकेन तत्सूर्यस्येति चक्षुष्मान्भवति वरामहानिति महाव्याहृतिवच्छायनऽइवेति तिलान्पुष्पाणि वा हुत्वा वास्तुपे शतपुष्पीं वा सुभगः स्यात् ॥ १० ॥ आकृष्णेनेति महाव्याहृतिवत्कर्म करवीरपुष्पाणि १०००० हुत्वा तप्तं सुवर्णं लभेदद्दरिद्रस्त्वेन्द्रवायूऽइन्द्राग्नी मित्रावरुणेति देवताह्वानं सिद्धयेऽग्नऽइन्द्राग्ने रुद्राऽइति वारुण्यां गच्छेत्क्षेमं भवत्यवीश्वऽइति घृतेन सर्वभयनाशनं मित्रठं॰ हुवऽइति घृतठं॰ हुत्वा शिष्टं पिबेन्मेधावी स्याद्दरवेभिरिति लाजाभिर्हिरण्यं गावऽउपेति दधिमधुघृतैः पशुपुत्रसमृद्धिकामऽउपनोऽनुत्तमेति चेमाऽउ त्वेति पावका-

य प्रतिकमीस्याजरासऽइत्यध्यायेन सर्वदेवताराधनं कुर्य्यात्प्रतिदिनं काममेकैकं लभतेऽध्ययनेन मासात् ॥ ११ ॥ यज्जाग्रतः षड्भिः शिवसङ्कल्पेन मानससमाधिः पितुन्निन्वति शत्रुनामग्राह्याभिचाराणि जुहुयात्कर्म षट्कं सिद्धान्म्रियते पञ्च नद्यऽइति पद्मपुष्पाणि रक्तचन्दनघृताक्तानि लक्षं हुत्वा साक्षात्पद्ममालिनीं पश्यति यावज्जीवं धनं प्रयच्छतीष्टसन्दिं च सिनीवालीति प्रजाकामोऽन्नं जुहुयात्अन्वदित्य.युध्यं वटारोहौदुम्बरदूर्वाश्च त्वन्नऽइति पुत्रपशुरक्षार्थमाज्यं जुहुयादुत्त.नामवेति सद्योजातमात्रवत्सावलीढायां वा जिह्वां उपस्पृशेद्गावऽअक्षय्या भवन्ति । इडायास्त्वेति गोशफेनाज्याहुतिरुहस्त्रं जुहुयात्धेनुशतंल्लभते । त्वमग्ने प्रथमऽइति नित्यमग्निं स्तुनुयात्सर्वसम्बद्धो भवति प्रवो महऽइति षड्चेन पितृनर्च्चयेत्प्रजाकामऽआहुतिसहस्त्रं जुहुयात्गोशतं लभते देवेनेति यद्धनमिच्छेत्तावन्ति सव्रीहीञ्जुहुयात्प्रभुत्वं लभते सोभी धेनुमिति सोमचन्द्रग्रहेऽनुदितसुपतिष्ठेत्तन्मासे क्षेममौदुम्बरीभिर्हुत्वा हिरण्यप्राप्तिः स्यादष्टौ वीति महाव्याहृतिवद्धिरण्यपाणिरिति चाभिचारवर्ज्जमादित्योपस्थानठं हिरण्यहस्तऽइति सर्पानभिमन्त्र्य रक्षार्थो भवति

ये ते पन्थाः क्षेमेण गच्छति क्षेमकारिण्युभा पिबतमिति रूपकामोऽश्विनौ स्तुयादुषस्तदिति प्रातर्दिवा स्वस्त्ययनमनाद्यं च पुत्रार्थी द्रव्यहोमस्तदर्थं महाव्याहृतिवत्प्रातर्जितमिति च यदा बध्नन्निति हिरण्यठं० सत्त्वाभिमन्त्रितं दक्षिणहस्ते बध्नीयात्सर्वेषां पापचक्षुषां दृष्टिदोषमपोहति न च राजाविरुद्धमाचरेत्प्रियदर्शनो भवति ॥ १२ ॥ इति यजुर्विधाने पञ्चमोऽध्यायः ॥ ५ ॥

परं मृत्यविति बालानां गुर्विणीनाठं० हस्ते सूत्रबन्धो भूतप्रेतादि नाशयति जपहोमौ च प्रौढगर्भे गर्भस्रावे बन्ध्यात्वे च मृतवत्साम्रुतौ सार्ठंसपललापूपजाङ्गलिकारण्यमांसपयोदधिमधुघृताक्तमन्नं निवेद्य सर्वकामिकमन्नठं० भुक्त्वा शेषभुग्जप्त्वा मैथुनमुपेयाद्गर्भस्तिष्ठति प्रथमे पतिते आवाहनं द्वितीये पोषणं तृतीये तर्पणं पञ्चमे गर्भस्तिष्ठेदमोघं कर्मापामार्गमित्यपामार्गहोमः सर्वदुरितदुःस्वप्ननाशनऽआयुष्मानित्याज्यनायुषे रक्षायाऽइमं जीवेभ्यऽइति सीतालोष्टठं० सहस्राभिमन्त्रितं चतुर्दिक्षु क्षिपेद्दुष्टभयं न स्यात्पीमऽइति शिखाबन्धो मंडलबन्धश्चात्मरक्षार्थाय वशीकरणे तुषहोमो महाभये जपेदभयं भवति राजानमीक्ष्य जपेद्वश्यो भवति हन्तुमागच्छन्तं दृष्ट्वा जपेत्प्रणामति भक्ष्यपुष्पफलादीनि दद्याद्वश्यार्थे च स्योना

पृथिवीति महाव्याहृतिवत्कर्म्म ॥ १ ॥ ऋचं वाचमितीन्द्रियविकलो जपेत्पूर्णेन्द्रियो भवति यन्मऽइति कर्मसमाप्तौ दोषपरिहारार्थञ्जपेत् इन्द्रो विश्वस्येति द्विपदचतुष्पदां शान्तिः क्षीरहोमाच्छान्तिर्भवति शन्नो मित्रऽइति जनमरणे चोपसर्गाभिचारेषु ज्वरादिरोगे स्वाध्यायसमाप्तौ व्रीहिहोमः शान्त्यै विषमग्रहे त त्समिद्धोमः द्यौः शान्तिरित्यभिचारवर्ज्जं सर्वकर्मसिद्धिर्यतो यतऽइति जपेदभयकारिणीम् सुमित्रिया नऽइति जलमञ्जलिनादाय दुर्मित्रियाऽइति द्वेष्यं प्रतिनिक्षिपेत्तमुत्सादयति तच्चक्षुरिति जपेदारोग्याय पुष्ट्यै ॥ १२ ॥ यमाय त्वा जपेदन्वहꣳ सर्वसस्त्रद्धो त्रिदितश्च स्यात् ॥ २ ॥ अनाधृष्टेति पञ्चचतुर्भिः पयोदधिघृतमधुतिलैर्जुहुयाद्यथासङ्ख्यमायुः प्रजापुष्टिधनतेजस्कामो विश्वऽइति निमित्ते जपेद्धर्त्ता दिवऽइति बुद्धिभ्रंशनाशनी हृदे त्वेति मतो ग्लानौ कर्मसमृद्धिः पिता नऽइतिमहाव्याहृतिवत् ॥ ३ ॥ इडऽएहीति यामेव धेनुमिच्छेत्तस्या नाम परिजप्य गोस्वामीति शब्दं वदेत्तस्यैवापतति गोमयेन गोः प्रतिकृतिं कृत्वा तन्नाम्ना बध्वा सव्येन गृहीत्वा पयोदधिमधुघृतं जुहुयात्तामेव धेनुं लभते यस्ते स्तनऽइति सर्वकर्माणि सिद्ध्यन्ति स्वाहा सूर्यस्येति वृष्टिकामः

पयो जुहुयात्सद्यो वर्षति समुद्रायेति वातनामानि जपेद्वातो वाति दिविधाऽइति दधिसहस्रं हुत्वा-सविता प्रसीदति व्रीह्यादिभिः पुष्टिर्वीरयैर्ष्टिर्वै-तसगुडक्षीरैस्तैलाक्ताभिः सहस्रं जुहुयात्स्वाहा रुद्रायेति रहस्यो मन्त्रः गवेधुकतण्डुलान्जुहुयाद्धन-कामः ॥ ४ ॥ स्वाहा प्राणेभ्यऽइति महाव्याहृतिव-त्कर्म तं ग्रामे कुर्यान्मनसः काममिति श्रीनाम्ना सर्वा-भ्युदयसिद्धः फलति गोधर्मेनाज्यहो १००० मेन गो-लाभो गोमयहोमेन सिद्धिरुग्रश्चेति विसुखाख्यो मन्त्रः सर्वकामप्रदो गोपशुमरणे गोष्टे वैकङ् १०००० कतो-र्हुत्वा शान्तिः रुग्रंलोहितेनेत्येकादशयजुर्भिंद्रुद्रंव्यका-मवज्ञं महाव्याहृतिवत्प्रतिदिनमेकादशचरून्प्रतिम-न्त्रं निर्वपेदेकारशैत्र धेनवऽउत्पद्यन्तऽएवमन्येष्वपि कामेषु हुत्वाऽध्यायशेषेणादित्यमुपतिष्ठेदनेनास्य क-र्मणां फलमाप्नोत्यग्नेनयेति नमस्कारोक्तिरग्निस्तुति-रात्मनो वा कर्मसमाप्तौ समाधौ च हिरण्मयेनादि-त्योपस्थानमोमित्येकाक्षरस्य परब्रह्मणो नामधेयं वेदा-रम्भे समाप्तौ च जपहोमादिषु शान्तिपुष्टिकर्म चै-तत्प्रयुज्यतऽएतद्विदित्वा सर्वविद्भवत्येतदुपास्य रवि-सिद्धिभाग्भवति कल्याणतरो भवत्येतत्कर्मफलप्रति-पादकं पूर्वकर्मफलाभावादभावक्षतस्य कर्मणः स वेद-

फलयुक्तस्य कर्मणो नास्ति नैव फलमिति तच्छ्रत्यपेक्षया ऽमुष्मिंल्लोके कृतस्य कर्मणः फलं हि संपत्तिः प्रत्ययं च न च विद्याधरपादप्रसारितधनानां जनपूर्ववर्णरसेषु नास्ति यज्ञविरोधित्वादित्यनेनैव प्रकारेण सर्वे मन्त्राः प्रकीर्तिता ये नोक्तास्ते च सर्वे यथास्कारा ऽथ वा सर्वमन्त्राणां विस्तरेण पृथग्विधानं विस्तरेण पृथग्विधानमिति ॥ ५ ॥ इति श्रीयजुर्वेदवाजसनेयसंहितायजुर्विधाने षष्ठोऽध्यायः ॥ ६ ॥ समाप्तोऽयम् ॥

---

# अथ स्वराष्टकशिक्षा ॥

ओं हरिः ॥ ओम् साम्ब ॥ अऽइऽउऽऋऽलृऽएऽऐऽओऽऔ-ऽइत्यष्टौ स्वराः ॥ पदान्तपदाद्योः सन्धिः ॥ पदान्तपदाद्योर्य्य एकः प्राणयोगः स सन्धिरुच्यः स्यात् ॥ न परकालः पूर्व्वकाले ॥ पुनः पूर्व्वकालसन्धिः विधाने परकालसन्धिं न प्राप्नोति ॥ एकम् ॥ १ ॥ अऽआसपरे ॥ तत्र अग्रम् ॥ तत्राग्रम् ॥ २ ॥ एकारमिवर्णे ॥ तत्र इदम् ॥ तत्रेदम् ॥ ३ ॥ ओकारमुवर्णे ॥ तत्रऽउदकस्योदः ॥ ४ ॥ आऽअरकारे ॥ स्वाहाऽऋषभम् ॥ स्वाहऽर्षभम् ॥ ५ ॥ ऐकारमे ऐपरत्वे ॥ तत्रऽएतत् ॥ तत्रैतत् ॥ तत्रऽऐश्वर्य्यम् ॥ तत्रैश्वर्य्यम् ॥ ६ ॥ औकारमोऽऔपरत्वे ॥ तत्रऽओजः ॥ तत्रौजः ॥ प्रऽऔचन् ॥ प्रौचन् ॥ ७ ॥ इर्य्यं स्वरे ॥ व्याजिऽअर्व्वन् ॥ व्याज्यर्व्वन् ॥ विऽऊर्णुषे ॥ व्यूर्णुषे ॥ असिऽऋतस्य ॥ अस्यृतस्य ॥ ८ ॥ इरिमिवर्णे ॥ विऽइत ॥ वीत ॥ ९ ॥ उर्व्वं स्वरे ॥ नुऽइन्द्र ॥ न्विन्द्र ॥ १० ॥ ऊदमुवर्णे ॥ अनुऽउत् ॥ अनूत् ॥ ११ ॥ ऋकारो रेफ स्वरे ॥ धातृऽअंशः ॥ धात्रंशः ॥ १२ ॥

स्वर्णं ऽऋकारस्वर्णं ॥ होतृऽऋकारः ॥ होतृकारः ॥ १३ ॥ एकारोऽयं स्वरे ॥ ॥ अग्ने ऽआयाहि ॥ अग्नऽआयाहि ॥ १४ ॥ ओकारो ऽवं स्वरे ॥ विष्णोऽएतं ॥ विष्णावेते ॥ १५ ॥ ऐरावं स्वरे ॥ भूम्यै ऽआवन् ॥ भूम्याऽआवन् ॥ १६ ॥ एऔरावं स्वरे । उभौऽइन्द्रौ ॥ उभाविन्द्रौ ॥ १७ ॥ ओपराकारो लोपम् ॥ अदब्धायोऽअशीतम ॥ अदब्धायऽशीतम ॥ १८ ॥ तत्राद्यलक्षणम् ॥ एपराकारो लोपम् ॥ तेऽअवन्तु ॥ तेवन्तु ॥ १९ ॥ वो लोपं सुऽओऔषु । उभौऽउ ॥ उभाऽउ ॥ उऽओऽऔष्विति किम् ॥ पर्ल्क्यावहोरात्रे । २ । इत्यनन्तकृताच्सन्धिः ॥ अथ स्वरप्रकरणम् ॥ उदात्तानुदात्तस्वरितप्रचयाः स्वराः ॥ १ ॥ अताम्रउदात्तः ॥ २ ॥ यथा ॥ ग्राम् ॥ प्र ॥ नु ॥ द्वितीयस्य यथा ॥ अग्नो रक्षोऽनुदात्तः ॥ रुद्रऽईड ॥ ३ ॥ तृतीयस्य च यथा ॥ उर्वरि रक्तस्तिर्य्यग्रक्तो वा स्वरितः ॥ स्वं ॥ स्वं ॥ स्वं ॥ ४ ॥ न्युब्जपराऽताम्राऽउदात्ताः ॥ स्वाहा ॥ स्वर्णार्कः ॥ ५ ॥ चतुर्थस्य च यथा ॥ स्वरितपराऽताम्रः प्रचयाः । त्र्यम्बकँय्यजामहे । ६ । स्वरितः पञ्चधा ॥ जात्याभिनिहितक्षैप्रप्रश्लिष्टभेदात् ॥ एकपदे नीचपर्व्वेऽसर्व्वो वा यवा-

न्यतरयुक्तो नाप्यः ॥ धान्यम् । स्वः ॥ ७ ॥ उदात्तादे-
र्घोरचोऽभिनिहितस्वरितो भवत्यकारलोपे सति ॥ ते-
ऽग्रवन्तु । तेऽवन्तु ॥ वेदः असि ॥ वेदोऽसि ॥ ८ ॥ उदात्त-
ऽइऽउस्थाने यवयोः परोऽनुदात्तः क्षैप्रः ॥ द्युयोद्यस्म-
त् ॥ नुऽइन्द्र ॥ न्विन्द्र ॥ ९ ॥ उदात्तानुदात्तयोर्ह्रस्व-
योः स्थानेऽइकारः प्रश्लिष्टः ॥ विऽइत ॥ वीत ॥ १० ॥
अनुदात्तपूर्वजात्यादयस्त्वारः पित्दानवद्धस्तम् ॥
वायव्यैः ॥ भुवः स्वः । तेऽवन्तु ॥ वेदोऽसि ॥ अ-
भ्यभि ॥ योजान्विन्द्र ॥ दिवीव ॥ ११ ॥ अनुदात्तपू-
र्वजात्यादयस्त्वारो मनुष्यदानवदुदात्त ॥ भूर्भु-
वः स्वर्द्यौः ॥ सदन्यमिति ॥ रुद्रेभ्यो येन्तरिक्षे ॥ स-
मोस्पूर्णम् ॥ युयोद्यस्मत् ॥ अरत्वन्तः ॥ दिवीवेति ॥ १२ ॥
अनुदात्तऽउदात्तस्वरितयोः ॥ येभि ॥ स्वर्ग्या येऽभि ॥ सोऽ
हम् । युर्वन्तरिक्षम् । वीदम् ॥ स्वस्तभितं स्तभितं
स्वः स्वस्तभितम् ॥ १३ ॥ अननुदात्तपूर्वजात्यादयस्त्वा-
रः कम्पमूले ऽउदात्तस्वरितपरत्वाऽभावे ॥ न्यङ् ॥ स्वः ॥
तेऽवन्तु ॥ सोऽस्मि ॥ त्र्यम्बकम् ॥ न्विन्द्र ॥ वीत ॥
१४ ॥ उदात्तात्परानुदात्त स्वरितम् ॥ इषे त्वा ॥
१५ ॥ नोदात्तस्वरितपरत्वे ॥ इषे त्वोर्ज्जे ॥ ईशा वा-
स्यम् ॥ स्वरितादनुदात्तानां प्रचयः ॥ वायवस्थ ॥ १६ ॥

नोदात्तस्वरितपरत्वे ॥ व्वायवस्थ देव: ॥ व्वाय्यमिद-म् ॥ १७ ॥ उदात्तवानेको ह्युदात्त: ॥ प्रऽअर्पयतु ॥ प्रार्प्पयतु ॥ १८ ॥ उदात्तान्निहितस्स्वार: स्वरितात्प्रचयो भवेत् ॥ उदात्तात्स्वरितात्पूर्वो नान्यऽआपद्यते-स्वर: । इति स्वराङ्कुश: ॥ कुचैलिनं दन्तमलापधा-रिणम्बह्वाशनन्निष्ठुरवाक्यभाषिणम् ॥ सूर्योदये चा-स्तमये च शायिनञ्जहाति लक्ष्मीरपि चक्रधारिणम् ॥ अथ हस्तप्रक्षेपलक्षणम् ॥ अनुदात्तो हृदि ज्ञे-यो मूर्द्धन्युदात्तऽउदाहृत: ॥ स्वरित: कर्णमूले स्या-न्नासाग्रे प्रचयस्स्मृत: ॥ ३ ॥ इषे त्वा ॥ व्वायव स्थ ॥ उदात्तादनुदात्तं तु वामाया भुवऽआरभेत् ॥ इषे त्वोर्ज्जे ॥ उदात्तात्स्वरिते चैव क्रमाद्दक्षिणतो न्यसे-त् ॥ ४ ॥ इषे त्वा ॥ इत्यनन्तकृतं स्वराष्टकम् ॥ २ ॥ कटतपा गडदबानग्नि ॥ ऊक् ॥ असि ॥ ऊर्ग्गसि ॥ सम्म्राड्असि ॥ सम्म्राडसि ॥ उत्वयम् ॥ उद्वयम् ॥ त्रिष्टुप् इति ॥ त्रिष्टुबिति ॥ १ ॥ कटतपा ङणनमा: प-ञ्चमे । व्वाक्मनं ÷ ॥ वाङ्मनं ÷ ॥ व्वट्महान् ॥ व्वण्म-हान् ॥ तत् मित्रस्य ॥ तन्मित्रस्य ॥ अनुष्टुप्माल्या ॥ अनुष्टुम्माल्या ॥ १ ॥ तदनाश्च जञा: शचवर्गयो: ॥ तत् चित्रम् ॥ त-च्चित्रम् ॥ तत् जुषस्व ॥ तज्जुषस्व ॥ आदित्यानस्स-

श्रुभिः ॥ आदित्यास्श्रश्मश्रुभिः ॥ ३ ॥ तौ लँल्लि ॥ परिचित् । लोकम् ॥ परिचिल्लोकम् ॥ ४ ॥ अनुनासिकलँल्लि ॥ तान्लोकान् ॥ तँल्लोकान् ॥ ५ ॥ ह्रस्वपरङ्णौ द्विर्भावं स्वरे ॥ दध्यङ् ऋषिः ॥ दध्यङ्ङृषिः ॥ अस्मिन् । ऊर्ज्जम् ॥ ६ ॥ नः शच्छयोः पूर्वस्यानुनासिकम् ॥ अहीन् च ॥ अहीँश्च ॥ ७ ॥ नः सन्तथयोः पूर्वस्यानुनासिकम् । तान् । त्वम् । ताँस्त्वम् ॥ ८ ॥ मः परपञ्चमं स्पर्शे ॥ व्रतम् । कृणुत । व्रतङ्कृणुत । व्रतञ्चरिष्यामि ॥ आगमकेन ॥ ९ ॥ ङ्णौ काभ्यां सकारे ॥ ङ्णौ कागमतागमौ प्राप्नुतः सकारे ॥ प्राङ् सोमः ॥ प्राङ्क्सोमः ॥ चीन्समुद्रान् ॥ चीन्त्समुद्रान् ॥ १० ॥ मोऽनुनासिकयवलान्यवलेषु ॥ सम् । यौमि ॥ सँय्यौमि ॥ तम् । वः ॥ तँव्वः ॥ तम् । लोकम् ॥ तँल्लोकम् ॥ ११ ॥ मः एकारं शषसहरेफेषु ॥ सꣳशिमं ॥ हवीꣳष्या ॥ सꣳशिशाधि ॥ सꣳसः ॥ अपाꣳ रेताꣳसि ॥ १२ ॥ श्चयः परः शश्छ इति । तत् । शुक्रम् ॥ तच्छुक्रम् ॥ १३ ॥ झयः परो हः चतुर्थम् ॥ भिषक् । होमः ॥ भिषग्घोमः ॥ तत् । हविः ॥ तद्धविः ॥ सम्राट् होमः ॥ सम्राड्ढोमः ॥ १४ ॥ स्वरपरसंयोगादिर्द्विः ॥ इषे त्वा ॥ इषेत्त्वा ॥ १५ ॥ रहाभ्याम-

इषेत्त्वा

रः ॥ सूर्य्यम् । बाह्यम् ॥ १६ ॥ स्पर्शोष्मान्तस्त्या-
भ्यः ॥ व्वायवस्थ ॥ व्वाग्रवस्त्थ ॥ १७ ॥ इत्यनन्तकृ-
तो हलसन्धिः ॥ अरविसर्गऽऽअहशोः । शिव÷ । अ-
सि ॥ शिवोऽसि ॥ देवेभ्य÷ । हविः । देवेभ्यो हविः ॥ १ ॥
आपरो लोपमऽआपरत्वे । देवाःऽ । अत्र । देवाऽअत्र । देवा-
ःऽआशाःऽ ॥ देवाऽआशाःऽ ॥ २ ॥ अपरो लोपमा पर-
त्वे ॥ देवाःऽआशाःऽ । देवाऽआशाःऽ ॥ ३ ॥ आपरो
लोपर्ठं हशि ॥ देवाःऽ । हसन्ति ॥ देवा हसन्ति ॥
४ ॥ अआपरो लोपमिचि ॥ देवाःऽ । इह । देवाऽइह ॥ अ-
हन्याःऽ । इन्द्राय । अहन्याऽइन्द्राय ॥ ५ ॥ रेफतऽ-
इच्चास्य रेफमशि ॥ सवितःऽ जजान ॥ सवि-
तर्ज्जजान ॥ अग्निःऽ एकाक्षरेण । अग्निरेकाक्षरेण ॥
६ ॥ रेफजेव्वरो लोर्ठं रेफे पूर्व्वस्य दीर्घम् ॥
प्रातःऽ रात्रिः ॥ प्राता रात्रि÷ ॥ रुरु÷ रौद्रःऽ ॥
रुरू रौद्रःऽ ॥ ७ ॥ स्यसऽएवविसर्गो लोपर्ठं व्यञ्जने ॥ ए
षः स्यः । एषस्यः ॥ स्यः राध्यः ॥ स्याराध्यः ॥ सः । नःऽ
सन÷ ॥ ८ ॥ सः ते । सत्ते ॥ नम÷ ते ॥ नमस्ते ॥ ९ ॥
चच्छ रत्वे शम् ॥ व्वाज÷ च ॥ व्वाजश्च ॥ १० ॥
लोपङ्खर्प्परे शरि ॥ अन्धःऽ स्थ । अन्धस्थ ॥ ११ ॥
इतिविसर्गसन्धिः ॥ अइउण् ॥ १ ॥ ऋऌक् ॥ २ ॥

एओङ् ॥ ३ ॥ ऐऔच् ॥ ४ ॥ हयवरट् ॥ ५ ॥ लण् ॥ ६ ॥ ञमङणनम् ॥ ७ ॥ झभञ् ॥ ८ ॥ घढधष् ॥ ९ ॥ जबगडदश् ॥ १० ॥ खफछठथचटतव् ॥ ११ ॥ कपय् ॥ १२ ॥ शषसर् ॥ १३ ॥ हल् ॥ १४ ॥ अज्झीनं परेण संयोज्यम् ॥ इति स्वराष्टकं संपूर्णम् ॥

---

# क्रमकारिकाशिक्षा ॥

श्रीगणेशाय नमः ॥

प्रणम्याद्यं दिनमणिं योगीश्वरशिरोमणिम् । सर्वज्ञं याज्ञवल्क्यं तच्छिष्यं कात्यायनम्मुनिम् ॥ १ ॥ सर्वं याजुषमन्त्राणां वेदे वाजसनेयके । क्रमावसानविषयां कारिकामारभामहे ॥ २ ॥ श्लोके विंशादिरहितः प्रतीकेषु न दुःसहः ॥ प्रत्येकम् प्रथमा षष्टी सप्तम्युक्ताश्च कल्पते ॥ ३ ॥ पदानामानुपूर्व्येण क्रमएषः प्रवर्तते । गणान्तानां क्रमो नास्ति इति कात्यायनोऽब्रवीत् ॥ ४ ॥ न वेष्ट्याश्च द्विवेष्ट्याश्च त्रिवेष्टयाश्च तथा परे । चतुर्व्वेष्टयो मध्यवेष्टयः पञ्चवेष्ट्य इतीरितः ॥ ५ ॥ अवग्रहोऽनुवाकान्ते अर्द्धर्चान्ते ऋचां तथा॥ यजुषां वाक्यावसानेष्विति साधारणो विधिः ॥ ६ ॥ प्रत्यक्षं याज्ञवल्क्यं श्रीशम्भुमिश्रविनिर्म्मिता॥ क्रियतां क्रमितैः कण्ठैः कारिका रत्नमालिका ॥ ७ ॥ ह्रस्वपूर्वो ह्यनुस्वारो दीर्घोनुस्वारभाग्भवेत् ॥ द्विशः परस्वेन्न तथा क्रमकाले तु वाजिनाम् ॥ ८ ॥ ओ३म् ॥ इषेत्वेत्ययमध्यायो ह्यनुवाकान्तवेष्टनः ॥ गायत्रेण त्रिवेष्ट्योऽत्र पुरा क्रूरत्रिवेष्टनः ॥ ९ ॥ देव स-

वितस्त्विष्टद्व्येकमेषा ते तु द्विवेष्टनः । एतन्ते द्व्येकता त्वग्नीषोमयोरनुवाकष्टत् ॥ १० ॥ इग्गने दध्याय ऽ एकत्व न्देवागातुविदे द्विष्टत् ॥ सम्बर्ह्यादिषट्कैकासुरु व्विष्णो द्विवेष्टनः ॥ ११ ॥ ततोऽसिद्वे त्रिचतुष्कैकं सँव्वर्चेति द्वि-वेष्टनः ॥ यज्ञसञ्चेत्येकतात्वेऽग्नये कव्येति न वेष्टनः ॥ १२ ॥ यु रुद्विष्टन्नमो द्वैकमाद्यन्तोर्ज्जरूपोर्द्विष्टत् । स-मिधाद्यष्टसु द्विष्टदग्निर्ज्योतिः षडैकता ॥ १३ ॥ इन्द्रः पञ्चादिवेष्ट्यः स्यात्समिदं पञ्चवेष्टनः ॥ उपप्रषट्स्वपि द्विवृत्तनूपात् सप्तकैकता ॥ १४ ॥ उपत्वा पञ्चसु द्विष्टदि-डऽएह्यन्तवेष्टनः ॥ सोमानाद्यष्टसु द्विष्टत् परिते दूडभ-स्त्विष्टत् ॥ १५ ॥ भूर्भुवः स्वोनुवाकैक्यं प्रघासीति द्विवे-ष्टनः ॥ यद्ग्रामेत्यन्तवेष्ट्यः स्यान्मो पूर्णेति द्वयोर्द्विवृत् ॥ १६ ॥ अवभृथेत्यन्तवेष्ट्यः पूर्णादर्व्येष्टसु द्विष्टत् ॥ एष-तैका त्र्यम्बकयोर्द्वयोर्द्विष्टत्परोऽन्तष्टत् ॥ १७ ॥ वाजि-नीत्वाज्यो द्विवेष्ट्यो वाज्यश्मपञ्चकैकता ॥ एदमादित्रिषु द्विष्टन्महीनां युगलैकता ॥ १८ ॥ आपो द्विवेष्टनः स्वाहा यज्ञमित्यन्तवेष्टनः ॥ आकूत्यै प्रयुजे त्रिष्टद्वि-श्वो देवस्य तु द्विष्टत् ॥ १९ ॥ ऋक्सामयोस्चतुष्कैक्यं व्रतं कृणु सप्तैकता ॥ त्वमग्ने व्रतपाद्विष्टद्रास्त्वे पञ्चा-न्तवेष्टनः ॥ २० ॥ एषा ते पञ्चकैकत्वं व्वस्व्यादिस्चतु-रैकता ॥ एष ते युगलैकत्वमभित्यन्तद्विवेष्टनः ॥

२१ ॥ प्रजाभ्यस्त्वाऽनु इष्टं इन्द्रस्य प्रथमाद्द्विर्यान्तवेष्टनः ॥ सम्मेऽर्क्षं शुक्रान्तपसस्तन्वादिचतुरेकता ॥ २२ ॥ प्रतिपन्त्यानि द्विवेष्ट्यः स्यादादित्यास्त्वक् द्विवेष्टनः ॥ त्वनेषु युगयोर्द्विष्टदुस्त्वावेतं युगैकता ॥ २३ ॥ नमो मित्रस्य तु द्विष्टद्वरुणस्य त्रिष्टत्परः ॥ अग्नेस्तनूर्युगैकत्वं भवतन्नो द्वयोर्द्विष्टत् ॥ २४ ॥ आपतयेत्त्वेन्द्रघोषस्त्वाऽनुवाकान्तवेष्टनः ॥ युञ्जतेति त्रिषु द्विष्टद्देवश्रुतयुगैकता ॥ २५ ॥ विष्णवादि त्रिषु द्विष्टद्विष्णोरराटमन्तष्टत् ॥ आददे पञ्चकैकत्वं यवोऽसि चतुरैकता ॥ २६ ॥ परित्वा गिर्वणो द्विष्टदिन्द्रस्य स्यूरयान्तष्टत् ॥ विभूरस्यानुवाकैक्यं ज्योतिर्वैष्टचतुष्कवान् ॥ २७ ॥ अग्ने नय द्वयोर्द्विष्टद्देव सवितस्त्वयैकता ॥ अत्यन्न्यान्त्वितयैकत्वमयं द्वित्वा द्विवेष्टनः ॥ २८ ॥ अग्रेणीरन्तष्टद्या ते त्रिषु द्विष्टत्परोऽन्तष्टत् ॥ उपावीरस्य मनस्ते युक्ते त्वेत्यनुवाकष्टत् ॥ २९ ॥ समुद्रादिचतुष्कैक्यमिदमापो द्वयोर्द्विष्टत् ॥ अग्नेर्व्वस्त्वग्नवेष्ट्यः स्यादमूर्य्यास्तु द्विवेष्टनः ॥ ३० ॥ हृदे त्वा युगलैकत्वं श्रुष्टीत्वग्निर्द्विवेष्टनः ॥ देवीरापस्त्वैकत्वं यमग्ने पृत्सुवति द्विष्टत् ॥ ३१ ॥ आददे सप्तकैकत्वं त्वमङ्गेति त्रिवेष्टनः ॥ वाचस्त्वैक्यं चोपयाम द्वैक्यमावाग्रो च द्विष्टत् ॥ ३२ ॥ इन्द्रवायू अयं वां च रायायावां त्रिवेष्टनः । तम्प्रत्नाद्युद्वयोर्द्विष्टस्त्वन्तशुक्रैषतेऽन्त-

ष्टत् ॥ ३३ ॥ अच्छिन्न स्य चतुर्ष्षु द्विष्टदयं वेनस्त्वमध्यमः ॥
एष तेऽत्यन्तवेष्ट्यः स्याद्ये देवासो द्विवेष्टनः ॥ ३४ ॥ आ-
ग्नेयत्त्वैक्यमिन्द्राय द्वैक्यं मूर्द्धा द्विवेष्टनः ॥ उपाꣳशोरन्त-
वेष्ट्यः स्याद्पो देवा द्विवेष्टनः ॥ ३५ ॥ इष्याऽऊर्म्मिस्त्वयै-
कत्वं सविता त्वानुवाकष्टत् । सोमस्य त्विषिर्य्यमैक्यं सध
मादो द्विवेष्टनः ॥ ३६ ॥ चचस्योत्व्वं च्यैक्यं अवेष्ठास्व तु-
ष्कात्तवेष्टनः ॥ ऊर्ह्नीमारोह चाद्यर्द्ध वर्ज्जं विद्याद्द्विवेष्ट-
न ॥ ३७ ॥ द्विष्टत्सोमस्य त्विषिर्हिरण्यरूपी त्रिवेष्टनः ॥
सोमस्य त्वाऽन्तवेष्ट्यः प्रपर्वतस्य त्रिवेष्टनः ॥ ३८ ॥ प्रजाप-
तयेति द्विवेष्ट्यो रुद्र यत्त्वन्त वेष्टनः । इन्द्रस्य त्वान्तष्टन्मा
ते द्वित्र्यग्नयऽअन्तष्टत् ॥ ३९ ॥ हꣳसो द्विष्टन्नेयदसि स्यो-
नासि चान्तवेष्टनः । निषसाद द्विवेष्ट्योऽभिभूरादिच-
तुरैकता ॥ ४० ॥ सविचा द्वैष्ट्यमश्विभ्यां युग्मं युग्मं त्रिष्ट-
ट्विष्टत् । युञ्जानः सप्तसु द्विष्टदादद्दे युगलैकता ॥ ४१ ॥
हस्तादिचतुर्ष्षु द्वित्र्यत्तूर्वं युगलैकता ॥ अन्वग्न्ये-
कादशा नद्विष्टत्पृथिव्याः सधस्थास्त्रिष्टत् ॥ ४२ ॥ अपां
पृष्टन्द्वयोर्द्दिं वृत्तंश्वसाथां त्रिवेष्टनः ॥ त्वामग्ने पञ्च-
दशसु द्विष्टत्त्रिवृट्वृषाग्निते ॥ ४३ ॥ ओषध्येकादशाना-
न्द्विष्टन्मखस्य शिरोन्ततः । कृत्वाय सा द्विवेष्ट्यः स्याद्व-
सवस्त्वाऽन्तवेष्टनः ॥ ४४ ॥ अदितिष्ट्वा युगैकत्वमित्रस्य
युगलन्द्विष्टत् ॥ उत्थाय बृहतीति द्वावाकृतिस्त्वन्त-

वेष्टन: ॥ ४५ ॥ मा स्वादिषु च सर्व्वेषु द्विष्टदन्नपते त्रिवृत् ॥ द्विवृद्दृष्टग्रानोऽध्यायद्विस्सुपर्णो सि नवैकता ॥ ४६ ॥ चिदसीत्यन्तवृद्यान्ते सञ्ज्ञानञ्च त्रिवेष्टनम् ॥ द्विष्टन्मयि ह्यनुवाको ध्रुवासि चतुरैकता ॥ ४७ ॥ काण्डादिति चतुष्षु द्विवृद्विराड्ज्योतिस्त्रयैकता ॥ अषाढाद्यास्तथैकोनविंशतिस्युर्द्विवेष्टन: ॥ ४८ ॥ इममा स्यात्त्रिवृदेकशफं पशुमिति द्विवृत् ॥ सहस्रमूर्णायुमनो ह्यन्तवर्ज्जं द्विवेष्टन: ॥ ४९ ॥ त्वं यविष्ठ द्विवेष्ट्य: स्यादपा न्वेत्यन्तवेष्टन: ॥ नवायं पुरो न वेष्ट्यो ह्यन्त्याभ्यर्धं विना द्विवृत् ॥ ५० ॥ ध्रुवक्षितिश्चतुर्ष्षु द्विवृददित्यास्त्वा त्रिवेष्टन: । सजूर्ब्दुर्द्धा वयस्त्वेति ह्यनुवाकान्तवेष्टन: ॥ ५१ ॥ इन्द्राग्नी स्याद्विवृद्विश्वकर्म्मा त्वा युगलैकता ॥ आद्यमूर्द्धाऽशुरग्नेभार्गैकयेत्यनुवाकवृत् ॥ ५२ ॥ अग्ने जातांद्विवृत्त्रिवत्सहसाऽने: पुरीषद्विवृत् । एवादिरश्मिना राज्ञो चायंपुरस्त्वानुवाकष्टत् ॥ ५३ ॥ अग्निर्म्मूर्द्धोऽनुवाको द्विवेष्ट्योऽचान्तत्रिवेष्टन: । येन ऽऋषयोऽनुवाको द्विवृत्पञ्चान्तवेष्टन: ॥ ५४ ॥ प्रोथद्विवृत्त्वन्तवर्ज्जसाणे हि द्विपरोऽन्तवृत् ॥ नमस्ते चानुवाकेषु सप्तस्वाद्यो द्विवेष्टन: ॥ ५५ ॥ अनुवाकान्तवृत्षट्सु द्रापेअन्याष्टसु द्विष्टत् ॥ दशास्मिन्महतीत्याद्या: सर्वे चैत्रान्तवेष्टना: ॥ ५६ ॥ अश्मन्नूर्ज्जमिदन्नद्विवृदिमा मेति त्रयैकता ॥ समुद्रसप्तसु

द्विवृन्नमस्ते रुद्रस्ते त्रिवृत् ॥ ५७ ॥ ये देवादिषु च द्विवृद्राजुह्वानोऽन्तवेष्टनः । ता७ सवितुः पञ्चसु द्विवृत् शुक्रज्योत्यनुवाकवृत् ॥ ५८ ॥ द्विवृद्दिम ७स्तानुवाकऽएताऽअर्षंति तच्चिवृत् ॥ वाजाद्द्योऽनुवाकाः स्युरनुवाकान्तवेष्टनाः ॥ ५९ ॥ द्विवृद्वाजस्यानुवाकः पयः पृथिव्यान्तु त्रिवृत् ॥ ऋताष्टकैक्यं रुचन्नो द्वयोर्द्विवृत्पगेतान्तवृत् ॥ ६० ॥ त्रिषु त्व्याऽग्निं युनज्म्यादिष्वनुवाकेषु च द्विवृत् । स्वाहोन्त्रिवृत्परीतो द्विर्व्वीयोस्त्रि द्विः पुनाति ते ॥ ६१ ॥ त्रिब्रह्मवचन्नाना द्विराद्यद्वर्द्धान्तवृदाश्विनम् ॥ सोदार्द्धयुक्तान्ते जोऽन्तवृद्या व्याघ्रादिषु द्विवृत् ॥ ६२ ॥ षड्विंशतिषु मन्त्रेषु स्यात्पितृभ्यः स्वधान्तवृत् ॥ अचन्नुद्वादशसु द्विवृदिम७ं हविरिति त्रिवृत् ॥ ६३ ॥ उदीरतादिषु द्विवत् क्रमस्यैव तु वेष्टनम् । त्वया त्रिवेष्ट्यः प्रथमा ह्वैक्यं लोमानि च द्विवृत् । ६४ ॥ शूद्रद्रोर्यवर्ज्जं व्यहेवाध्यायः सर्वार्धवेष्टनः ॥ स च शूद्रैर्यमन्त्रः स्यादम्यर्मिपत्पदे द्विवृत् ॥ ६५ ॥ इममग्न्यादिषु द्विवृद्धोता यच्चत्सु चान्तवृत् । त्रिवृत्पूर्वाश्विनौ छागाद्यन्तवृत्तदनन्तरम् ॥ ६६ ॥ त्रिवृत्पराश्विनौ छागो वनस्पत्यग्निचान्तवृत् । देवम्बर्ह्यादिषु द्विवृद्देवो त्वष्ट्रंतवेष्टनः ॥ ६७ ॥ अग्निनद्यश्च रूपस्था त्वामद्येति त्रयैकता ॥ तेजोन्तवृदिमाद्विवृद्दभिधा युगलैकता ॥ ६८ ॥ नद्विवृद्धो अर्वा-

ग्नयेऽ न्तवृद्धिङ्कारानुवाकवृत् ॥ हिरण्यपाण्यादिन-
वाजीजनस्य द्विवेष्टनः ॥ ६९ ॥ कायादयोऽनुवाकस्यानु-
वाका स्युरन्तवेष्टनः ॥ हिरण्यगर्भेत्यध्याये प्रजापतयऽअन्त-
वृत् ॥ ७० ॥ यः प्राणतो द्विवृच्चन्द्रमास्तदत्यन्तवेष्टनः ॥
युञ्जन्तीति त्रिषु द्विवृद्वसवो युगलैकता ॥ ७१ ॥ स्विच्चतुर्षु
वायुर्वा पञ्चसु स्याद्द्विवेष्टनः ॥ अग्निः पशुरमीध्य-
वर्न्नं न्द्विवृद्वाम्बयैकता ॥ ७२ ॥ उत्सक्थ्याद्यनुवाकेषु
पञ्चसु स्याद्द्विवेष्टनः ॥ अम्बस्त्वारभ्य चत्वारः सोमा-
यर्थींतमेकता ॥ ७३ ॥ रोहिताद्वर्द्धसमायुक्तः श्चितिर-
न्धोऽन्तवेष्टनः ॥ शुद्धवालस्य प्रश्नत्यवदित्याद्यौन्तमेकता ॥
७४ ॥ वृद्धयुक्तफलशादि द्वैक्यं शिल्पास्तथान्तवृत् ॥ स-
प्तमूर्द्धानुवाकेषु मन्त्राणामन्तवेष्टनम् ॥ ७५ ॥ शादं चैवा-
नुवाकानान्नवकं चानुवाकवृत् ॥ पञ्चमूर्द्धानुवाकेषु
द्विवृदिमा नु कं त्रिवृत् ॥ ७६ ॥ अग्निश्चेति त्रिवृद्द्विवृद-
न्तरेषु त्रिषु त्रिवृत् ॥ वैश्वानरं चैव विद्यादग्नि-
रुक्थेन चान्तवृत् ॥ ७७ ॥ वैश्वानरस्य सुमतावादयः ष-
ड्द्विवेष्टनः ॥ द्विवृत्समास्त्वेत्यऽध्याय स्यापश्चिदन्त्यवेष्टनः ॥
७८ ॥ सँवत्सरोऽसि द्विवदित्यन्वाकोऽनुवाकवृत् ॥ होता
यक्षदेकादशपूर्वश्चैवापरो द्विवृत् ॥ ७९ ॥ देवं बर्हिरप-
रो द्विवद्धुचिमुष्णिहमाचिका ॥ ऊर्ध्वंत ऽइंगणांतेषु त-
नूनपान्मन्त्राशतान्तवृत् ॥ ८० ॥ द्विवेष्टमिन्द्राय वयोधसऽइ-

त्यक्तयोर्द्वयोः ॥ समिद्धोऽअञ्जन्नध्याये मन्त्राःसर्वे द्वि-
वेष्टनाः॥ ८१ ॥ अन्त्यानामनुवाकानां त्रयाणामनुवाकव-
त् । द्विवृद्दध्याजराध्यायौ ब्रह्मन् निदिति चान्तवृत् ॥
८२ ॥ द्विवृद्युञ्जानाग्रतोऽध्यायो द्युभिरक्तुभिरन्तवृत् । वि-
श्वानि च विभक्तारं द्विवृदन्ये तु वेष्टनाः ॥ ८३ ॥ सहस्र-
शीर्षमन्त्रेषु चतुर्विंशतिषु द्विवृत् । न तस्य त्रिवृदेषो ह
येनद्यौर्दृशस्तु द्विवृत्॥ ८४ ॥ त्रिवृद्द्युभिरह्नोभिस्तु द्विवृ-
द्वायुः पुनाति च । सविता त्रिवृदन्ये द्विवृत्स्योना पृथिवी त्रि-
वृत् ॥ ८५ ॥ ऋचँवाचन्त्रिवृद्यन्मेऽन्ताद्द्वेवर्ज्जं द्विवेष्टनः ॥
ऊतिभिः सहितः कया त्वमादिचतुर्षु द्विवृत् ॥
८६ ॥ अहानिशन्त्रिवृद्द्वेवीरभिष्टयऽइति द्विवृत् ॥
द्यौः शान्तिरन्तवेष्ट्यः स्याद्दृहते दृꣳह त्रिवेष्टनः ॥
८७ ॥ ज्योक्तेऽत्वष्टन्नमस्तेऽस्तु यतस्तच्चक्षुश्च द्विवृत् ।
आददे देविदेव्यश्चेतीन्द्रैक्यं प्रैत्विति द्विवृत् ॥ ८८ ॥
मखस्याश्वस्य नवैक्यं यमाय त्रितयैकता ॥ द्विवृत्ग-
र्भोऽनुवाकस्तु विश्वासान्त्यं विनात्रिवृत् ॥ ८९ ॥ आददे-
चतुष्कैकं यस्ते द्विवृत्परोऽन्तवृत् । समुद्राय तद्द्वित्रैक्यं य-
मायेति द्विवेष्टनः ॥ ९० ॥ विश्वाऽआशाः पञ्चैक्यं स्वा-
हा पूष्णेऽनुवाकवृत् ॥ अभीमन्तु द्विवृद्याते चतुष्कैक्यमृचि-
द्विवृत् ॥ ९१ ॥ यावतीत्यनुवाकैक्यन्त्रिवपः सँव्वगयान्तवृत् ॥
स्वाहा प्राणानुवाकानामष्टानामनुवाकवत् ॥ ९२ ॥ आ-

यासाय युगैकत्वं यमायेत्यन्तवेष्टनः ।। ८२ ।। ईशावास्य-
मिदं सर्व्वं द्विवेष्ठ्यं सर्व्वसम्मतम् ।। ४ ।। इति क्रमकारि-
का शिक्षा समाप्ता ॥

---

# पाणिनीयशिक्षा ॥

---

श्रीगणेशायनमः ॥

अथ शिक्षां प्रवक्ष्यामि पाणिनीयं मतं यथा ॥ शास्त्रानुपूर्वं तद्विद्याद्यथोक्तं लोकवेदयोः ॥ १ ॥ प्रसिद्धमपि शब्दार्थमविज्ञातमबुद्धिभिः ॥ पुनर्व्यक्तीकरिष्यामि वाच उच्चारणे विधिम् ॥ २ ॥ त्रिषष्टिश्चतुःषष्टिर्वा वर्णाः शम्भुमते (१)मताः ॥ प्राकृते संस्कृते चापि स्वयं प्रोक्ताः स्वयम्भुवा ॥ ३ ॥ स्वरा विंशतिरेकश्च स्पर्शानां पञ्चविंशतिः ॥ यादयश्च स्मृता ह्यष्टौ चत्वारश्च यमा स्मृताः ॥ ४ ॥ अनुस्वारो विसर्गश्च ᳵकᳶपौ चापि पराश्रितौ ॥ दुःस्पृष्टश्चेति विज्ञेयो ऌकारः प्लुत एव च ॥ ५ ॥ १ ॥ आत्मा बुद्ध्या (२)समेत्यार्थान्मनो युङ्क्ते विवक्षया ॥ मनः कायाग्निमाहन्ति स प्रेरयति मारुतम् ॥ ६ ॥ मारुतस्तूरसि चरन्मन्द्रं जनयति स्वरम् ॥ प्रातःसवनयोगं तञ्छन्दो गायत्रमाश्रितम् ॥ ७ ॥ कण्ठे माध्यंदिनयुगं मध्यमं त्रैष्टुभानुग-

---

(१) सम्भवतो मतः । इति "क" पुस्तकपाठः ।

(२) समेत्यार्थान् (२) इति "ख" पुस्तकपाठः ॥

म् ॥ तारं तार्तीयसवनं शीर्षण्यं जागतानुगम् ॥८॥ सो-
दीर्णो मूर्ध्न्यभिहतो वक्त्रमापद्य मारुतः ॥ वर्णाञ्जनयं-
ते तेषां विभागः पञ्चधा स्मृतः ॥९॥ स्वरतः कालतः
स्थानात्प्रयत्नानुप्रदानतः ॥ इति वर्णविदः प्राहुर्निपु-
णं तं निबोधत ॥१०॥२॥ उदात्तश्चानुदात्तश्च स्वरित-
श्च स्वरास्त्रयः ॥ ह्रस्वो दीर्घः प्लुत इति कालतो नियमा-
ऽचि ॥११॥ उदात्ते निषादगान्धारावनुदात्तऽऋषभ-
धैवतौ ॥ स्वरितप्रभवा ह्येते षड्जमध्यमपञ्चमाः ॥१२॥
अष्टौ स्थानानि वर्णानामुरः कंठः शिरस्तथा ॥ जिह्वामू-
लं च दन्ताश्च नासिकोष्ठौ च तालु च ॥१३॥ ओभावश्च
विवृत्तिश्च शषसा रेफ एव च ॥ जिह्वामूलमुपध्मा च ग-
तिरष्टविधोष्मणः ॥१४॥ यद्योभावप्रसन्धानमुकारादि प-
रं पदम् ॥ स्वरान्तं तादृशं विद्याद्यदन्यद्व्यक्तमूष्मणः ॥१५॥३॥
हकारं पञ्चमैर्युक्तमन्तस्थाभिश्च संयुतम् ॥ औरस्यं तं वि-
जानीयात्कण्ठ्यमाहुरसंयुतम् ॥१६॥ कंठ्यावहाविचुयशा-
स्तालव्या ओष्ठजावुपू ॥ स्युर्मूर्धन्या ऋटुरषा दन्त्या लृतु-
लसाः स्मृताः ॥१७॥ जिह्वामूले तु कुः प्रोक्तो दन्त्योष्ठ्यो
वः स्मृतो बुधैः ॥ एऐ तु कंठतालव्या ओऔ कण्ठोष्ठजौ
स्मृतौ ॥१८॥ अर्धमात्रा तु कण्ठ्यस्य एकारैकारयोर्भ-

वेत् ॥ ओकारौकारयोर्मात्रा तयोर्विवृतसंवृतम् ॥ १९॥ संवृतं मात्रिकं ज्ञेयं विवृतं तु द्विमात्रिकम् ॥ घोषा वा संवृताः सर्वे अघोषा विवृताः स्मृताः ॥२०॥४॥ स्वराणामूष्मणां चैव विवृतं करणं स्मृतम् ॥ तेभ्योऽपि विवृतावेङौ ताभ्यामैचौ तथैव च ॥२१॥ अनुस्वारयमानां च नासिकास्थानमुच्यते ॥ अयोगवाहा विज्ञेया आश्रयस्थानभागिनः ॥ २२ ॥ अलाबुवीणानिर्घोषो दन्त्यमूल्यस्वरानुगः ॥ अनुस्वारस्तु कर्तव्यो नित्यं ह्रोः शषसेषु च ॥२३॥ अनुस्वारे विवृत्यां तु विरामे चाक्षरद्वये ॥ द्विरोष्ठ्यौ तु विगृह्णीयाद्यत्रौकारवकारयोः ॥ २४ ॥ व्याघ्री यथा हरेत्पुत्रां दंष्ट्राभ्यां न च पीडयेत् ॥ भीता पतनभेदाभ्यां तद्वद्वर्णान्प्रयोजयेत् ॥२५॥५॥ यथा सौराष्ट्रिका नारी तक्राँ ऽइत्यभिभाषते॥ एवं रङ्गाः प्रयोक्तव्याः खेअराँ इव खेदया ॥२६॥ रङ्गवर्णं प्रयुञ्जीरन्नोग्रसेत्पूर्वमक्षरम् ॥ दीर्घस्वरं प्रयुञ्जीयात्पश्चान्नासिक्यमाचरेत् ॥२७॥ हृदये चैकमात्रस्तु अर्धमात्रस्तु मूर्धनि॥नासिकायां तथार्धं च रङ्गस्यैवं द्विमात्रता ॥ २८ ॥ हृदयादुत्करे तिष्ठन्कांस्येन समनुस्वरन् ॥ मार्दवं च द्विमात्रं च जघन्वाँ इति निदर्शनम् ॥२९॥ मध्ये तु कंपयेत्कंपमुभौ पार्श्वौ समौ भवेत् ॥ स रंगं कंपयेत्कंपं रथीवेति निदर्शनम् ॥ ३० ॥ एवं

वर्णाः प्रयोक्तव्या नाव्यक्ता न च पीडिताः ॥ सम्यग्वर्णप्रयोगेण ब्रह्मलोके महीयते ॥३१॥६॥ गीती शीघ्री शिरः कंपी तथा लिखितपाठकः ॥ अनर्थज्ञोऽल्पकंठश्च षडेते पाठकाधमाः ॥ ३२ ॥ माधुर्यमक्षरव्यक्तिः पदच्छेदस्तु सुस्वरः ॥ धैर्यं लयसमर्थं च षडेते पाठका गुणाः ॥ ३३ ॥ शङ्कितम्भीतमुद्घुष्टमव्यक्तमनुनासिकम् ॥ काकस्वरं शिरसि गन्तथा स्थानविवर्जितम् ॥ ३४ ॥ उपांशु दष्टं त्वरितं निरस्तम्बिलम्बितङ्गद्गदितं प्रगीतम् ॥ निष्पीडितं ग्रस्तपदाक्षरञ्च वदेन्न दीनं न तु सानुनास्यम् ॥ ३५ ॥ प्रातः पठेन्नित्यमुरःस्थितेन स्वरेण शार्दूलरुतोपमेन ॥ मध्यंदिने कण्ठगतेन चैव चक्राह्वसङ्कूजितसंनिभेन ॥ ३६ ॥ तारन्तु विद्यात्सवनं तृतीयं शिरोगतन्तच्च सदा प्रयोज्यम् ॥ मयूरहंसान्यभृतस्वराणां तुल्येन नादेन शिरःस्थितेन ॥३७॥७॥ अचोऽस्पृष्टायणस्त्वीषंनेमिस्पृष्टाः शरः स्मृताः ॥ शेषाः स्पृष्टा हलः प्रोक्ता निबोधानुप्रदानतः ॥ ३८ ॥ यमोऽनुनासिकानह्नो नादिनो हझषः स्मृताः ॥ ईषन्नादा यणजशश्चासिनस्तु खफादयः ॥ ३९ ॥ ईषच्छ्वासांश्चरो विद्याद्गोर्धामैतत्प्रचक्षते ॥ दाक्षीपुत्रः पाणिनिना येनेदं व्यापितम्भु-

वि ॥४०॥८॥ छन्दः पादौ तु वेदस्य हस्तौ कल्पोऽथ पठ्यते ॥ ज्योतिषामयनं चक्षुर्निरुक्तं श्रोत्रमुच्यते ॥४१॥ शिक्षा घ्राणं तु वेदस्य मुखं व्याकरणं स्मृतम् ॥ तस्मात्साङ्गमधीत्यैव ब्रह्मलोके महीयते॥ ४२ ॥८॥ उदात्तमाख्याति वृषोऽङ्गुलीनां प्रदेशिनीमूलनिविष्टमूर्ध्वा ॥ उपान्तमध्ये स्वरितं धृतं च कनिष्ठिकायामनुदात्तमेव ॥४३॥ उदात्तप्रदेशिनीं विद्यात्प्रचयं मध्यतोंगुलिम् । निहतं तु कनिष्ठिक्यां स्वरितोपकनिष्ठिकाम् ॥४४॥ अन्तोदात्तमाद्युदात्तमुदात्तमनुदात्तं नीचस्वरितम् ॥ मध्योदात्तं स्वरितं द्व्युदात्तमिति नवपदशय्या ॥ ४५ ॥ अग्निः सोम प्रवो वीर्यं हविषां स्वर्बृहस्पतिरिन्द्राबृहस्पती ॥ अग्निरित्यन्तोदात्तं सोमइत्याद्युदात्तं प्रेत्युदात्तं वइत्यनुदात्तं वीर्यं नीचस्वरितम् ॥ ४६ ॥ हविषां मध्योदात्तं स्वरिति स्वरितम् ॥ बृहस्पतिरिति द्व्युदात्तमिन्द्राबृहस्पती इति त्र्युदात्तम्॥४७॥ अनुदात्तो हृदि ज्ञेयो मूर्ध्न्युदात्त उदाहृतः ॥ स्वरितः कर्णमूलीयः सर्वास्ये प्रचयः स्मृतः ॥४८॥९॥ चाषस्तु वदते मात्रां द्विमात्रं त्वेव वायसः(१)॥ शिखी रौति त्रिमात्रं तु नकुलस्त्वर्धमात्रकम् ॥४९॥ कुतीर्थादागतं दग्धमपवर्णं च भक्षितम् ॥ न त-

---

(१) द्विमात्रं वायसोऽब्रवीत् इति "ख" पुस्तकपाठः ॥

स्वपाठे मोचोऽस्ति पापाद्धेरिव किल्बिषात् ॥ ५० ॥ सुतीर्थादागतं व्यक्तं स्वाध्यायं सुव्यवस्थितम् ॥ सुस्वरेण सुवक्त्रेण प्रयुक्तं ब्रह्म राजते ॥५१॥ मन्त्रो हीनः स्वरतो वर्णतो वा मिथ्याप्रयुक्तो न तमर्थमाह ॥ स वाग्वज्रो यजमानं हिनस्ति यथेन्द्रशत्रुः स्वरतोऽपराधात् ॥ ५२ ॥ अनक्षरं ह्यनायुष्यं विस्वरं व्याधिपीडितम् ॥ अक्षता: शस्त्ररूपेण वज्रं पतन्ति मस्तके ॥ ५३ ॥ हस्तहीनन्तु योऽधीते स्वरवर्णविवर्जितम् ॥ ऋग्यजुःसाभिर्दग्धो वियोनिमधि गच्छति ॥ ५४ ॥ हस्तेन वेदं योऽधीते स्वरवर्णार्थसंयुतम् ॥ ऋग्यजुःसामभिः पूतो ब्रह्मलोके महीयते ॥५५॥११॥ शङ्करः शाङ्करीं प्रादाद्दाक्षीपुत्राय धीमते ॥ वाङ्मयेभ्यः समाहृत्य देवीं वाचमिति स्थितिः ॥५६॥ येनाक्षरसमाम्नायमधिगम्य महेश्वरात् ॥ कृत्स्नं व्याकरणं प्रोक्तं तस्मै पाणिनये नमः ॥ ५७॥ येन धौता गिरः पुंसां विमलैः शब्दवारिभिः ॥ तमश्चाज्ञानजम्भिन्नं तस्मै पाणिनये नमः ॥ ५८ ॥ अज्ञानान्धस्य लोकस्य ज्ञानाञ्जनशलाकया ॥ चक्षुरुन्मीलितं येन तस्मै पाणिनये नमः ॥५९ ॥ त्रिनयनमभिमुखनिःसृतामिमां यद्दूह पठेत्प्रयतश्च सदा द्विजः ॥ स भवति धनधान्यपशुपुत्रकीर्तिमानतुलं च सुखं समश्नुते दिवीति

वीति ॥ श्लोकः ॥ ६० ॥ अथ शिक्षामात्मोदात्त-
श्च ह्कारं स्वराणां यथा गौल्यचोऽस्पष्टोदात्तं चापस्तु शंक-
रएकादश ॥ इतिवेदाङ्गनासिकाशिक्षा समाप्ता ॥

---

# शिक्षाप्रकाशः ॥

श्रीगणेशाय नमः ॥

ज्योतिर्व्याकरणं छन्दः कल्पशिक्षानिरुक्तयः । नेत्रास्यपदोर्नःकर्णा यस्य तं सततं नुमः ॥ १ ॥ व्याख्याय पिङ्गलाचार्यसूत्राण्यादौ यथायथं । शिक्षां तदीयां व्याख्यास्ये पाणिनीयानुसारिणीम् ॥ २ ॥ जेष्ठभ्रातृभिर्विहिते व्याकरणेऽनुजस्तत्र भगवान्पिङ्गलाचार्यस्तन्मतमनुभाव्य शिक्षां वक्तुं प्रतिजानीते, अथ शिक्षामिति। वैदिकधर्मानुष्ठानात्पुरुषो निःश्रेयसार्थफलवानित्येषो वैदिकः सिद्धान्तः। अतिगूढार्थस्य वेदस्याज्ञानान्नानुष्ठातुं शक्यो वेदमार्गः । अतः साक्षात्कृतधर्मभिर्वेदार्थेभ्यो निष्कृष्यार्थार्थिसुखबोधाय विद्यास्थानानि प्रवर्त्तितानि । तानि शिक्षा कल्पो व्याकरणं निरुक्तं छन्दो ज्योतिषं धर्मशास्त्रं पुराणं न्यायविस्तरो मीमांसादीनि । तथा च याज्ञवल्क्यः "पुराणन्यायमीमांसा धर्मशास्त्राङ्गमिश्रिताः। वेदाः स्थानानि विद्यानां धर्मस्य च चतुर्दशेति" च। तथा हि शिक्षा स्वरवर्णोच्चारकं शास्त्रम् । कल्पो वेदविहितकर्मणामानुपूर्व्येण कल्पनाशास्त्रम् । व्याकरणं शब्दबोधकमस्खलित्वकारकं शास्त्रम्, । निरुक्तं पदविभागमन्त्रार्थदेवतानिरूपणार्थं शास्त्रम् । छन्दोगायत्र्यादिछन्दसां ज्ञानशास्त्रम् । पुराणं स्थित्युत्पत्तिप्रलयादिसूचकं शास्त्रम्। न्यायविस्तरः प्रमाणैरर्थपरीक्षाशास्त्रम् । मीमांसा वेदवाक्यार्थविचारशास्त्रम् इति। तावच्छिक्षायां यथोदितस्वरवर्णोच्चारणम्। अज्ञाने प्रत्यवायस्मरणात्। यतः। मन्त्रो हीनः स्वरतो वर्णतो वा मिथ्याप्रयुक्तो न तमर्थमाह ॥ स वाग्वज्रो यजमानं हिनस्ति यथेन्द्रशत्रुः स्वरतोऽपराधात्

इति । अत्यावश्यकज्ञातव्यत्वे बृहद्देवतायां शौनकः । स्वरो वर्णोऽ-
क्षरं मात्रा विनियोगार्थमेव च । मन्त्रं जिज्ञासमानेन वेदितव्यं प-
दे पदे इति । अङ्गिनो नित्यत्वादेषामपि नित्यत्वमुत्सर्गतः सिद्धम् ।
ग्रन्थादौ मङ्गलायाथशब्दो मंगलार्थोऽआनंतर्यार्थो वा । व्याक-
रणाध्ययनानन्तरं चतुर्भिर्वाचःपदैः परा पश्यन्ती मध्यमा वैखरी
सञ्ज्ञैराम्नातां वर्णोत्पत्तिज्ञापकां कियत्तदनुवादरूपं शिक्षाध्यायम् ।
शिक्ष्यतेऽनया बालेभ्यो ह्रस्वदीर्घप्लुतोदात्तानुदात्तस्वरितोरःकण्ठ-
शिरोजिह्वामूलदन्तनासौष्ठस्थानानि यया तां । यथा पाणिनेरिदं
"वृद्धिर्यस्याचामादिस्तद्वृद्ध मिति" वृद्धसंज्ञाया "वृद्धाच्छः" "तस्या ऽऽय-
नेयेत्यादिनेयादेशः । पाणिनीयं मतं तथा प्रोच्चारयिष्यामि । ननु त-
न्मतं शास्त्रादिविरोधि भविष्यतीत्याह । यथोक्तमिति । तद्यथा
लोकवेदयोः शरीरकर्त्तृकश्रुत्योरुक्तं शास्त्रानुपूर्वं गुरुपरंपराप्राप्तं
जानीयात् । शङ्करः शाङ्करीं प्रादादिति तदुपरिष्टाद्व्याख्यास्यामः ।
"यऽइवलौकिकाः शब्दास्तएव वैदिकास्तएव तेषामर्थाइति" महा-
भाष्योक्तेः । अत्र स्वरवर्णोच्चारणमभिधेयं सम्यग्वर्णप्रयोगेण ब्रह्म-
लोके महीयते इति । तथा च महाभाष्यम् । एको वर्णः सम्यक्
ज्ञातः स्वर्गे लोके कामधुग्भवतीति प्रयोजनं । एतत् ज्ञानाभिला-
षुका अधिकारिणः व्याकरणे तु गोशब्दो गातेर्डोसंतोऽत्र जिह्वा-
मूलकण्ठोष्ठजातो गोवर्णइति विभेदाच्छिचारम्भइति । अत्रानुष्टुपछ-
न्दसि विषमं चेत्यधिकृत्यावांतरं वक्त्राधिकारे पथ्यावक्त्रं श्लोकवृत्त-
म् । पादस्यानुष्टुव्वक्त्रम् । "न प्रथमात्स्नौवाऽन्यत्" । चतुर्थात् । पथ्या-
युजोज् । युग्मपादस्य चतुर्थाद्वर्णाज्जगणोऽवश्यं चेत्इति लक्षणात् । उ-
दात्ते निषादगान्धारावित्यत्र प्रथमो भुरिक् । अनुष्टुप्पादः । द्विती-
यः खण्डोऽनुष्टुप्पादः । उत्तरार्द्धं पूर्ववत् ऊनाधिकेनैकेन निचृद्भुरि-
जौ । द्वाभ्यां विराट्स्वराजाविति लक्षणसूत्रात् ॥ १ ॥ सुबुद्धी-

नामादिवर्णोच्चारात्कण्ठादिस्थानज्ञानं भविष्यति किमर्थोऽयमारंभइ-
त्याशङ्क्याह। प्रसिद्धमिति पाणिन्यादिभिः प्रसिद्धीकृतमसांप्रतदर्शि-
भिरविज्ञातं अव्यक्तं व्यक्तीकरिष्यामि। वाचो वर्णजातस्योच्चारणे उ-
द्गिरणे विधिं विधानं। अत्यंताप्राप्तौ विधिः। स चात्र प्रयत्नानुप्रदा-
नादौ ज्ञेयस्तं॥२॥ तावदुच्चारणादिज्ञानाय वर्णान्सङ्ख्याति। त्रि-
षष्टिरिति। प्रकृतिः संस्कृतं तत्र भवं तस्मिन्प्राकृते शूरसेन्यादौ संस्कृते
प्रकृतिप्रत्ययादिविभागैः संस्कारमापादिते तस्मिन्। गीर्वाणवाण्यां
त्रिभिरधिकाः षष्टिरथवा चतुर्भिरधिकाः षष्टिर्वर्णाः स्वयंभुवा प्रो-
क्ताः प्रोदिताः स्थानप्रयत्नानुप्रदानकालैः सम्भवतः सम्भूते राजन्मता-
ज्ञाताः॥३॥ताननुक्रमेण गणयन्दर्शयति। स्वरा इति प्राचां सञ्ज्ञा।
स्वर्यतेः शब्दार्थस्य करणेऽच्। विंशतिः एकश्च। तेऽकारकारविउए-
ओऐऔ एते ह्रस्वदीर्घप्लुतभेदिता "ऊकालोज्झ्रस्वदीर्घप्लुत" इत्येतेनै-
कद्वित्रिमात्रा एतउदात्तानुदात्तस्वरिताइति प्रत्येकं त्रिविधधर्मास्तुल्य-
काला ऋत्रृकारयुक्ता एकविंशतिसंङ्ख्यापूरकाः। यथा अ१आ२आ३
इ१ई२ई३उ१उ२ऊ३ ऋ१ऋ२ऋ३ एते चत्वारस्त्रिगुणिताः द्वाद-
शाक्षरा ह्रस्वाभावात्दीर्घत्वं प्लुतत्वं यथा। ए२ए३ओ२ओ३ऐ२ऐ३
औ२औ३एतेऽष्टौ। लृवर्णो न दीर्घइति स्मरणात्ह्रस्वएकः। अत्रो-
दात्तादिधर्मा अच्चेवोदात्तश्चेतेन व्याख्यातः। "उच्चस्वरो नीचस्वरः
स्वरः स्वरितएवच, व्यञ्जनान्यत्र वर्त्तन्ते तत्र तिष्ठति सस्वरः" इति ना-
रदः। तत्रोदात्ते विनिषीदन्ति सर्वेऽस्मिन्स्वराइति निषादः, नाना
गन्धवहो वा वायुर्नाभिः शीर्षगो यस्योच्चारणेऽथ वा यस्मिन्प्रगीते गाव-
स्तुष्यन्तीति गान्धारस्तौ, अनुदात्ते नाभिः कंठशीर्षसमाहतो ऋषभवन्न-
र्दतीति ऋषभः। षडपि स्वराननतिक्रम्य सन्धीयते सधैवतस्तौ। एते व-
क्ष्यमाणा हि स्वरितोद्भवाः। नासाकण्ठोरस्तालुजिह्वादन्तेभ्यो जा-
तौ गणनया पञ्चसङ्ख्यापूरकइति वा पञ्चमः। हृदुदरः समाश्रितौ

नाभिं प्राप्तः स मध्यमस्ते उदात्तादिभ्यऽएवैषां प्राधान्यभेदेनोदात्तो व्याख्यातः ॥ स्पर्शानां पञ्चविंशतिः पञ्चभिरधिका विंशतिः । स्पृष्टानुप्रदानधर्मवत्वात्स्पर्शास्तेषां सङ्ख्या । तेषां पंचवर्गा कुचुटुतुप्वः । च पुनः यादयोऽष्टौ स्मृतास्ते यरलवशषसाः । स्वरा अस्पृष्टप्रयत्नाः यरलवास्तु किंचित्स्पृष्टाः, त्वोनेमऽइत्यर्द्धस्येति यास्कः । शेषा ह्लोऽनुक्ताः स्पृष्टा आचार्यैः प्रोक्तास्ते स्पर्शाः स्पृष्टप्रयत्नाः च पुनश्चत्वारो यमाः कुं खुं गुं घुं इति । "अथानन्त्याश्चत्वारस्ते सयमास्ते कुं खुं गुं घुं इत्यन्तसंयोगेऽन्त्यपूर्वोऽन्त्योत्तरे व्यवधानवर्जिते तत्र यमा वर्त्तंते न सन्देहइति„ "अनन्तसंयोगे मध्ये यमः पूर्वगुण इत्यौदव्रजिरपि„ "नारदश्च । अनन्त्यश्च भवेत्पूर्वो ह्यन्त्यश्च परतो यदि । तत्र मध्ये यमस्तिष्ठेत्स वर्णः पूर्ववर्णयोः । वर्गान्त्याञ्छषसः साङ्गमन्तस्थैश्चापि संयुतान्, दृष्ट्वा यमा निवर्तन्ते आदेशिकमिवाध्वगाइति" अयमपि वर्णागमो विधीयतेऽस्माच्छास्त्रात्„ । चत्वारश्च यमाइति वर्णान्तरत्वेनोपदेशः संयोगशास्त्रात् । तत्र संयोगस्त्रिविधो गौतमेन दर्शितः । अश त्रिविधः संयोगपिण्डो भवत्ययस्पिण्डो दारुपिण्डस्तथोर्णापिण्डश्चेति । यमसहितमयस्पिण्डं दारुपिण्डमन्तस्थैर्युक्तं,यमान्तस्थवर्जं तूर्णापिण्डमिति । "अंतस्थयमसंयोगे विशेषो नोपलभ्यतइति च । अशरीरं यमं विद्याद्विशेषः पिण्डनायकः । इति च । यथा पलिक्क्नीरिति ककाररूपः पूर्ववर्णसवर्णो यथा सङ्ख्यः । प्रथमस्तकारस्तेनायं वर्णक्रमः । ककारयमककाररूपतकारानकारईकाराः अन्तर्वत्क्नीत्यादि । चख्ख्नतुरित्यत्र खकाररूपः । अग्ग्निरित्यत्र गकाररूपः । जघ्घ्नतुरित्र घकाररूपः । यज्ञ्ञइत्यत्र जञ्ञाः । अत्र चवर्गतृतीयो जस्तस्य संख्यासवर्णो ञुंकारसमावेशः । वर्णक्रमे यकारजकारपूर्ववर्णवर्गसङ्ख्यसवर्णयमगकारजकाराः । वर्गान्त्यानिति किं उदङ्ङ्यक् । त्वन्तस्थैरिति किं कार्मन् । ऋत्वु ॥४॥ अनुस्वारइति । "मोऽनुस्वारः„ स्वारमनुभव-

तीत्यनुस्वारः। विविधं सृज्यतइति विसर्गऊष्मापरसंज्ञस्तो। अला-बुनस्तुम्बीफलस्य या वीणा तन्निर्घोषो दन्तमूल्यो दन्तमूलस्थानीयः स्वरानकारादीननुलक्षीकृत्य प्राप्तोऽन्वर्थसञ्ज्ञः स्वरानुगतो यथा तथा नित्यं हरशषसेषु प्रत्येकं परेषु कर्त्तव्यः। नारदोपि। आपद्यते मकारो रेफोष्मप्रत्ययेष्वनुस्वारः। यवलेषु परसवर्णं स्पर्शेषु परेषु चोत्तमापत्तिमिति,,। अनुस्वारद्वय ग्रहणं चतुःषष्टिसङ्ख्यामास्कन्दति। अनुस्वारो विसर्गश्चेति पाठात्। स च यथा सुराष्ट्रदेशजाता स्त्री सानुनासिकं रंगं अरँाइति वाद्यमानकांस्यपात्रशब्दानुकारिणमभिवदति तद्वत्रंगंद्वितीयमनुस्वारं जानीयात्। लौकिकं प्रदर्श्य मन्त्रवर्णोदाहरणमाह"खेअरँाइव खेदयेति"। अचि नियमत्वादनुस्वारोक्तचु गणिती विकल्पाद्दचु ज्ञेयं। तथा अनुस्वारो व्यंजनं वा स्वरो वेति ऋक्पार्षदे शौनकोक्तिः। दृश्यते च"हंसः शुचिष,, "त्सोमानं स्वरण"मित्यादावनुदात्तत्वमिति। विसर्गस्याष्टविधा गतिः। उकारभावः पुरोहितं यदि कदाचिदूष्मणो विसर्गादन्यत्विसर्गात्विना ओभावप्रसंधाने। गुणकृत्यं, ऊष्मणस्तु सत्वरुत्वोत्वगुणत्वेऽति परे उत्वमत्वोष्मणो भावा-त्केवलं गुणवत्वे उभयोरुदाहरणयोः सादृश्ये चिन्त्यते। उकारादिर्यस्य तत्परं यस्य तत्तादृशं स्वरांतं ओभावान्तं ज्ञेयं व्यक्तम्। त्वोतः। प्रोत। अत्रोकारान्तं स्वरान्तं तत्र विसर्गान्तमिति। अतएव पदकालेऽवग्रहः। विवृत्तिर्विवृत्तिभावः। यऽइन्द्र। शषसानां भावः रेफएव च। रकारभावः। दुश्शर्ठं-सं निष्षहमाणः। अपास्सोमं। उषर्वसूयवः। जिह्वामूलसुपध्माचेति। ᳲकᳲपौ पराश्रयौ। त्रितः कूपे। असौ यः पन्थाः। अनुस्वारविसर्गजिह्वामूलोपध्मानीया अयोगवाहा आश्रयस्थान भागिनो यमाश्रितास्तस्य स्थानं भजन्तीत्यर्थः। दुस्पृष्टश्चेतीति। ईषत्स्पृष्टान्तस्थसधर्मा ळकार प्लुतः एवकारो दीर्घभेदव्यावर्त्तकः। चकारात् ह्रस्वसंगतः कार्यः। अनुस्वारादयो ळप्लुतांताः पञ्च ष

ष्ट्वा । एवमेते त्रिषष्टिश्चतुःषष्टिर्वा व्याख्याताः ॥५॥ वर्णसङ्ख्यां विधाय सम्प्रति वर्णोत्पत्तिं वक्तुमुत्पादयितुर्विवेकमुद्यमं चाह । आत्मेति । अतनशीलः सरणशीलो वाऽदनशीलो वा त्रयोदशेन्द्रियातीतः । "कर्मात्मा तस्य हैतस्य हृदयस्याग्रं प्रद्योतते तेन प्रद्योतेनैषऽआत्मा निष्क्रामति चक्षुष्टो वा मूर्द्ध्नो वाऽन्येभ्यो वा शरीरदेशेभ्यऽइति विज्ञायते"। एवमेष संप्रदायोऽस्माच्छरीरात्समुत्थाय परं ज्योतीरूपं सम्पद्य स्वेनरूपेणाभिनिष्पद्यत इत्येवं कण्ठामुच्चारयितेति प्रश्नस्योत्तरमात्मेति छान्दोग्यश्रुतौ प्रतिपादितो बुद्ध्याख्येनेन्द्रियेण अर्थान्प्रयोजनानि निश्चित्य मनऽइन्द्रियेण अर्थान्प्रयोजनानि निश्चित्यमनऽइन्द्रियं वक्तुं योजयति । प्रेरयति तन्मनः कायाग्निं नं जाठराग्निं प्रेरयति । सोऽप्यग्निर्मारुतं वायुं प्रेरयति ॥६॥ मारुतस्त्विति । स वायुरूर्ध्वंगत्योरसि हृद्देशे चरन्मन्द्रं स्वरं । "स्फायितंची-त्यादिना मन्देरक्प्रत्ययः" । जनयत्युत्पादयति । तं स्वरं प्रातः सवन युक्तं गायत्रं छन्दआश्रितं जानीयात् । मन्द्रया वाचा प्रातःसवनमिति सोमयज्ञः कल्पः ॥७॥ तं मारुतं कण्ठे माध्यन्दिनसवनयुक्तं मध्यमस्वरयुतं त्रिष्टुप्छन्दस्कं जानीयात्तं शीर्षण्यं शीर्षणि भवं "शीर्षंश्छन्दसीति" शिरसः शीर्षभावः तत्र भवं तृतीयसवनयुतं जागतछन्दस्कं जानीयात् ॥८॥ सोदीर्णइति ॥ स वायुरुदीर्णो मूर्द्ध्नि अद्यारे अभिहतः फालितः वक्त्रविवरं प्राप्य वर्णान् जनयते । "संहितायामित्यधिकृत्य" । "सोऽचि लोपे चेत्पादपूरणमिति" सलोपे गुणः । तथा । "यासां मित्रावरुणसदनादुच्चरन्ती त्रिषष्टिं वर्णानन्तः प्रकटकरणैः प्राणसङ्गप्रसूती । तां पश्यन्तीं प्रथममुदितां मध्यमां बुद्धिसंस्थां वाचं वक्त्रे करणविशदां वैखरीं च प्रपद्ये इति" । तथा च मन्त्रवर्णः । चत्वारि वाक्परिमितापदानि विदुर्ब्राह्मणा ये मनीषिणः । गुहा त्रीणि निहिता नेङ्गयन्ति तुरीयं वाचो मनुष्या व-

दन्ति इति ॥ ॥ तेषां वर्णानां वक्ष्यमाणो विभागः पञ्चप्रकारः स्मृतः। तमेव दर्शयति॥ स्वरतइति ॥ उदात्तषड्जमन्द्रादिभ्यः कालत उच्चारात्स्थानादष्टविधात् प्रयत्नादस्पृष्टादेः अनुप्रदानतोऽनुनासिकादेः। अनुप्रदानान्युपरिष्टाद्व्याख्यास्यामः तत्सर्वं वक्ष्यमाणं नितरां जानीत ॥१०।११।१२॥ अष्टाविति॥ निगदोऽयम् ॥१३॥ ।१४॥१५॥ हकारमिति॥ वर्गाणां पञ्चमैर्ङञणनमैश्च पुनरन्तस्थैर्यरलवैः संयुतं हकारं औरसं उरःस्थानीयं तं विजानीयात्। असंयुतं केवलं हकारं कण्ठ्यमाहुः॥१६॥ कण्ठ्यावहाविति॥ अहौ अवर्णहकारौ कण्ठ्यौ स्यातां। पुनर्हंग्रहणं स्पष्टार्थं इवर्णश्चवर्गौ यकारश्शकारश्चैते तालव्याः। यत्स्थानस्वरान्वितं हल्यत्स्थानीयं तत्तत्स्वरस्थानार्हमधिकं ज्ञेयम्। अत्राकारोऽनुबन्धो वर्णगणं बोधयति। चुटुइति वत्। उवर्णपवर्गावोष्ठ्यौ। ऋवर्णष्टवर्गौ रकारः षकारश्च मूर्द्धन्याः स्युः। ऌवर्णस्तवर्गौ लकारः सकारश्च दन्त्याः स्मृताः ॥१७॥ तु पुनर्जिह्वामूले कवर्गः आचार्यैरन्यैश्च प्रोक्तः।"अथ षष्ठऊष्मा जिह्वामूलीयाः प्रथमश्चवर्गइति शौनकोक्तिः„। वकारो धीमद्भिर्दन्तोष्ठाभ्यां जातो दन्तोष्ठ्यः-स्मृतः॥ अनुस्वारस्त्विति॥ अनुस्वारो नासिक्यो ज्ञेयम्। एतेन द्वावपि व्याख्यातौ। वर्गाणां पञ्चमाः ङञणनमा नासिक्याः। अपिशब्दात्स्ववर्गस्थानीया अपि। कण्ठतालुभ्यां जातविवर्णौवर्णौ स्मृतौ। ओवर्णौवर्णौ कण्ठोष्ठाभ्यां जातौ स्मृतौ। अत्रोपदेशरूपत्वान्न सन्धिः। अइउणिति वत्। तत्र विविनक्ति। एकारौकारयोस्त्वर्द्धमात्रा कण्ठस्य भवेत्। अन्यात्वर्द्धमात्रोक्तस्थानस्य। इकारोकारान्तर्वर्त्तमानौ एऐक्रमेण विवृतसंवृतप्रयत्नौ ज्ञेयौ। उपध्मानीयइति व्याख्यातः। ऊष्मणामिति। हशषसानामचां विवृतं करणं प्रयत्नं स्मृतं शिष्टैः। तेभ्योऽसीएङ् एओसञ्ज्ञौ विवृतप्रयत्नौ ताभ्यां ऐऔ विवृतौ ततोऽपि ताभ्यामपि च पुनराकारो विवृताख्यः। व्याख्या-

तमन्यत् ॥१८।१९।२०।२१॥ निबोधानुप्रदानतइति । अनुपश्चात् प्रदानं स्वस्वस्थानादन्यस्थानमुच्चारणभेदेन प्रदीयते तत्तस्मात् शिष्य निबोध जानीहि। अमोऽनुनासिकाइति । अइउण् । ऋऌक् । एओङ्। ऐऔच्। हयवरट्। लण्। अमङणनम्, एतेऽमोऽनुनासिका ह्रस्ववर्जिताः। हझभघढधाः नादिनोः नादानुप्रदानाः। यवरलजबगडदाः, ईषत् किंचिन्न्यूननादिनः किंचित्न्यूननादानुप्रदानाः। खफछठथाः श्वासिनस्तु। शषसाद् किंचिन्न्यूनश्वासान्जानीयात्। एतद्गीर्वाचो धाम स्थानमाचार्यः प्रचक्षते॥ प्रोक्तेभ्योऽध्यापकमुपदिशन्कूपदेशकं निंदति। कुतीर्थादिति। अननूचानात्तीर्थाद्गुरोः। "निपातागमयोस्तीर्थमृषिजुष्टे जले गुराविति„ नामलिङ्गानुशासने। प्राप्तं दग्धं भस्मवद्गतरसं अपगतवर्णं अयथोदितस्थानवर्णं च भक्षितं आदराद्घुष्टं तस्य घोषयितुः परिमोक्षो नास्ति । कस्येव पापाहेरिव। हन्तुरिव किल्बिषान्मोक्षो नास्तीति । स्तौति च । सुतीर्थादिति । सुगुरोः प्राप्तमभ्यस्तं सुसंप्रदायिब्रह्मवेदाख्यं राजति शोभते न करालइति । नकारो नानुनासिकपदादग्रे योजनीयः । यथेति। पतनं च भेदश्च तौ ताभ्यां भीता व्याघ्री श्वापदजातिस्त्री यथा पुत्रान् बालान् दंष्ट्राभिर्न पीडयेत्तद्वद्वर्णान्ब्रूयादिति ।।एवमिति। एवं नाव्यक्ताः। न पीडिताश्च वर्णाः प्रयोजनीयाः । सम्यक्स्थानप्रयत्नादिविधिना यथोक्तेन प्रयोगेन ब्रह्मलोके प्रयोक्ता पूज्यते किं पुनर्भूतले इतिभावः, एवं सम्यक्ज्ञातः स्वर्गकामधेनुवर्णः स्यादित्यर्थः, अभ्यासार्थंइति। द्रुतां विलम्बितां मध्यमामभ्यासाद्यर्थं कुर्यात्। व्याख्यातमन्यत् । शङ्करइति । शं सुखं म्लेच्छत्वादिरोगाणां शमनं करोतीति शङ्करः शिवः शङ्करणशीलां शब्दशास्त्रविद्याम् । दाक्षी दक्षस्यापत्यं"तस्यापत्यमित्यण् टिड्ढाणञित्यादिना ङीप्" तस्याः पुत्राय धीमतेऽतिसुबुद्धये प्रादात्। कोसावित्याकाङ्क्षायामाह।

दाक्षीपुत्र इति । यः पाणिनिः । पाणिनो युवाऽपत्यम् । "अतइञ्" येन पाणिनिना इदं प्रत्यक्षं शब्दशास्त्रं व्याहृतं। उक्तं। तस्मै पाणिनये नमः पूर्वेण सम्बन्धः। पाणिनेयइति पाठे शुभ्रादित्वं कल्प्यम्। रत्नभूतमिति स्पष्टम्। त्रिनयनमभिमुखनिःसृतामिति, निरन्तरम् द्विजो वेदाधिकारी सावधानः सदा निरन्तरम् यः पठेत्। स पशुपुत्रकीर्त्तिमान्भवति। दिवि सुखमतुलं समश्नुते भुनक्ति। स्वर्गं व्याप्नोति वा। द्विर्वचनं शिक्षाध्यायसमाप्त्यर्थं। विकृतिछन्दस्यर्द्धसममपरवक्त्रवृत्तमर्द्धसमाश्चर्द्धं इत्यधिकृत्य, अपरवक्त्रं "नौर्लोगजौन्याविति,, लक्षणसूत्रात् ॥ इति शिक्षाप्रकाशः समाप्तः ॥

---

# सटीका नारदीशिक्षा ॥

श्रीगणेशाय नमः ।

प्रणम्य परमात्मानमृक्सामस्वरविग्रहम् ॥ मुनिना नारदेनोक्तां शिक्षां व्याख्यातुमिष्यते ॥ अथ सामसंहिताध्ययनादनन्तरमतद्इति संहिताध्ययनात्क्षिप्रं सर्वेषां शास्त्राणां ऋक्सामगतानां निश्चयं सम्यक्स्वरूपप्रतिपत्तिं वेद मयोच्यमानं जानीयादिति भगवान्नारदः सामान्येन शिष्यं प्रत्याह सामान्यभूत ओंकारगतस्वरूपः उच्चनीचविशेषे उच्चतरे उच्चतमे नीचे नीचविशेषे नीचतरे नीचतमे च स्थानाभिव्यज्यमानः स्वरान्यत्वं नाना स्वरतां प्रतिपाद्यतइत्यर्थः ॥

अथ वा सर्वेषां वाग्भिनिश्चयमिति वा पाठः, कथयामीति पूर्वपठितशिक्षामाहारयिष्यते मन्त्रब्राह्मणवाक्यानि ऋगादिस्वराणां विवेकउच्यते ॥ १ ॥

अथातः स्वरशास्त्राणां सर्वेषां वेदनिश्चयम् ॥
उच्चनीचविशेषाद्धि स्वरान्यत्वं प्रवर्त्तते ॥ १ ॥

उच्चनीचं तथा स्वरान्यत्वमित्युक्तं तच्च ऋग्विषये उदात्तस्वरितश्रुतिर्लोपि नान्तरत्वं व्यवधानम् ॥ २ ॥

आर्चिकं गाथिकं चैव सामिकं च स्वरान्तरम् ॥
कृतान्ते स्वरशास्त्राणां प्रयोक्तव्यं विशेषतः ॥ २ ॥

तद्यथा ॥ तत्सवितुर्वरेण्य"मित्यादिश्रुतिर्लोपेन ॥ महन्मे वोच ॥ इत्यादिसामसक्तिः तिलोपेनान्तरं व्यवधानं जानीयात् स्वरव्यवधानं गाथां जानीयात् ॥ धियो यो नः प्रचोदयादि"त्यादि एवावत्स्वराणामन्तरं व्यवधानं सर्वत्र बोद्धव्यम् ॥ शिक्षाया अपरिज्ञाने ऋगा-

दो सम्यक्स्वरो न परिज्ञायत इत्याह ॥ ३ ॥

**एकान्तरस्वरो ह्यृक्षु गाथासु द्व्यन्तरः स्वरः ॥ सामसु त्र्यन्तरं विद्यादेतावत्स्वरतोऽन्तरम् ॥ ३ ॥**

ऋक्सामयजुर्लक्षणानि यज्ञाङ्गानि याज्यास्तोत्रकरणमन्त्रादीनि तेषां सम्यक्स्वरूपापरिभवतीति ॥ विरुद्धः स्वरो यानि विस्वरैः स्वरादिवैगुण्ये न केवलं देवतायाः सांमुख्यं न भवति यावद्धि कृताचरणं तावत्प्रत्यवायो भवतीत्याह ॥ ४ ॥

**ऋक्सामयजुरङ्गानि ये यज्ञेषु प्रयुञ्जते ॥ अविज्ञानाद्धि शास्त्राणां तेषां भवति विस्वरः ॥ ४ ॥**

मिथ्येति न शास्त्रानुसारेण प्रयुक्तः, न तमर्थमाहेति वदन्नाह अथ वाचस्यासंनिधिपरां निष्प्रयोजनमर्थाभिधानं स वाक्लक्षणो वज्र इव वज्रो यजमानं निषिद्धाचरणाद्यजमानं हिनस्त्येव यथा इन्द्रशत्रुः स्वरस्यापराधात् प्रयोक्तारं हिनस्ति इन्द्रशत्रुर्मेघ उच्यते इन्द्रः शब्दः शातयिताऽस्येति बहुव्रीहौ "प्रकृत्या पूर्वपदमित्याद्युदात्तं" पदं इतरथा इन्द्रस्य शत्रुरिति षष्ठीसमासे समासान्त इत्यन्तोदात्तं स्यात् इन्द्रस्य परमेश्वरस्य शत्रुर्न सम्भवतीति विरुद्धार्थता स्वरान्तरं प्रसज्यते अतः स्वरावधारणे यत्नः कार्यः स्वरादिवैगुण्ये न च न केवलं कर्मणि वैगुण्यमदृष्टदोषश्च । यावद्दृष्टेऽनादिदोषयोग इत्याह ॥ ५ ॥

**मन्त्रो हीनः स्वरतो वर्णतो वा मिथ्याप्रयुक्तो न तमर्थमाह ॥ स वाग्वज्रो यजमानं हिनस्ति यथेन्द्रशत्रुः (१) स्व**

---

(१) तैत्तिरीयशाखीयकृष्णयजुःसंहितायां द्वितीयाष्टके काण्डे वा पञ्चमप्रपाठके द्वितीयानुवाके प्रथमपञ्चाशत्यां "स्वाहेन्द्रशत्रुर्वर्धस्वेति" यत्राह इन्द्रस्य शातरुरुच्चारितव्यः । प्रयुक्तस्तु "प्रकृत्या पूर्वपदमित्यनेनाद्युदात्तः स्वरो भवत्यत इन्द्रो घातको यस्येति बहुव्रीह्यर्थः सम्पद्यत इति भावः । प्रदर्शितञ्चैतत्पातञ्जले महाभाष्ये पस्प-

तोऽपराधात् ॥ ५ ॥

मन्त्रो यजमानस्य आयुरादीन्रुषति विनाशयतीत्यर्थः, स्वरूपं त्रिषु स्थानेष्वभिव्यज्यतइत्युच्यते ॥ ६ ॥

प्रक्षीणः स्वरवर्णाभ्यां यो वै मन्त्रः (१) प्रयुज्यते ॥ यज्ञेषु यजमानस्य(२)रुषत्यायुः प्रजां पशून् ॥ ६ ॥

आयुरादीन् रुषति विनाशयतीत्यर्थः, स्वरूपं त्रिषु स्थानेष्वभिव्यज्यतइत्युच्यते॥ ६ ॥

उरः कंठः शिरश्चैव स्थानानि त्रीणि वाङ्मये ॥ सवनान्याहुरेतानि साम वाऽप्यर्थतोन्तरम् (३)

नीचमध्यमोत्तरया उरसि कण्ठे शिरसि चाप्यभिव्यज्यते उरसि वक्षस्थाने शब्दोच्चारणं प्रातः सवनमुच्यते, नीचैरुच्चारितं प्रातः सवन शब्दस्येत्यर्थः, कण्ठस्थाने मध्यमेन स्वरेणोच्चारणं माध्यंदिनं सवनं, शिरोलक्षणे स्थाने उच्चैरभिव्यज्यमानं शब्दजातं तृतीयसवनं, साम्नोऽपि सप्तस्वरात्मकस्याधरोत्तरभावादेव सम्भवः स्वरसप्तकता कण्ठशीर्ष इति भेदेन निर्देशः, साम वाप्यर्थतोन्तरमिति न सम्बद्धः नित्यो नैमित्तिको होमः स्थण्डिले वालुकामये ॥ करोन्मितेऽस्थलारोधे चतुरस्रं समन्ततः इति पाठः ॥ ऋग्यजुःसामाग्न्येऽपि स्थानत्रये स्थितानीत्याह ॥ ७ ॥

उरः सप्तविचारठं॰ स्यात्तथा कण्ठस्तथा शिरः ॥

---

शाब्दिके शब्दानुशासनस्य भूयः प्रयोजनकथनावसरे"दुष्टः शब्दः इत्युपक्रमेण । इदं पाणिनीयशिक्षायां पञ्चाशत्तमसङ्ख्याकं पद्यं, शुक्लयजुः प्रातिशाख्यस्योव्वटभाष्येऽपि लिखितमिति ॥

(१) वै मन्त्रइति "ख" पुस्तकपाठः ॥

(२) दृशस्यायुरिति 'ग'पुस्तकपाठः ॥

(३) साम्नि चाप्यधरोत्तरेइति'ख'पुस्तकपाठः ॥

न च सप्तोरसि व्यक्तास्तथा प्रावचनो विधिः ॥ ८ ॥

सप्तानां स्वराणां विचरणं विचारइति सप्तविचारमुरः मन्द्रातिस्वारयोरुरसि न सम्यक् अभिव्यक्तिर्यथेतरत्रेति प्रवचने अध्ययनेभवो विधिरध्यापनकाले च गम्यते अनभिव्यक्तावपि मानसे प्रयोगे उपांशुप्रयोगे च वर्णस्वरयोरनाख्यानो भवत्येव साम्नि सर्वात्मना स्वराणामवधारणं प्रवर्तते तदनुसारेण ऋग्यजुषामुदात्तादिस्वरप्रवृत्तिरित्याह ॥ ८ ।

कठकालापप्रवृत्तेषु तैत्तिरीयाह्वरकेषु च ॥ ऋग्वेदे सामवेदे च वक्तव्यः प्रथमः स्वरः ॥ ९ ॥

कठादिशाखासु ऋग्वेदे सामवेदे च ऋग्यजुषां साम्निकस्वरः प्रवर्तते स्वरेणे प्रथमस्वरानुसारेण पाठोऽवधार्यते प्रथमस्वरद्वितीयस्वरो ऋग्वग्वेदेऽनुक्रियमाणावभायते क्रुष्टप्रथमस्वरसमुदायानुकारस्य लौकिके व्यवहारे प्रवर्तयइत्याह ॥ ९ ॥

क्रुष्टः उच्चः मध्यमः प्रथमः स्वरः ॥ १० ॥

ऋग्वेदस्तु द्वितीयेन तृतीयेन च वर्तते ॥ उच्चमध्यमसनुघातस्वरो भवति पार्थिवः ॥ १० ॥

तृतीयादिषु स्वरानुसारेणाह्वरकाणां वा पाठः द्वितीयाद्यनुकारेण तैत्तिरीयाणां साम्नि तु सप्त स्वरा भवन्तीत्याह ॥ १० ॥

तृतीयप्रथमक्रुष्टान् कुर्वन्त्याह्वरकाः स्वरान् ॥ द्वितीयाद्यांस्तु मन्द्रांतार्ऽ० स्तैत्तिरीयाश्चतुरः स्वरान् ॥ ११ ॥

छन्दोगानां वाजसनेयिनां च ब्राह्मणो गाथास्वरो प्रथमद्वितीयो भवतइत्याह ॥ १२ ॥

प्रथमश्च द्वितीयश्च तृतीयोऽथ चतुर्थकः ॥ मन्द्रः क्रुष्टो ह्यतिस्वार(१)एतान् कुर्वंति सामगाः ॥ १२ ॥

द्वितीयप्रथमावेतौ ताण्डिभाल्लविनां स्वरौ ॥ तथा शातपथावेतौ स्वरौ वाजसनेयिनाम् ॥ १३ ॥

ताण्ड्यपञ्चविंशादिकं ब्राह्मणं कौथुमादयोऽधीयन्त इति ताण्डिनः भाल्लविनः छन्दोगा एव वाजसनेयिनाम् ॥ १३ ॥

एते विशेषतः प्रोक्ताः स्वरा वै सार्ववैदिकाः ॥ इत्येतच्चरितं सर्वं स्वराणां सार्ववैदिकमिति ॥ १४ ॥

सर्ववेदेषु भवं चरितं स्वरितम् ॥ १४ ॥

इति प्रथमा कण्डिका ॥ अथ द्वितीया कण्डिका ॥ अथ छन्दोगानां सामगाने आर्चिके च स्वरनिरूपणं विशेषतः क्रियते ॥

ग्रन्थाल्पलक्षणस्य निराकांक्षात्प्रभूतार्थं सामस्वराणां दृष्टादृष्टेनाधिगमात्तदुपास्यश्रव्यं, उत्तमं वेदाङ्गवेदस्वरूपविषयत्वात्सामगतं स्वरादिनिरूपणं तावत् क्रियते, सामार्थं, सामर्थ्यादार्चिकस्य ॥ १ ॥

सामवेदे तु वक्ष्यामि स्वराणां चरितं यथा ॥ अल्पग्रन्थं प्रभूतार्थं श्रव्यं वेदाङ्गमुत्तमम् ॥ १ ॥

तानरागस्वरग्राममूर्छनानां तु लक्षणम् ॥ पवित्रं पावनं पुण्यं नारदेन प्रकीर्तितम् ॥ २ ॥

शिक्षामाहुर्द्विजातीनामृग्यजुः सामलक्षणम् ॥ नारदीयमशेषेण निरुक्तमनुपूर्वशः ॥ ३ ॥

पवित्रं यावदुक्तमनुपूर्वशः, अनर्थोऽभ्यर्थ्यं त्यक्तम् ॥ ३ ॥

(१) पुनातीति "ख" पुस्तकपाठः ॥

सप्त स्वरास्त्रयो ग्रामा मूर्छनास्त्वेकविंशतिः ॥
ताना एकोनपञ्चाशदित्येतत्स्वरमण्डलम् ॥ ४ ॥

स्वराणां समूहो मण्डलं तस्य नाम्ना निरूपणं क्रियते श्लोकानुरोधात्क्रमो न विवक्षितः ॥ ॥

षड्जश्च ऋषभश्चैव गान्धारो मध्यमस्तथा ॥ पञ्चमो धैवतश्चैव निषादः सप्तमः स्वरः ॥ ५ ॥

षड्जानुसारेण कदाचित्स्वरः प्रवर्तते कदाचिन्मध्यमानुसारेण गान्धारानुसारेण वा अतएव ग्रामत्रयमेव प्रधानमुखेनेतरेषामवधारणादेकदेशी यावदधिकदेशेन यथा जनपदादेर्ग्राममत्वं गान्धारानुसारेण तु मनुष्यलोके स्वरावस्थानेन स्फुटमुपलभ्यत इत्याह ॥ ५ ॥

दीप्तायता स्वरश्रुतिविशेषपरैव ग्रामाणां ग्रामरागाः, रागप्रकाराश्च-वधारयन्त इत्याह ॥

षड्जमध्यमगान्धारास्त्रयो ग्रामाः प्रकीर्तिताः ॥
भूर्लोकाज्जायते षड्जो भुवर्लोकाच्च मध्यमः ॥ ६ ॥

परस्परं स्वराणां तननात्तानाः विचित्रेण मध्यमादनंतरङ्गांधारतः षड्जः ततऋषभ इत्येवं प्रकारेण स्वराणां प्रयोगे मध्यमग्रामे विंशतिस्ताना भवन्ति तथा षड्जग्रामे चतुर्दश, गान्धारग्रामे पञ्चदशेत्येवं एकोनपञ्चाशदुच्यन्ते तानाः ॥ ७ ॥

स्वर्गान्नान्यत्र गान्धारो नारदस्य मतं यथा ॥ स्वररागविशेषेण ग्रामरागा इति स्मृताः ॥

विंशतिं मध्यमग्रामे षड्जग्रामे चतुर्दश ॥ तानान्पञ्चदशेच्छन्ति गान्धारग्रामसंश्रितान् ॥ ८ ॥

या च बलानाम अथैताः सप्तेति सन्वयः ॥ ८ ॥

नन्द्रो विशाला सुमुखी चित्रा चित्रवती सुखा ॥
बला या चाथ विज्ञेया देवानां सप्तमूर्छना ॥ ९ ॥

स्वराणां समुच्छ्रयणादूर्ध्वमुच्छ्रयणात्प्रेरणं मूर्छना प्रतिग्रामं स्वरसप्तकभावनादेकविंशतिर्भवति, नन्दी विशालेति, देवापित्र्यामूर्छनासप्तकमुक्ता न तु ग्रामा षड्जऋषभा अतश्च ग्रामत्रये देवानां सप्त तथा पितॄणां ऋषीणां च सप्त नन्दी विशाला सुमुखी चित्रा चित्रवती सुखाबला वा इत्यर्थानुसारेण न संज्ञाः, देवतानामर्थं चेत्यागमनएवावगंतव्यं यथा स्वरवर्णनिर्देशः ॥ १० ॥

आप्यायिनी विश्वभृता चन्द्रा हेमा कपर्दिनी ॥ मैत्री वार्हती चैव पितॄणां सप्त मूर्छनाः ॥ १० ॥

षड्जे तूत्तरमन्द्रा स्यादृषभे चाभिरुद्गता ॥ अश्वक्रान्ता तु गान्धारे तृतीया मूर्छना स्मृता ॥ ११ ॥

मध्यमे खलु सौवीरा हृष्यका पञ्चमे स्वरे ॥ धैवते चापि विज्ञेया मूर्छना तूत्तरायता ॥ १२ ॥

सप्तउत्तरमन्द्राभिरुद्गताश्वक्रांता सौवीरा हृष्यका उत्तरायता रजनीति षड्जादिस्वरगताः सप्तऋषिसम्बन्धिन्यउक्ताः देवमूर्छनानां गन्धर्वा अनुयायिनः, पितृमूर्छनानां तु यक्षाः, ऋषिमूर्छनानां मनुष्या इत्याह ॥ ११ । १३ ॥

निषादाद्रजनीं विद्यादृषीणां सप्तमूर्छना ॥ उपजीवन्ति गन्धर्वा देवानां सप्त मूर्छनाः ॥ १३ ॥

पितॄणां मूर्छना सप्त तथा यक्षा न संशयः ॥ ऋषीणां मूर्छनाः सप्त यास्त्विमा लौकिकाः स्मृताः ॥ १४ ॥

उत्तरमन्द्रादिका या मूर्छना ऋषीणां सम्मता लौकिकादिति षड्जादिभिः सप्तभिः स्वरैरुच्चार्यमाणैर्देवादयः परितुष्यन्तीत्याह ॥ १३ ॥

षड्जः प्रीणाति वै देवानृषीन् प्रीणाति चर्षभः ॥ पितॄन्प्रीणाति गान्धारो गन्धर्वान्मध्यमः स्वरः ॥ १५ ॥

देवान्पितॄनृषींश्चैव स्वरः प्रीणाति पञ्चमः ॥ यक्षान् निषादः प्रीणाति भूतग्रामं च धैवत इति ॥ १६ ॥ इति प्रथमे द्वितीया कण्डिका ॥

लौकिकं च वैदिकं च गानं दशगुणयुक्तं तु वैदिकार्यमित्युच्यते, ॥

गानस्य तु दशविधा गुणवृत्तिस्तद्यथा रक्तं पूर्णमलङ्कृतं प्रसन्नं व्यक्तं विक्रुष्टं श्लक्ष्णं समं सुकुमारं मधुरमिति गुणाः ।

गानस्य तु दशगुणाः रक्तादीनां परस्परविवेकेन स्वरूपनिर्देशं क्रियते ॥ १ ॥

तत्र रक्तं नाम वेणुवीणास्वराणामेकीभावे रक्तमित्युच्यते ॥ १ ॥

वंशवीणापुरुषस्वराणामभेदे सति या रंजना तद्रक्तं गानम् ॥ १ ।

पूर्णं नाम स्वरश्रुतिपूरणाच्छन्दः पादाक्षरसंयोगात्पूर्णमित्युच्यते ॥ २ ॥

स्वरो मध्यमादिस्वरविशेषः स्वरश्रुत्योरनयोः करणं पूरणं छन्दसः पादानामक्षराणि च संयोगात्स्फुटमुच्चारणात्पूर्णम् ॥ २ ॥

अलङ्कृतं नामोरसि शिरसि कण्ठयुक्तमित्यलङ्कृतम् ॥ ३ ॥

कण्ठयुक्तं प्रथमे स्थाने यदवस्थितं तं नीचैरुरसि स्थितं क्रियते शिरसि चोच्चैर्वाणी क्रियते तदलंकृतं भवति ॥ ३ ॥

प्रसन्नं नामापगतगद्गदं निर्विशङ्कं प्रसन्नमित्युच्यते ॥ ४ ॥

कण्ठनिष्पीडनेनोच्चारणं गद्गदमपगतं यत्रेते निर्गता विविधा शङ्का यत्र तत्प्रसन्नं श्लोकमन्तर्गतानां पदादीनां गीत्याऽवधारणं सम्यगवधारणात्व्यक्तं गानमित्यर्थः ॥ ४ ॥

व्यक्तं नाम पदपदार्थप्रकृतिविकारागमलोपकृत्तद्धितसमासधातुनिपातोपसर्गस्वरलिङ्गवृत्तिवार्त्तिकविभक्त्यर्थवचनानाम् सम्यगुपपादने व्यक्तमित्युच्यते ॥ ५ ॥

पदस्यार्थानुसारेण प्रकृतेर्धातोः प्रातिपदिकस्य द्रव्यावधारणा वृद्ध्यादिका विकाराः, असुगित्याद्यागमउपधादिलोपः, कृत्तद्धितप्रत्ययाः इयं प्रकृतिश्चायं धातुरयं निपातभागोऽयमुपसर्गभागइति विवेक्तव्यं, द्वन्द्वतत्पुरुषादयः समासाः, स्वरउदात्तादिः, स्त्रीपुंनपुंसकानि लिङ्गानि सामान्येनावधारणार्थं, वृत्तिः ऊहापोहवशेनार्थावधारणं वार्त्तिकं कर्तृकर्माद्यवधारणं विभक्त्यर्थः । एकद्विबहुत्वावगमो वचनं एवं परिज्ञाने व्यक्ततावगमः ॥ ५ ॥

विक्रुष्टं नामोच्चैरुच्चारितं व्यक्तपदाक्षरमिति विक्रुष्टम् ॥ ६ ॥

उच्चैरुच्चार्यमाणेऽपि पदाक्षराणां स्फुटता यत्र भवति नाव्यक्तत्वं तद्विक्रुष्टम् ॥ शोभनया त्वरितादिकमावृत्यावर्त्तइति ॥

श्लक्ष्णं नामाद्रुतमविलम्बितमुच्चनीचप्लुतसमाहारहेलतालोपनयानादिभिरुपपादनादिभिः श्लक्ष्णमित्यु-

च्यते ॥ ७ ॥

अतश्च ह्रस्वमेकमात्रं दीर्घं द्विमात्रं दीर्घांश्च विषम्य कार्यमिति-सामर्थ्यादुक्तं भवति इलया सह वेलया तस्य द्रुताया वृत्तेरुपनद्धतः सम्पादनं आदिग्रहणेन मध्यमाया विलम्बितायाश्च ग्रहणं तच्च स्फुटवाचपुटाश्चवत्तत्पीता पुत्रीयतयाम्महत्तयो गीतिरुच्यते ॥ ७ ॥

अत्वरितं गानमद्रुतं विशुद्धं समविलम्बितं उच्चनीचप्लुतानां सः माहरणं यत्र नात्युच्चं मातिनीचं प्लुतं त्रिमात्रं वा ॥

स्वरस्यापूरणं प्रक्षेपआवापः निर्वापा न्यूनताकरणं तेषामावा-पनिर्वापप्रदेशानां प्रत्यन्तरेषु व्यवस्थितस्थानेषु समासमं प्रक्षेपो न व्युत्क्रमेणातिसमं गानं भवति ॥ ८ ॥

समं नामावापनिर्वापप्रदेशप्र० प्रत्यन्तरस्थानाना-ऽ० समासः सममित्युच्यते ॥ ८ ॥

मृदुभिः पदाद्युच्चारणैर्युक्तं न कठिनैः कुहरणमव्यक्तानां वर्णा-नां कण्ठनिष्पीडनेनोच्चारणम् ॥ ६ ॥

सुकुमारं नाम मृदुपदवर्णस्वरकुहरणायुक्त ऽ०सु-कुमारमित्युच्यते ॥ १० ॥

ललिताः प्रहर्षिताः मुखा ये निःसृता पदाक्षरगताः गुणा-स्तैः सुखकरं गानं उपसंहरति पूर्वोक्तम् ॥ १० ॥

मधुरं नाम स्वभावोपनीतललितपदाक्षरगुणस-मृद्धं मधुरमित्युच्यते ॥ १० ॥

एवमेतैर्दशभिर्गुणैर्युक्तं गानं भवति एतद्विपरी-ता गीतिदोषा उच्यन्ते, भवन्ति चात्र श्लोकाः ॥

शङ्कितस्य च भीतस्य च गानं शङ्कितं भीतं क्षुब्धं गानमुद्घृष्टं

अव्यक्तमस्फुटं नासिकास्थानप्राधान्येन गानमनुनासिकं कण्ठस्था-नानिष्पीडनेन गानं काकस्वरं अत्युच्चैरपरिपूर्णं गानं शिरसि गतं एकस्थानविषयस्य गानस्यानेकस्थाने योगात्स्थानविवर्जितं यस्मिन्पर्वणि यत्स्वरितं विहितं तस्याविरामाद्विस्वरं गानमध्ये चित्तव्याक्षेपाद्विरसं पर्वणामप्राप्तव्यवधानकरणं च विश्लिष्टं प्लुतस्य शीघ्रं ह्रस्वदीर्घयोश्च विलम्बितं पातनं विषमाहतं ॥ वर्णस्वरादि-वैषम्येन गानं व्याकुलं वृत्तिनाम नियमेन प्रवृत्तं तालुहीनम् ॥ २ ॥

शङ्कितं भीतमुद्घृष्टमव्यक्तमनुनासिकम् ॥ काकस्वरं शिरसि गतं तथा स्थानविवर्ज्जितम् ॥ ११ ॥

विस्वरं विरसं चैव विश्लिष्टं विषमाहतम् ॥ व्याकुलं तालुहीनं च गीतिदोषाश्चतुर्द्दश ॥ १२ ॥

समपदच्छेदमधुरोच्चरूपं गानं चतुष्प्रकारं गानं कर्त्तव्यमित्या-चार्यादिमुख्येनोच्यते न तु समादीनां विकल्पः, विक्रुष्टं तु न निपात-मितरग्रहणात् वर्णस्वरछन्दोमन्त्रसमाधिष्ठात्र्यो देवता भवन्ति तासां चेच्छावशेनाधिष्ठानापेक्षया शरीरग्रहणे पद्मपत्रादिरूपता भवतीत्यागमादवधार्यतइत्याह, ॥ १२ ॥ तृतीया कण्डिका ॥ (१)

आचार्याः सममिच्छन्ति पदच्छेदन्तु पण्डिताः ॥ स्त्रियो मधुरमिच्छन्ति विक्रुष्टमितरे जनाः ॥ १३ ॥

पञ्चमस्योत्कर्षान्मध्यमषड्जयोश्च ग्रामत्वाद्ब्राह्मणमुत्कर्षसामान्या-त्ऋषभधैवतयोश्च बलयोगात्क्षत्रियत्वं गान्धारस्य मध्यमादेवारोहा-वरोहाद्वैश्यता। निषादस्यावरोहाद्वैश्यत्वं शूद्रत्वं च प्रतिपाद्यते, दुःखबा-हुल्यस्य मध्यमस्य लक्षणमेवमर्थात्क्रियते यथा स्वरसन्निवेशेन ग्राम-वैचित्र्यं लौकिके गाने एवं स्वरसन्निवेशे वैचित्र्यात्सामगानमस्य ल-

(१) इति तृतीयखण्डः । इति "ख" पुस्तकपाठः सर्वत्र बोध्यः ॥

लक्षणमेवमर्थं क्रियतेऽनन्तप्रभेदं भवतीति १ । । ३ । ॥ ४ ॥

पद्मपत्रप्रभः षड्ज ऋषभं शुकपिंजरः ॥ कनकाभस्तु गान्धारो मध्यमः कुन्दसप्रभः ॥ १ ॥

पञ्चमस्तु भवेत्कृष्णः पीतकं धैवतं विदुः ॥ निषादः सर्ववर्णः स्यादित्येताः स्वरवर्णताः ॥ २ ॥

पञ्चमो मध्यमः षड्ज इत्यत्येते ब्राह्मणाः स्मृताः ॥ ऋषभो धैवतश्चापीत्येतौ चत्रियावुभौ ॥ ३ ॥

गान्धारश्च निषादश्च वैश्यावर्द्धेन वै स्मृतौ ॥ शूद्रत्वं विद्धि चार्द्धेन पतितत्वान्न संशयः ॥ ४ ॥

ऋषभादनन्तरं योऽसौ षड्जस्तेन धैवतसहितः पञ्चमसहितो यत्र गानं मध्यमरागे मध्यमस्य ग्रामे तं निषादं षांडवं जानीयात् गान्धाराभावात्षांडवं स्वरपञ्चकेन गीयमानस्य मध्यमस्योदितत्वेन लक्षणं क्रियते । ५ ॥

ऋषभोत्थिताः षड्जहतो धैवतसहितश्च पञ्चमो यत्र ॥ निपतति मध्यमरागे तन्निषादं षाडवं विद्यात् ॥ ५ ॥

मध्यमराग इत्यनुवर्त्तते मध्यमे पञ्चमस्य विरामे गान्धारः तत ऋषभस्ततो निषादः पञ्चम इति क्रमः पुनर्मध्यमलक्षणमुच्यते ॥ ६ ॥

यदि पञ्चमो विरमते गान्धारश्चान्तरस्वरो भवति ॥ ऋषभो निषादसहितस्तं पञ्चममीदृशं विद्यात् ॥ ६ ॥

मध्यमप्रारम्भे गान्धारस्याधिपत्यमाधिक्यं यदा भवति निषादस्यगमनागमनं च पुनः पुनरुच्चारणाद्धैवतस्य च दौर्बल्यं सकृदुच्चारणं षड्जऋषभे पञ्चानां सामान्येनावस्थानं तदा मध्यमग्रामो भवति

षड्जग्रामस्य लक्षणं क्रियते ॥ ७ ॥

गान्धारस्याधिपत्येन निषादस्य गतागतैः ॥ धैवतस्य च दौर्बल्यान्मध्यमग्राममुच्यते ॥ ७ ॥

षड्जमारम्भे निषादस्य लाघवेनोच्चारणं गान्धारस्य चाधिकेनोच्चारणं धैवतस्य च कंपनपातनं स्वरान्तराणामनन्तरं यथारुचि गानमेवं षड्जग्रामो भवति षड्जग्रामरागलक्षणं क्रियते ॥ ८ ॥

ईषत्स्पृष्टो निषादस्तु गान्धारस्याधिको भवेत् ॥ धैवतः कंपितो यत्र षड्जग्रामं तु निर्दिशेत् ॥ ८ ॥

षड्जप्रारम्भे चतुःश्रुतिकएव निषादो यदा भवति तदा पञ्चमस्थं परमुपर्यवस्थितं तं साधारितं सहर्शं श्रुतिकैशिकसंज्ञं गीतकं भवतीति मध्यमे ग्रामरागे लक्षणं च श्लोकद्वयेनोदाहरणं तथा क्रियते ॥ ९ ॥

अन्तरस्वरसंयुक्ता काकलिर्यत्र दृश्यते ॥ तं तु साधारितं विद्यात्पञ्चमस्थं तु कैशिकम् ॥ ९ ॥

पूर्वोक्तकैशिकं यदा सर्वैः स्वरैर्भाव्यते योज्यते मध्यमादुपक्रम्यते मध्यमे च न्यस्यते तत्र स्थाप्यते यदा कैशिकंमध्यमो ग्रामरागो भवतीति मध्यमग्रामादुत्पन्नस्य काकलिरेव श्रुतिको निषादो भवति पञ्चमस्य प्राधान्यं पुनः पुनरुच्चारणं शेषाणि स्वरान्तराणि सामान्येन वर्तंते तदामध्यमग्रामसंभवं कैशिकं कश्यपऋषिराह वीणादिसहितं हस्तांगुलिचातुर्येणाभ्यस्तं स्फुटं यदा च तं भवति तदनुसारेण सामस्वराधिगमः सम्यग्भवति निर्वचनेन प्रणिगद्यते ॥ ११ ॥

कैशिकं भावयित्वा तु स्वरैः सर्वैः समन्ततः ॥ यस्मात्तु मध्यमे न्यासस्तस्मात्कैशिकमध्यमः ॥ १० ॥

काकलिर्दृश्यते यत्र प्राधान्यं पञ्चमस्य तु ॥ कश्यपः कैशिकं प्राह मध्यमग्रामसम्भवम् ॥ ११

गेति गेयं विदुः प्राज्ञा धेति कारुप्रवादनम् ॥ वेति वाद्यस्य सञ्ज्ञेन गान्धर्वस्य विरोचनमिति ॥ ११ ॥

गन्धर्वेभ्य आगतं गान्धर्वं तस्यात्तरोपलक्षितार्थप्रतिपादनेन विरोचनं विशेषतो रोचनमुद्दीपनं भवति रोशब्देन गानं लक्ष्यते "धकारेण वकारेण वैणिकस्य प्रवादनं" चातुर्येण हस्तांगुलिधारणप्रवादनपदेन कथिते वकारेण वादनं लक्षितम् ॥ १२ ॥

चतुर्थी कण्डिका ॥ लौकिके गाने स्वराणां मध्यमादिस्वरशब्दैर्व्यवहारस्त्वयं प्रायेण सर्वेषां सर्वस्य स्वरभावतो, वैदिके तु पञ्चमनिषादानां क्वचिदेव भवेद्य—

स्वाङ्गुलिनिवेशनेन च संम्यगवधारणात्प्रथमादिसञ्ज्ञा । अङ्गुलिनिवेशनं च स्वराणां क्रियते ॥

यः सामगानां प्रथमः सवेणोर्मध्यमः स्वरः ॥ यो द्वितीयः स गान्धारस्तृतीयस्त्वृषभः स्मृतः १ ॥

चतुर्थः षड्ज इत्याहुः पञ्चमो धैवतो भवेत् ॥ षष्ठे निषादो विज्ञेयः सप्तमः पञ्चमः स्मृतः ॥ २ ॥

वेणुर्वंशः स्वपरिज्ञानार्थमुच्यते ॥ २ ॥

षड्जं वदति मयूरो गावो रम्भन्ति चर्षभः ॥ अजाविके तु गान्धारं क्रौञ्चो वदति मध्यमम् ॥ ३ ॥

पुष्पसाधारणे काले कोकिला वक्ति पञ्चमम् ॥ अश्वस्तु धैवतं वक्ति निषादो वक्ति कुञ्जरः ॥ ४ ॥

रमन्ति उच्चारयन्ति पुष्पाणां नाम जातीप्रभृतीनां साधारणे

भवकालो वसन्तः तत्र वसन्ते बहून्युच्चावचानि पुष्पाणि सम्भवन्ति प्राधान्येन कण्ठादिस्थानतः षड्जादीनामित्याह ॥ ३ ॥ ॥ ४ ॥

कण्ठादुत्तिष्ठते षड्जः शिरसस्त्वृषभः स्मृतः ॥ गान्धारस्त्वनुनासिक्य उरसो मध्यमः स्वरः ॥ ५ ॥

उरसः शिरसः कण्ठादुत्थितः पञ्चमः स्वरः ॥ ललाटाद्धैवतं विद्यान्निषादं सर्वसन्धिजम् ॥ ६ ॥

मुखेनानुगता नासिका अनुनासिकायां भवोऽनुनासिक्यः उरसउत्थितः मध्यमः स्वरः ललाटादुत्पन्नं सर्वेभ्यः कण्ठादिभ्यः सन्धिभ्यो जायतइति सर्वसन्धिजं विद्यात् कण्ठादिभ्य उत्पाद्यमानाः षड्जादयोऽन्यानपि स्थानानि गुणत्वेन स्पृशन्तीत्याह ॥ ५ ॥ ॥ ६ ॥

नासां कण्ठमुरस्तालुजिह्वा दन्तांश्च संश्रितः । षड्भिः सञ्जायते यस्मात्तस्मात्षड्जइति स्मृतः ॥

ऋषभः शिरसउत्पद्यमानः कण्ठमपि स्पृशतीत्युच्यते ॥ ७ ॥

वायुः समुत्थितो नाभेः कण्ठशीर्षसमाहतः ॥ नर्दत्यृषभवद्यस्मात्तस्मादृषभउच्यते ॥ ८ ॥

गान्धारः शिरसो नासिकाप्रदेशादुत्पन्नः कण्ठमभि स्पृशतीत्याह ॥ ७ ॥ ८ ॥

वायुः समुत्थितो नाभेः कण्ठशीर्षसमाहतः ॥ नाना गन्धवहः पुण्यो गान्धारस्तेन हेतुना ॥ ९ ॥

शीर्षशब्देन नासिकोच्यते नासया गन्धानावहतीति नासा गन्धवहा नासिका गान्धारो वायुस्तन्निमित्तस्वरो गान्धारः पुण्यशोभनः उरसउत्पन्नो हृदयं नाभिं च स्पृशति मध्यमइत्याह ॥ ९ ॥

वायुः समुत्थितो नाभेरुरो हृदि समाहतः ॥ ना-

वति निषादस्यागमनागमनं च पुनः पुनरुच्चारणाद्धैवतस्य च दीर्घत्वं सकृदुच्चारणं षड्जऋषभे पञ्चानां सामान्येन स्थानं तदा मध्यमग्रामो भवति षड्जग्रामस्य लक्षणं क्रियते ॥ ७ ॥

ईषत्स्पृष्टो निषादस्तु गान्धारश्चाधिको भवेत् ।
धैवतः कंपितो यत्र षड्जग्रामं तु निर्दिशेत् ॥ ८ ॥

षड्जारम्भे निषादस्य लाघवेनोच्चारणं, गान्धारस्य चाधिकेनोच्चारणं, धैवतस्य च, कंपनपातनं स्वरान्तराणामनन्तरं यथारुचिगानमेवं षड्जग्रामो भवति षड्जग्रामरागलक्षणं क्रियते ॥ ८ ॥

अन्तरः स्वरसंयुक्ता काकलिर्यत्र दृश्यते ॥ तं तु साधारितं विद्यात्पञ्चमस्थं तु कैशिकम् ॥ ९ ॥

षड्जारम्भे चतुःश्रुतिक एव निषादो यदा भवति तदा पञ्चमस्य परस्मुपर्यवस्थितं तं साधारितं सदृशं श्रुतिकैशिकसदृशं गीतकं भवतीति मध्यमे ग्रामरागे लक्षणं च श्लोकद्वयेनोदाहरणं तथा क्रियते ॥ ९ ॥

कैशिकं भावयित्वा तु स्वरैः सर्वैः समन्ततः ॥ यस्मात्तु मध्यमे न्यासस्तस्मात्कैशिकमध्यमः ॥ १० ॥
काकलिर्दृश्यते यत्र प्राधान्यं पञ्चमस्य तु ॥ काश्यपः कैशिकं प्राह मध्यमग्रामसम्भवम् ॥ ११ ॥

पूर्वोक्तकैशिकं यदा सर्वैः स्वरैर्भाव्यते योज्यते मध्यमादुपक्रम्यते मध्यमे च न्यस्यते तत्र स्थाप्यते तदा कैशिकमध्यमो ग्रामरागो भवतीति मध्यमग्रामादुत्पन्नस्य काकलिरेव श्रुतिको निषादो भवति पञ्चमस्य प्राधान्यं पुनः पुनरुच्चारणं शेषाणि स्वरान्तराणि सामान्येन वर्त्तते । तदा मध्यमग्रामसंभवं कैशिकं काश्यपऋषिराह, वी-

षादिसञ्ज्ञितहस्ताङ्गुलिचातुर्येणाभ्यस्तं स्फुटं यदा च तं भवति तदनुसारेण सामस्वराधिगमः सम्यग्भवतीति निर्वचनेन प्रतिपाद्यते ॥ ११

गेति गेयं विदुः प्राज्ञा धेति कारुप्रवादनम् ॥ वेति वाद्यस्य सञ्ज्ञेयं गान्धर्वस्य विरोचनमिति ॥ ११ ॥

गन्धर्वेभ्य आगतं गान्धर्वं तस्याक्षरोपलक्षितार्थप्रतिपादनेन विरोचनं विशेषतो रोचनमुद्दीपनं भवति । गशब्देन गानं लक्ष्यते, धकारेण वकारेण वैणिकस्य प्रवादनं, चातुर्येण हस्ताङ्गुलिधारणं प्रवादनपदेन कथिते वकारेण वादनं लक्षितम् ॥ १२ ॥

चतुर्थी कण्डिका । लौकिके गाने स्वराणां मध्यमादिस्वरशब्दैर्व्यवहारः । अयं प्रायेण सर्वेषां सर्वस्य स्वरभावात् वैदिके तु पञ्चमनिषादानां कचिदेव भवेद्धस्ताङ्गुलिनिवेशनेन च सम्यगवधारणात्प्रथमादिसञ्ज्ञा अङ्गुलिनिवेशनं च स्वराणां क्रियते ॥

यः सामगानां प्रथमः स वेणोर्मध्यमः स्वरः ॥ यो द्वितीयः स गान्धारस्तृतीयस्त्वृषभः स्मृतः ॥ १ ॥

चतुर्थः षड्ज इत्याहुः पञ्चमो धैवतो भवेत् ॥ षष्ठे निषादो विज्ञेयः सप्तमः पञ्चमः स्मृतः ॥ २ ॥

वेणुवंशस्वरपरिज्ञानार्थमुच्यते ॥ २ ॥

षड्जं वदति मयूरो गावो रम्भन्ति चर्षभम् ॥ अजाविके तु गान्धारः क्रौञ्चो वदति मध्यमम् ॥ ३ ॥

पुष्पसाधारणेकाले कोकिला वक्ति पञ्चमम् ॥ अश्वस्तु धैवतं वक्ति निषादो वक्ति कुञ्जरः ॥ ४ ॥

रमन्ति उच्चारयन्ति पुष्पाणां नानाजातिप्रभृतीनां साधारणो भवकालो वसन्तः तत्र वसन्ते बहूनगुच्छाश्चानि पुष्पाणि सम्भवन्ति प्रा-

धान्येन कण्ठादिस्थानता षड्जादीनामित्याह ॥ ४ ॥

कण्ठादुत्तिष्ठते षड्जः शिरसस्त्वृषभः स्मृतः ॥ गा-
न्धारस्त्वनुनासिक्य उरसो मध्यमः स्वरः ॥ ५ ॥

उरसः शिरसः कण्ठादुच्छ्रितः पञ्चमः स्वरः ॥ ल-
लाटाद्धैवतं विद्यान्निषादं सर्वसन्धिजम् ॥ ६ ॥

मुखेनानुगतानासिका अनुनासिकायां भवोऽनुनासिक्यः उरस-
उत्तिष्ठते मध्यमः स्वरो। ललाटादुच्छ्रितः सर्वेभ्यः सन्धिभ्यो जाय-
तइति सर्वसन्धिजं विद्यात् कण्ठादिभ्य उत्पाद्यमानाः षड्जादयो
ऽन्यानपि स्थानानि गुणत्वेन स्पृशन्तीत्याह ॥ ६ ॥

नासां कण्ठमुरस्तालुजिह्वादन्तांश्च संश्रितः ॥
षड्भिः सञ्जायते यस्मात्तस्मात्षड्जइति स्मृतः ॥ ७ ॥

ऋषभः शिरसउत्पद्यमानः कण्ठमपि स्पृशतीत्युच्यते ॥ ७ ॥

वायुः समुत्थितो(१) नाभेः कण्ठशीर्षसमाहतः ॥ न-
र्दत्यृषभवद्यस्मात्तस्मादृषभउच्यते ॥ ८ ॥

गान्धारः शिरसो नासिकाप्रदेशादुत्पन्नः कण्ठमपि स्पृशतीत्या-
ह ॥ ८ ॥

वायुः समुत्थितो नाभेः कण्ठशीर्षसमाहतः ॥ ना-
सा गन्धावहः पुण्यो गान्धारस्तेन हेतुना ॥ ९ ॥

शीर्षशब्देन नासिकोच्यते नासया गन्धानावहतीति नासाग-
न्धावहो नासिक्यो गान्धारो वायुस्तन्निमित्तस्वरो गान्धारः पुण्य-
शोभनः उरसउत्पन्नो हृदयं नाभिं च स्पृशति मध्यमइत्याह ॥ ९ ॥

---

(१) समुच्छ्रित इति पाठश्चतुर्षु स्थानेषु पाठो बोध्यः ॥

वायुः समुच्छ्रितो नाभेरुरो हृदि समाहतः ॥ नाभिं प्राप्तो महानादो मध्यमत्वꣳ समश्नुते ॥ १० ॥

नाभेरधस्थात् उत्क्रान्तात् मध्ये च स्थानादुच्चनीचमवस्थानाच्च मध्यमत्वं कण्ठादिभ्यउत्पन्नो नाभिहृदयस्पर्शनात्पञ्चमस्थानः पञ्चमेत्याह ॥ १० ॥

वायुस्समुत्थितोनाभेरुरोहृत्कण्ठशिरोहतः ॥ पञ्चस्थानोत्थितस्यास्य पञ्चमत्वं विधीयते ॥ १० ॥

निषादस्य सर्वसन्धिजत्वाद्धैवतस्य मुख्यतया ललाटजत्वेऽपि सर्वसन्धिस्पर्शात्षड्जस्य षट्स्थानत्वं शेषाः स्वराः गौणेन मुख्येन च रूपेण पञ्चस्थानानि स्पृशन्तीत्याह ॥ ११ ॥

धैवतं च निषादं च वर्ज्जयित्वा स्वरद्वयम् ॥ शेषान्पञ्चस्वरांꣳ स्त्वन्यान्पञ्चस्थानोच्छ्रितान्विदुः ॥ १२ ॥
पञ्चस्थानस्थितत्वेन सर्वस्थानानि धार्यते ॥

अतो न षड्जस्य पञ्चस्थानत्वमेव साध्यस्यादौ षाड्जादिस्वरगामान्यवस्थादिरूपतामात्मनि चिन्तयेदित्युच्यते ॥

अग्निगीतः स्वरः षड्ज ऋषभो ब्रह्मणोच्यते ॥ १३ ॥
सोमेन गीतो गान्धारो विष्णुना मध्यमः स्वरः ॥
पञ्चमस्तु स्वरो गीतो नारदेन महात्मना ॥ १४ ॥
धैवतस्य निषादस्य गीतौ तुम्बुरुणा स्वरौ ॥

अधिष्ठात्र्यो देवताउच्यन्ते ॥

आद्यस्य दैवतं ब्रह्मा षड्जस्याप्युच्यते बुधैः ॥ १५ ॥
तीव्रत्वाद्दीप्तिमत्त्वाच्चाद्दृषभस्य हुताशनः ॥

आर्षो मध्यमगम्भीरं स्वरूपञ्च। तीक्ष्णदीप्तिप्रकाशत्वादग्निदैवतत्वमृषभम्॥ १५॥

गावः प्रगीते तुष्यन्ति गान्धारस्तेन हेतुना॥ १६॥
श्रुत्वा चैवोपतिष्ठन्ति सौरभेया न संशयः॥

गोर्दैवता गान्धारस्य गान्धारयति सन्निहितं करोतीति गान्धारः गान्धारोच्चारणेन च सौरभेया गावउपतिष्ठन्ति गोदैवताप्रसादात्

सोमस्तु पञ्चमस्यापि दैवतं ब्रह्मराट्स्मृतम्॥ १७॥
निर्ह्रासो यस्य वृद्धिश्च ग्राममासाद्य सोमवत्॥

सोमश्चन्द्रमाः॥ ब्रह्मराट् ब्राह्मणानां राजा पञ्चमस्य दैवतम् सोमस्य यथा कृष्णपक्षे निर्ह्रासः शुक्ले च वृद्धिरित्येवं षड्जमध्यमगतस्य पञ्चमस्योच्चगीतित्वाद्वृद्धिः स्वरस्यासम्भवात् ह्यनिर्ह्रासः उत्तरस्याभवति सोमसाधर्म्यं अतिसन्धीयते यस्मादेतान्पूर्वोक्तान्स्वरान्॥ १८॥

तस्मादस्य स्वरस्यापि धैवतत्वं विधीयते॥ १८॥
निषीदन्ति स्वरा यस्मान्निषादस्तेन हेतुना॥ सर्वांश्चाभिभवत्येष यदादित्योऽस्य दैवतमिति॥ १९॥

मध्यमादीनां पूर्वोक्तानां पूर्वमुत्पन्नानामतिसन्धाना निषारणाद्वा अतो धैवतः निरोधाकरणात्स्यवन्तीति यथादित्यो ग्रहनक्षत्राणि रुणद्धि एवं निषादे निषीदन्ति अस्तभवन्तीव स्वरास्तत्र पर्यवसानेन चाभिभवोऽपसारणमिव क्रियते सूर्येणेव ज्योतिषां आदित्योऽस्य धैवतस्य निषादस्य दैवतमित्यर्थः. एवं लौकिके वैदिके च गानसाधारणीयन लक्षणमुक्त इदानीं सामविशेषमुच्यते। पञ्चमी कण्डिका॥

दारवी गात्रवीणा च द्वे वीणे गानजातिषु॥ सा

मिश्री गात्रवीणा तु तस्याः शृणुत लक्षणम् ॥ १ ॥

ओङ्कारो व्याहृतयः सावित्री च षड्भिरर्धर्चशस्त्रक्रमश इति सामसावित्री स्वाध्यायीविदस्यारम्भकाले प्रयोक्तव्येत्युच्यते ॥ १ ॥

गात्रवीणा तु सा प्रोक्ता यस्यां गायन्ति सामगाः ॥
स्वरव्यञ्जनसंयुक्ता अङ्गुल्यङ्गुष्ठरञ्जिता ॥ २ ॥

हस्तौ सुसंयुतौ धार्यौ जानुभ्यामुपरि स्थितौ ॥ गुरोरनुकृतिं (१)कुर्याद्यथा ज्ञानमतिर्भवेत् ॥ ३ ॥

प्रणवं प्राक्प्रयुञ्जीत व्याहृतीस्तदनन्तरम् ॥ सावित्रीं चानुवचनं ततो हस्तान्समारभेत् ॥ ४ ॥

व्याहृत्यनुवचनस्यपश्चादनुवचनं स्वाध्यायैर्यथावत्तनस्यानं वृत्तान्तं हस्ताङ्गुलीषु स्वरारोपणं सम्यग्गीत्यवधारणार्थं कर्त्तव्यमित्याह ॥ ४ ॥

प्रसार्य चाङ्गुलीः सर्वा रोपयेत्स्वरमण्डलम् ॥ न चाङ्गुलिभिरङ्गुष्ठमङ्गुष्ठेनाङ्गुलीः स्पृशेत् ॥ ५ ॥

हस्तेन चैव तन्त्रीरङ्गुलीः स्पृशेत् ॥ ५ ॥

विरला नाङ्गुलीः कुर्यान्मूले चैनानमष्ठं स्पृशेत् ॥ अङ्गुष्ठाग्रेण ता नित्यं मध्यमे पर्वणि स्पृशेत् ॥ ६ ॥

पूर्वोक्तं विशिष्यते अङ्गुष्ठस्याग्रेण संहतानामङ्गुलीनां यन्मध्यमं पर्व तत्र संस्पर्शः कार्यः ॥ ६ ॥

मात्रद्विमात्रवृद्धानां विभागार्थं विभागवित् ॥ अङ्गु-

(१) रनुमतिमिति "ख"पुस्तक पाठः ॥

नीभिर्द्विमात्रं तु पार्श्वे: सव्यस्य दर्शयेत् ॥ ७ ॥

त्रिरेखा यत्र दृश्येत सन्धिं तत्र विनिर्दिशेत् ॥ स पर्वं इति विज्ञेय: शेषमन्तरमन्तरम् ॥ ८ ॥

यवान्तरं तु सामस्त्र च कुर्यात्तिलान्तरम् ॥ स्वरान्मध्यमपर्वंसु सुनिविष्टान्निवेशयेत् ॥ ९ ॥

प्रथमद्वितीयस्वरयोर्यवप्रमाणं मध्यमं साम्नि, तिलमात्रमङ्गुष्ठतर्ज्जन्योर्मध्यमङ्गुलिविषये सुनिविष्टानिति स्वरोच्चारणसमकालमेव पर्वस्वङ्गुष्ठनियोजनं कार्यं नादौ पश्चाद्वा ॥ ९ ॥

नचात्र कम्पयेत्किंचिदङ्गस्यावयवं बुध: ॥ अधस्तनं मृदु न्यस्य हस्तमास्ते यथाक्रमम् ॥ १० ॥

अङ्गानां तदवयवानां च कम्पो न कार्य: अधो भवमधस्तनं अङ्गमूरुजङ्घादि मृदु न्यस्य सुखेनावस्थाप्य तत्र हस्तं दक्षिणं वामं च यथाक्रमं परिपाट्या दक्षिणं गोकर्णवद्वामसुत्तानमास्ते तिष्ठतीति ॥ १० ॥

अभ्रमध्ये यथा विद्युद्दृश्यते मणिसूत्रवत् ॥ एष च्छेदो विवृत्तीनां यथा बालेषु कर्त्तरि ॥ क्षेपक: ॥ ११ ॥

कूर्मोऽङ्गानीव संहृत्य चेष्टां दृष्टिं दिशन्मन: ॥ स्वस्थ: प्रशान्तो निर्भीतो वर्णानुच्चारयेद्बुध: ॥ १२ ॥

यथा कूर्मोऽङ्गानि संहरति तथाङ्गचेष्टां चक्षुरादि दिशन्दिगवलोकनं मनोव्यापारं चोपसंहृत्य सुखासनस्थश्चक्षुरादिव्याक्षेपोपसंहारात्प्रशान्तमनसो व्याकुलतानिवृत्तिनिर्भयो वर्णाद्युच्चारणं कुर्यात् दृष्टेनिधानं कृत्वा शिक्षाशास्त्रो दक्षिणहस्तसंनिवेश: कथ्यते ॥ १२ ॥

नासिकायास्तु पूर्वेण हस्तं गोकर्णवद्धरेत् ॥ निवेश्य दृष्टिं हस्ताग्रे शास्त्रार्थमनुचिन्तयेत् ॥ १२ ॥ (१)

नासिकां नामां मुख्येन दक्षिणहस्तं गोकर्णवत् नोत्तानं नाप्यधोमुखं हरेत् कुर्यात् हस्ताग्रे दृष्टिनिधानं कृत्वा शिष्यः शिक्षाशास्त्रोक्तमर्थं चिन्तयेत् ॥

सममुच्चारयेद्वाक्यं हस्तेन च मुखेन च ॥ यथैवोच्चारयेद्वर्णां स्तथैवैनां समापयेत् ॥ १४ ॥

प्रथमादिस्वरोच्चारणं समकालमङ्गुष्ठयोजनं कार्यं नादौ पश्चाद्वा द्रुतादिकया कृत्वा प्रारब्धो यथा प्रारब्धस्तथा मन्त्रः समापनीयः, न त्वेकस्मिन्नेव मन्त्रे वृद्धिद्वययोजना कार्या ॥ १४ ॥

नाभ्याहन्यान्न निर्हन्यान्न प्रगायेन्न कम्पयेत् ॥ समं सामानि गायेत व्योम्नि श्येनगतिर्यथा ॥ १५ ॥

यथाप्सु चरतां मार्गो मीनानां नोपलभ्यते ॥ आकाशे वा विहङ्गानां तद्वत्स्वरगता श्रुतिः ॥ १६ ॥

मत्स्यानां जले आकाशे च पक्षिणां मार्गे गमनं सामान्येनावगम्यते न तु पादविवरणपर्वकालेन एवं गीतिमात्रं विना प्रयत्नेनावगम्यते न गीतिविशेषोऽवधार्यते अभियुक्तवदभियोगाद्गीतिविशेषावधारणमित्याह ॥ १६ ॥

यथा दधनि सर्पिः स्यात्काष्ठस्थो वा यथाऽनलः ॥ प्रयत्नेनोपलभ्येत तद्वत्स्वरगता श्रुतिः ॥ १७ ॥

प्रथमस्वराद्द्वितीयस्वरादिस्वरगमनं न विच्छेदेन कार्यं नाप्युल्बणं

(१) मनुचिन्तयन्निति "ग" पुस्तकपाठः ॥

स्वरस्थानवेगकरणमतश्च समं भवति सूक्ष्मछायाऽऽतपउपमा यथा स्वरसन्धेः छायाया आतपस्य च यथा प्रदेशान्तरे सूक्ष्ममविच्छिन्नं सङ्क्रमणं तद्वदित्यर्थः, कर्षणे दोषषट्कं वर्ज्जयेदित्याह ॥ १७ ॥

स्वरात्स्वरं सङ्क्रमस्तु स्वरसन्धिमनुल्बणाम् ॥ अविच्छिन्नं समं कुर्यात्सूक्ष्मं छायाऽतपोपमम् ॥ १८ ॥
अनागतमतिक्रान्तं विच्छिन्नं विषमाहतम् ॥ तन्वन्तमस्थितान्तं च वर्ज्जयेत्कर्षणं बुधः ॥ १९ ॥

प्रथमस्वरं कर्षयन् द्वितीयस्वरं यदा भवति तदा अनागतं प्रथमतएवातिक्रान्ते च कर्षणं न कर्त्तव्यं स्वरमध्ये कार्याविच्छन्नं प्रथमां मात्रां विच्छिद्य कर्षणं कार्यं विषमाहतं कंपयन् द्वितीयस्वरं गच्छेत्, तन्वन्तमिति मात्रात्रयातिरेकेण विस्तारणं नकार्यं, अस्थितान्तं चेति द्वितीयस्वरे मात्रात्रययुक्ता स्थितिः कार्या नत्वेव द्विमात्रायुक्तेति ॥ १९ ॥

स्वरस्थानाच्च्युतो यस्तु स्वरं स्थानमतिवर्त्तते ॥ विस्वरं सामगाः कुर्युर्विरक्तमतिवीणिनः ॥ २० ॥

स्वरस्थानातिवर्त्तते न स्वरो यदा च्यवतेऽन्यथात्वं गच्छति तदा विस्वरशब्देन तं स्वरं सामगाः कथयन्ति वीणिनो गायनका विरक्तशब्देन व्यवहरन्ति ॥ २० ॥

अभ्यासार्थे द्रुतां वृत्तिं प्रयोगार्थे तु मध्यमाम् ॥ शिष्याणामुपदेशार्थे कुर्याद्वृत्तिं विलम्बिताम् ॥ २१ ॥

उपदेशार्थे पाठे विलम्बितया वृत्या शिष्याणां सम्यग्ग्रहणं भवति गृहीतस्य ग्रन्थस्य त्वरितया वृत्या धारणं कार्यं, स्वाध्यायादौ च प्रयोगेन मध्यमावृत्तिरदृष्टार्थत्वेनोचिता ॥ २१ ॥

गृहीतग्रन्थएवं तु ग्रन्थोचारणशिक्षकान् ॥ इत्ते नाध्यापयेच्छिष्यान् शैक्षेण विधिना द्विजः ॥ २२ ॥

एवमुक्तेन वक्ष्यमाणेन च शैक्षेण विधिना गृहीतो ग्रन्थः सामगानं येन सहस्तेन कारणभूतेन शिष्यानध्यापयितुं योग्यो नान्यग्रन्थोच्चारणाय शिक्षकः ॥ २२ ॥

षष्ठी कण्डिका समाप्ता ॥

पूर्वं क्रुष्टादीनामुत्पत्तिस्थानान्युक्तानि इदानीमुत्पन्नानामवस्थिति स्थानान्युच्यन्ते ॥

क्रुष्टस्य मूर्द्धनि स्थानं ललाटे प्रथमस्य तु ॥ भ्रुवोर्मध्ये द्वितीयस्य तृतीयस्य च कर्णयोः ॥ १ ॥

कण्ठस्थानं चतुर्थस्य मन्द्रस्योरसि तूच्यते ॥ अतिस्वारस्य नीचस्य हृदि स्थानं विधीयते ॥ २ ॥

क्रुष्टः सप्तमपञ्चमइत्युक्तः अतिस्वर्यते कनिष्ठामूलं नियत इति नीचस्वरः षष्ठो निषादः अङ्गुष्ठाङ्गुलियोजनं स्वराणां क्रियते उच्चनीचस्वरस्थाने संरक्षणार्थम् ॥

अङ्गुष्ठस्योत्तमे क्रुष्टोह्यङ्गुष्ठे प्रथमः स्वरः ॥ प्रादेशिन्यां तु गान्धारऋषभस्तदनन्तरम् ॥ ३ ॥

अनामिकायाषं षड्जस्तु कनिष्ठिकायां च धैवतः ॥ तस्याधस्ताच्च योन्यास्तु निषादं तत्र विन्यसेत् ॥ ४ ॥

अपर्वत्वादसञ्ज्ञत्वादव्ययत्वाच्च नित्यशः ॥ मन्द्रो हि नहि भूतस्तु परिस्वार इति स्मृतः ॥ ५ ॥

मन्द्रात्पृथग्भूतत्वाभावादपर्वत्वं, निषादस्य च अतएव सम्यक्पृथक्त्वेन ज्ञानादसञ्ज्ञत्वं अव्ययत्वलिङ्गविभक्तिवचनायोगात्, अतो मन्द्रो हि यस्माद्विनुहि भूतः। हुन्वेति प्रेरणं प्राप्तः परिस्वारी निषादइत्युच्यते, षष्टः हि गतावितिं लोपमध्यमपुरुषानुकारणेन प्रेरणं लक्ष्यते तरतमशब्दावातिशयः क्रुष्टादिगीतिश्रवणेन देवादीनां परितोषो भवति यथा मन्त्रोच्चारणेन गौतमादीनां सन्तसच्चेतने चाग्न्यादीनामभिधेयानामिति स्वाध्यायस्य सर्वोपकारता प्रतिपादनार्थमुच्यते ॥ ५ ॥

क्रुष्टेन देवा जीवन्ति प्रथमेनतु मानुषाः ॥ पशवस्तु द्वितीयेन गन्धर्वाप्सरसस्त्वनु ॥ ६ ॥

आण्डजाः पितरश्चैव चतुर्थस्वरजीविनः ॥ मन्द्रेश्चैवोपजीवन्ति पिशाचासुरराक्षसाः ॥ ७ ॥

अतिस्वारेण नीचेन जगत्स्थावरजङ्गमम् ॥ सर्वाणि खलु भूतानि धार्यते सामिकैः स्वरैः ॥ ८ ॥

द्वितीयस्यानुपश्चात्तृतीयेन स्वरेण गन्धर्वाप्सरसो जीवन्तीति स्थावरं जङ्गमं च जीवन्तीति वक्ते स्वरविशेषश्रुतिः प्रयोगार्थमवश्यमवधारयेत्युच्यते ॥ ८ ॥

दीप्तायता करुणानां मृदुमध्यमयोस्तथा ॥ श्रुतीनां यो विशेषज्ञो न स आचार्य उच्यते ॥ ९ ॥

अविशेषस्याचार्यस्याधिको दोषः न केवलमज्ञत्वात्स्वयं प्रत्यवैति अन्यान्यपि प्रत्यवायेन योजयतीत्याचार्यग्रहणम् ॥ ९ ॥

दीप्ता मन्द्रे द्वितीये च प्रचतुर्थे तथैव तु ॥ अतिस्वारे तृतीये च क्रुष्टे तु करुणा श्रुतिः ॥ ९ ॥

पञ्चानां स्वराणां दीप्ता श्रुतिः प्रथमस्य मृदुभूता सप्तमस्य करुणा ॥ १० ॥

श्रुतयोऽन्या द्वितीयस्य मृदुमध्यायताः स्मृताः ॥
तासामपि तु वक्ष्यामि लक्षणानि पृथक्पृथक् ॥ ११ ॥

द्वितीयस्वरस्य पूर्वं दीप्ता श्रुतिरुक्ता सांप्रति श्रुतित्रयमुपाधिवशेनोच्यते ॥ ११

आयतात्वं भवेन्नीचे मृदुत्वं तु विपर्यये ॥ स्वे
स्वरे मध्यमत्वं तु तत्समीक्ष्य प्रयोजयेत् ॥ १२ ॥

नीचे तृतीये स्वरे परतः स्थिते द्वितीयस्वरस्यायता श्रुतिः विपर्यये चतुर्थस्वरे परे भूते मृदुभूता स्वे स्वरे स्वरान्तरे अपरभूते मध्यमा श्रुतिः एवमवधार्य सामस्वरप्रयोगः कर्तव्यः, स न इन्द्रः शिवः सखा, उदुद्वेदभिश्रुतामघं वर्तोंहा इत्युदाहरणानि, द्वितीये दीप्ता पूर्वोक्ता कदा भवतीत्याह ॥ १२ ॥

द्वितीये विरता या तु क्रुष्टश्च परतो भवेत् ॥ दीप्तां तां तु विजानीयात्प्रथमे न मृदु स्मृताः ॥ १२ ॥
अत्रैव विरता या तु चतुर्थेन प्रवर्त्तते ॥ तथा मन्द्रे भवेद्दीप्ता साम्नश्चैव समापने ॥ १३ ॥

क्रुष्टे परभूते द्वितीये स्वरे या विरताऽवस्थिता श्रुतिः सा दीप्ता इ॥ २३ ॥ औ ज वा ॥ १२ ॥

ई ज ३ इत्युदाहरणं प्रथमे स्वरे मृदुभूता यदि तत्रैव विपरीताऽवस्थिता चतुर्थे स्वरेऽवस्थिता मृदुभूता भवति स्वरान्तरानुगमने सति अन्यथा दीप्ता भवति उपा ३ इति तथा मन्द्रे दीप्ता भवति स्वरान्तरगमने सति एवं सामसमाप्तौ यत्र तत्र स्वरेऽवस्थिता श्रुतिर्दी

मा भवतीति औ हो ३२ वा ३ हो ३२ हो ३ वा ३। हा ३२ इ-
डा ३ इत्यादिविरता दीप्ता या श्रुतिर्निषिध्यते ॥ १४ ॥

नाविरते श्रुतिं कुर्यात्स्वरयोर्नापि चान्तरे ॥ न
च ह्रस्वे च दीर्घे च नचापि घुटसञ्ज्ञके ॥ १५ ॥

स्वरिते अपरिसमाप्ता श्रुतिराश्रयतादिर्न कार्या श्रुतेरभावेऽपि
तत्सदृशः स्वरकार्यं इत्याह स्वरपरिसमाप्तावप्यविच्छिन्ने गाने स्वरयो-
र्मान्तरे मध्ये न कार्या, सेन इन्द्रः शिवः सखा इत्युदाहरणे ह्रस्वे
दीर्घे वा स्वरे गीयमाने न कार्या, प्लुते एव कार्या घुटसञ्ज्ञितं
किमित्याह ॥ १६ ॥

द्विविधा गतिः पदान्तः स्थितसन्धिः सहोष्मभिः ॥
पञ्चस्वेतेषु स्थानेषु विज्ञेयं घुटसञ्ज्ञकम् ॥ १६

तालव्यस्य इकारस्य आ इ भाव आ उ भावश्चेति, द्वे गती तयोः
श्रुतिर्न कार्या तथा पदान्तीयोऽपि त्रिविधः स्थितः सन्धिर्यस्य श-
षसैरूष्मभिः सह, अत्र दीप्ता इकाश्रुतिर्न प्रवर्त्तते एतेषां घुटइतिश-
ब्दान्तरेणाह वर्त्तनात् घुटइत्युच्यते पञ्चानां मध्ये यस्य श्रुतिः प्रा-
प्तातस्य निषिध्यते न सर्वत्र ॥ १६ ॥

स्वरान्तराविरतानि ह्रस्वदीर्घघुटानि च ॥ श्रुति-
स्थानेष्वशेषाणि श्रुतिवत्स्वरतो भवेत् ॥ १७ ॥

स्वरे स्वरान्तरे च अविरते ह्रस्वे दीर्घे घुटसञ्ज्ञिते च श्रुतिर्न
कार्या स्वरएव श्रुतिसदृशः कार्यइति सामान्यतिरिक्तेषु श्रुतिद्वयमे-
व वर्तत इत्याह ॥ १७ ॥

दीप्तामुदात्ते जानीयाद्दीप्तां च स्वरिते विदुः ॥
चानुदात्ते मृदुर्ज्ञेया गन्धर्वा श्रुतिसम्पदः ॥ १८ ॥

गान्धर्वं गाने श्रुतेरभावेऽपि तत्सदृशः स्वरः कार्यइत्याह ॥ स्वरसम्पद एतावद्गानादिविषये उदात्तादयस्त्रयः केन चिह्नविशेषेण पञ्चत्वेनोच्यते ॥ १८ ॥

उदात्तश्चानुदात्तश्च स्वरितप्रचिते तथा ॥ निघातश्चेति विज्ञेयः स्वरभेदस्तु पञ्चधा ॥ १९ ॥

स्वरितात्पराणि स्वरितान्येव प्रचयसञ्ज्ञानि प्रचये परतः स्थिते स्वरितस्याहननान्निघातः स्वरितएव प्रचयाभावे शुद्धएव स्वरितो भवति ॥ सप्तमी कण्डिका समाप्ता ॥ एवं साम्नस्वरानुषङ्गेण किञ्चिदृग्यजुर्विषयं स्वरलक्षणमुक्तं इदानीमार्चिकस्वरनिरूपणं प्राधान्येन क्रियते ॥ १९ ॥

अतऊर्ध्वं प्रवक्ष्याम्यार्चिकस्य स्वरत्रयम् ॥ उदात्तश्चानुदात्तश्च तृतीयः स्वरितः स्वरः ॥ १ ॥

मुख्यतां आर्चिके प्रचयं निघातादयः स्वरितविशेषएव स्वरितस्य सप्तप्रकारतां प्रतिपाद्यते ॥ १ ॥

यएवोदात्तइत्युक्तः सएव स्वरितात्परः ॥ प्रचयः प्रोच्यते तज्ज्ञैर्न चात्रान्यत्स्वरान्तरम् ॥ २ ॥

वर्णस्वारोऽतीतः स्वारः स्वरितो द्विविधः स्मृतः ॥ मात्रिको वर्णएवं नु दीर्घस्तुस्वरितादनु ॥ ३ ॥

स तु सप्तविधो ज्ञेयः स्वरः प्रत्ययदर्शनात् ॥ पदेन तु स विज्ञेयो भवेद्यो यत्र यादृशः ॥ ४ ॥

स्वरिते उदात्तानुदात्तमध्ये उच्चार्यतइति स्वारः स्वरितविशेषो रूढ्याऽध्येतृभिरुच्यते प्रतीयते विशेषोऽवगम्यते येन स प्रत्ययस्वर

रूपप्रत्ययस्य दर्शनादवगमात्सप्त प्रकारता ज्ञायते स्वरस्यापि स्वररूपविशेषावधारणं कार्यं नात्र लोपः कार्यइत्युच्यते ॥ ४ ॥

सप्त स्वरान्प्रयुञ्जीत दक्षिणं श्रवणं प्रति ॥ आचार्यैर्विहितं शास्त्रं पुत्रशिष्यहितैषिभिः ॥ ५ ॥

महता प्रबन्धेन स्वारलक्षणं पुत्राद्युद्देशेनाराद्ध्यमाचार्यैरतः श्रोत्रपथं सप्त स्वरा नेतव्याः दक्षिणस्य प्राधान्यादादरार्थमुपादानं उच्चनीचव्यतिरिक्तं स्वरितस्वरूपं नावधार्यते सम्यगिति तद्विषये स्वारपरिज्ञानं कुतो भवेदिति वोच्यते ॥ ५ ॥

उच्चादुच्चतरं नास्ति नीचान्नीचतरं तथा ॥ वैस्वर्यें स्वारसञ्ज्ञायाम् किं स्थानं स्वारउच्यते ॥ ६ ॥

वैस्वर्यें विशिष्टस्वरत्वेन या स्वारसञ्ज्ञा चेद्विषये किं स्वारस्य स्थानमुदात्तानुदात्तव्यतिरिक्तस्याभावात् अत्रोत्तरम् ॥ ६ ॥ (१)

उच्चनीचस्य यन्मध्ये साधारणमिति श्रुतिः ॥ तं स्वारं स्वारसञ्ज्ञायाम् प्रतिजानन्ति शैक्षिकाः ॥ ७ ॥

उदात्तानुदात्तयोर्मध्यवर्ति यद्रूपम् साधारणमित्येवम् रूपा श्रुतिः पातम् स्वारँ स्वारसञ्ज्ञायाम् विषये शिक्षाध्यायिनः प्रतिजानन्तीति, उदात्तानुदात्तम् च स्वरितेऽपि षड्जाद्यनुगमो भेदे सति स्वरितस्य भवतीत्युच्यते ॥ ७ ॥

उदात्ते निषादगान्धारावनुदात्तऋषभधैवतौ । स्व-

---

(१) वैस्वर्ये त्रिस्वरविशिष्टत्वेनेति'ख'पुस्तकपाठः ॥

रितप्रभवा ह्येते षड्जमध्यमपञ्चमाः ॥ ८ ॥

जिह्वामूलीयोपध्मानीययोरपि वर्णैकदेशयोः स्वरयोगः पृथक्पृथगवगन्तव्यमिति प्रतिपाद्योच्यते ॥ ८ ॥

यत्र कखपराजग्मा जिह्वामूलप्रयोजना ॥ तामथाज्ञापयेन्मात्राम् प्रकृत्यैव तु सा कला ॥ ९ ॥

जिह्वामूलीयस्य प्रयोजनभूता जिह्वामूलप्रयोजनाः कखौ परौ यस्यास्तां मात्राम् आज्ञापयेन्मात्रत्वेन प्रतिपादयेत् यतः प्रकृत्यैव स्वेन रूपेण सा कला न वर्णान्तरस्यैकादेशभूता उपध्मानीयस्योपलक्षणमेतत्, नमः कपर्दिने, च पावमानीरित्याद्युदाहरणानि स्वारसप्तकम् नाम्ना निर्दिश्यते लक्षणभेदेन प्रतिपादनार्थम् ॥ ९ ॥

जात्यःक्षैप्रोऽभिनिहितस्तैरव्यञ्जनएव च ॥ तिरोविरामः प्रश्लिष्टः पादवृत्तस्त्व सप्तमः ॥ १० ॥

स्वराणामङ्गमेतेषाम् पृथग्वक्ष्यामि लक्षणम् ॥ उद्दिष्टानाम्यथान्यायमुदाहरणमेव च ॥ ११ ॥

अष्टमी कण्डिका ॥

इति श्री भट्टप्रभाकरविरचिते शिक्षाविवरणे प्रथमः प्रपाठकः ॥

सयकारꣳ सवं वाऽप्यक्षरꣳ स्वरितम् भवेत् ॥ न चोदात्तं पुरस्तस्य जात्यः स्वारः स उच्यते ॥ १ ॥

सह यकारेण वकारेण यदक्षरम् स्वरितम् वर्तते अनन्तरम् वर्तते अनन्तरम् चोदात्तम् तस्य न भवति स स्वारः स जात्यः पदमध्यस्थत्वात् स्वाभाविकः । स जात्येनेति सयकारम्, भूर्भुवःस्वरिति सवकारम् ॥ १ ॥

द्रुतवर्णौ यदोदात्तावापद्येते यवौ क्वचित् ॥ अनु-

दात्ते प्रत्यये नित्यं विद्यात्क्षैप्रस्य लक्षणम् ॥ २ ॥

इकारउकारो वा उदात्तः पदादिनौ अकारेणानुदात्तेन संहितायां यकारप्रतीत्या स्वरितो भवति स स्वारः क्षिपणात्परस्य पूर्वस्य क्षेपणात् क्षिप्रस्वरितो भवतः क्षैप्रः, अग्नी अग्ने अध्यग्ने, वीडु अङ्गः वीड्वङ्ग इति ॥ २ ॥

एओआभ्यामुदात्ताभ्यामकारो (१)निहितस्तु यः ॥ अकारं यत्र लुम्पति तमभिनिहितं विदुः ॥ ३ ॥

एकारादिरकाराद्वोदात्तादुत्तरयोः सत्रकारो यो निहितो निपातितः तं यत्र लुम्पति एकारे उकारे वाऽनुप्रवेशयति संहितायां तत्रभिनिहितं पूर्वं यत्र प्रक्षिप्तं स्वारं विदुः, इति मन्वतेत्यादि ॥ ३ ॥

उदात्तपूर्वं यत्किञ्चिच्छन्दसि स्वरितं भवेत् ॥ एष सर्वबहुस्वारस्तैरव्यंजन उच्यते । ४ ।

एवं विधाने स्वराणां बहुत्वात् बहुस्वारः सर्वत्रर्ग्वेदे यजुर्वेदे च भावात् सर्वबहुस्वारः निरोधी गमनेन व्यञ्जतइति तैरव्यञ्जनीयः स्वारः । वि ईतये वीतयइत्यादि ॥ ४ ॥

अवग्रहात्परं यत्र स्वरितꣳ स्यादनन्तरम् ॥ तिरो विरामं तं विद्यादुदात्तो यद्यवग्रहः ॥ ४ ॥

उपसर्गो विगृह्यन्ते तिङन्तस्य कृदन्तस्य वा पदस्य सकारएव व्यञ्जनम्प्रक्रियते इत्यवग्रह उदात्तः स्यात्परं स्वरितं तिरोविरामप्राप्तावग्रहस्वारः । विष्कभिते विस्कभितेइत्यादि ॥ ५ ॥

इकारं यत्र पश्येयुरिकारेणैव संयुतम् ॥ उदात्तमनुदात्तेन प्रश्लिष्टं तं निबोधत ॥

(१) राफितश्चेति द्वितीयपुस्तकपाठः ॥

इकार उदात्ते इकारेणानुदात्तेन यदा संयुक्तो भवति तदा स्वरितः प्रश्लिष्टस्वार उच्यते अधा हि इन्द्र अधाहीन्द्रेत्यादि ॥ ६ ॥

स्वरे चेत्स्वरितं यत्र विवृता यत्र संहिता ॥ एतत्पादान्तवृत्तस्य लक्षणं शास्त्रचोदितम् ॥ ७ ॥

स्वरे अक्षरे अकारादौ यत्र चेत्स्वरितसंहिता च पूर्वेण पदेन सह यदा विवृता विभक्ता भवति तदा पादान्तवृत्तः पादवृत्तः स्वरितस्वरेऽतः स्वरः सप्तमः। क ईम् कईं वेदेत्यादि ॥ ७ ।

जात्यः स्वारः सजात्येन अ‍ध्यग्रे चैप्र उच्यते ॥ तेमन्यताभिनिहितस्तैरव्यञ्जनजतये ॥ ८ ॥

तिरोविरामो विष्कभिते प्राश्लिष्टो हीन्द्रगिर्वणः ॥ पादवृत्तः कईं वेद स्वाराः सप्तैवमादयः ॥ ९ ॥

श्लोकद्वयोक्तान्युदाहरणानि पूर्वमेवोक्तानि ८ । ९ ।

उच्चादेकाक्षरात्पूर्वात्स्वर्यते यदिहाक्षरम् ॥ स्वाराणां जात्यवर्ज्जानामेषा प्रकृतिरुच्यते ॥ १० ॥

जात्यस्वारवर्ज्जमुदात्तादनन्तरं उच्चार्यमाणमक्षरस्वरितः स्वारसञ्ज्ञं भवतीति सामान्येन लक्षणमुक्तम् ॥ १० ॥

चत्वारस्त्वादितः स्वाराः कम्पं पुष्यन्ति शास्त्रतः ॥ उदात्ते वैकनीचे वा जुह्वयिस्तत्र दर्शनम् ॥ ११ ॥

इकारान्त उकारान्तपर उकारद्वयपरौकारपरः सन्ध्यक्षर इति चत्वारः स्वारा उदात्ते वा एकस्मिन्नीचे परत आदित आदिभागे कम्पं पुष्यन्ति प्रतिपादयन्ति कपिः चलद्रूपः स्वारः कम्प उच्यते, उपत्वा जुहूइति, सन्ध्यक्षरोदाहरणं, श्लोकानुरोधाद्व्यवहितउपादानिनोदाह

रणमुक्तं उपत्वा जुह्वी ममेत्यादि, जुह्वोग्निस्तत्र दर्शनमिति ॥ ११ ॥

द्वितीयस्य प्रथमकण्डिका ॥

चतुर्षां स्वाराणां क्वचिद्ध्रस्वकम्पनात्क्वचिद्दीर्घकम्पनमित्याह ॥

इकारान्ते पदे पूर्वेउकारे परतः स्थिते ॥ ह्रस्वकम्पं विजानीयान्मधावी नात्र संशयः ॥ १ ॥

इकारान्ते पदे चैवोकारद्वयपदे परे ॥दीर्घं कम्पं वीजानीयाच्छ्रग्ध्यूष्विति निदर्शनम् । २ ।

त्रयो दीर्घास्तु विज्ञेया ये च सन्ध्यक्षरेषु वै ॥ मन्यापथ्या नद्रून्द्राभ्यां शेषा ह्रस्वाः प्रकीर्त्तिताः । ३ ।

पाह्युत द्वितीययेत्युदाहरणं, उकारपरो ह्रस्वकम्पः शिष्टमन्यदुदाहृतं उदात्तसर्वस्वरितं स्वारइति प्राप्तं क्वचिन्न भवति उदात्तमेव भवतीत्युच्यते ॥ १ ॥

अनेकानामुदात्तानामनुदात्तः प्रत्ययो यदि ॥ शिवकम्पं विजानीयादुदात्तं प्रत्ययो यदि ॥ ४ ॥

द्वित्रादीनामुदात्तानामनुदात्तो यदा परो भवति तदा द्वितीयतृतीयं चोदात्ते परतः शिवकम्पसंज्ञक आद्युदात्तो भवतीति त्र्यम्बकस्त्रिनेत्रः शिवः तर्ज्जन्यनामिकयोः संयुक्तयोर्मध्यमाङ्गुली यदा ह पृष्ठे वर्तते द्वित्वयोगाच्छिवद्वयांगुलीसन्निवेशः शिवकइत्यध्येतृप्रसिद्धः आदित्प्रत्नस्येत्यादौ द्वयोरुदात्तयोः परोऽनुदात्तः गिरा मर्मोजातेत्यादौ त्रयाणामुदात्तानां परोऽनुदात्तः शिवकइत्युदात्तविषयसंज्ञान् स्वरितविषयमिव विशेषेणोच्यते ॥ ४ ॥

यत्र द्विप्रभृतीनि स्युरुदात्तान्यक्षराणि तु ॥ नीचं चोच्चं च परतस्तत्रोदात्तं विदुर्बुधाः ॥ ५ ॥

नीचमनुदात्तं नीचात्पूर्वमुदात्तं पूर्वस्य पूर्वयोर्वा परतइत्यर्थः वर्णोच्चारणगतलक्षणमुच्यते ॥ ५ ॥

न रेफे वा हकारे वा द्विर्भावो जायते क्वचित् ॥
न च वर्गद्वितीयेषु न चतुर्थे कदा चन ॥ ६ ॥

रेफहकारयोः खछठथफानां घझढधभानां च केवलानां प्रयोगो भवति न रेफद्वित्वादिरूपेणेति कथं चतुर्थादीनां प्रयोगसंयोगइत्याह ॥ ६ ॥

न चतुर्थं तृतीयेन द्वितीयं प्रथमेन तु ॥ आद्यमंत्यं च मध्यञ्च त्वक्षरेणैव पीडयेत् ॥ ७ ॥

ककारादियुक्ताः संयोगे खादयउच्चारणीयाः गकारादियुक्ताश्च घादयः प्रतिवर्गमाद्यमध्यांत्यादिककारादीनि वर्णानि स्वाक्षरेणैव योजनीयादिति दाक्षरीतीत्युदाहरणम् ॥ ७ ॥

अनन्त्यश्च भवेत्पूर्वोन्त्यश्च परतो यदि ॥ तत्र मध्ये यमस्तिष्ठेत्स वर्णः पूर्ववर्णयोः ॥ ८ ॥

अनन्त्यो गकारादिः पूर्वोन्त्यश्च नकारादिः परतः संयोगे यदा भवति तत्र मध्ये यमो निष्पाद्यो वर्णः पूर्वस्य वर्णस्य सवर्णः सदृश उच्चारणीयः पूर्ववर्णयोरिति द्विवक्तव्यापेक्षयोक्तं अग्नऽआयाहि वीतय इत्युदाहार्यम् ॥ ८ ॥

वर्गान्त्याञ्छषसैः सार्द्धमन्तस्थैर्वाऽपि संयुतान् ।
दृष्ट्वा यमा निवर्त्तन्त आदेशिकमिवाध्वगाः ॥ ९ ॥

शषसयरलवैः पूर्वैः शादिभिः सह यत्र वर्गान्त्या ङकारादयो भवन्ति तत्र यमा न प्रयुज्यन्ते विष्णवइत्यादि, अध्वगा आदेशिकदेशान् वाञ्छितं यस्य ते सम्भाव्यन्ते दृष्ट्वा चोरं यथा मार्गान्निवर्तन्ते तद्वद्यमा इत्यर्थः ॥ ९ ॥

तृतीयस्य चतुर्थस्य चतुर्थादिपरं पदम् ॥ द्वौ तृतीयौ हकारस्य हकारादिपरं पदम् ॥ १० ॥

संहितायां वर्गतृतीयचतुर्थौ यदा संयुक्तौ वर्णौ तदा पदकाले चतुर्थाद्युत्तरं पदं भवति, ननु द्विर्वचनगते तृतीयादि एवं द्विर्वचने सति द्वौ तृतीयौ वर्णौ हकारस्य संहितायां यत्र तत्र पदकाले हकारादिपरं पदं भवति न तृतीयादि तं भवति वाग्घहहहहइत्युदाहरणीयम् ॥ १० ॥

अनुस्वारोपध्मामूलानां न क्वचित्क्रमते परम् ॥ रहपूर्वसंयुते चाप्युत्तरं क्रमतेऽक्षरम् ॥ ११ ॥

अनुस्वारस्य उपध्मानीयस्य जिह्वामूलीयस्य कस्मिन्पदे अक्षरं न क्रमते न द्विरुच्यते तं सवाधः। नमः पथे च नमः कपर्दिने इत्युदाहरणानि रेफेण संयुते सम्बद्धे पदे हकारेण च सम्बन्धे पदे उत्तरमक्षरं क्रमते द्विरुच्यतइति, अर्को देवानां ब्रह्मेत्युदाहरणम् ॥ ११ ॥

संयोगे स्वरितं यत्र चोद्घातेः पतने यथा ॥ पूर्वाङ्गमादितः कृत्वा पराङ्गादौ निवेशयेत् ॥ १२ ॥

संयोगे यत्स्वरितमुदात्ते नीचादुपरि गमने पतनेन च उच्चादधो गमने स्वरितस्य व्यञ्जनं पूर्वांगमादौ नीचे उच्चत्वं कृत्वा परांगस्यादौ स्वरितन्निवेशयेदुच्चारयेदित्यर्थः। पूर्वपराङ्गविवेकार्थमुच्यते ॥ २ ॥

संयोगे यत्र दृश्येत व्यञ्जनं विरते पदे ॥ पूर्वाङ्गं तद्विजानीयाद्येनारम्भस्तत्पराङ्गम् ॥ १२ ॥

संयोगे विरते विभक्तौ यद्व्यंजनं उत्तरपदेनासंलग्नं दृश्यते त-

(१) संयोगे यमे दृश्येत व्यञ्जनं विरते पदे ॥ पूर्वाङ्गं तद्विजानीयाद्येनारम्भस्तत्पराङ्गमिति द्वितीयपुस्तकपाठो बोध्यः ॥

त्पूर्ववदस्यांगमिव तस्यैकदेशः येन व्यञ्जनेन विभक्तौ संयोगे उत्तरपदस्यारम्भस्तत्पराङ्गम्, भूर्भुवः स्वस्तत्सवितुरित्युदाहरणे नीचोच्चयोः ॥ १३ ॥

संयोगात्तु परं स्वर्यं परतः संयोगनायकम् ॥ संयुक्तस्य तु वर्णस्य स्वरितं पूर्वमक्षरम् ॥ १३ ॥

संयोगपरो भागः स्वरयुक्तः कार्यः स्वरस्य तत्र विश्रांतिप्रधानत्वात्पूर्वं व्यञ्जनसंयुक्तस्य । पूर्वव्यञ्जनमस्वरं प्रयोक्तव्यं उदाहरणद्वयमुक्तम् ॥ १४ ॥

अनुस्वारः पदान्तस्थ क्रमजः प्रत्यये स्वके ॥ स्वरभक्तिस्तथा रेफः सर्वं पूर्वांगमुच्यते ॥ १५ ॥

सम्भवतीत्यनुस्वारः पदान्तस्थ ककारादिप्रत्यये स्वके सवर्णपदे परतः क्रमजो द्विर्वचनं जातमुदाहृतीति अर्थं समर्हतीति ककारे रेफरूपा स्वरभक्तिः एतत्पूर्वाङ्गम् ॥ १५ ॥

पादादौ च पदादौ च संयोगावग्रहेषु च । यः शब्दइति विज्ञेयो योऽन्यः स य इति स्मृतः ॥ १६ ॥

पादपदसंयोगावग्रहेषु द्विरुक्तो यकारः प्रयोक्तव्यः अन्यस्तु केवलः यज्ञायज्ञादौ, त्वं यविष्ठेति, पदादौ पन्थं पन्थ संयोगे अन्यः अनूपद्दत्यवगृहे वीतयइत्यादौ लघुयकारः ॥ १६ ॥

पदादावप्यविच्छेदे संयोगान्ते च तिष्ठताम् ॥ वर्जयित्वा रहयोणामयादेशः प्रदृश्यते ॥ १७ ॥

स्वसंयुक्तो गुरुर्ज्ञेयः सानुस्वाराग्रिमः स्फुटः ॥ अणुशेषोऽधिगोर्वोऽपि युगलादिरविस्फुटः ॥ १८ ॥

अनयोर्भाष्यं त्यक्तम् ॥ १७ ॥ १८ ॥

द्वितीयस्य द्वितीयकण्डिका । यदुदात्तमुदात्तं तद्यत्स्वरितं तत्पदे भवति नीचम् । यन्नीचन्नीचमेव तद्यत्प्रचयस्थं तदपि नीचम् ॥ १ ॥

यदुदात्तं संहिताकालेऽनुदात्तं च भवति तस्य काले ऽनुदात्तमेव-उदात्तमेव भवति यत्तु स स्वरितविशेषो वा प्रचयः स नीचः पदे भवति अग्नआयाहि अग्न आयाहि वीतये इत्युदाहरणम् ॥ १ ॥

अयमग्निः सुतो मित्रमिदं वयमयावह्नाः ॥ प्रियंदू तं घृतं चित्तमभिप्रब्दस्य नीचतः ॥ २ ॥

एतानि पदानि नीचादनुदात्तादारभ्यन्ते अग्निं वः सुतो गवां अयती अग्निंवः सः सुतः, मित्रं हुवे इदं वसो, वयंघा अयाते वह्नां। प्रियं मित्रं दूतं वः, घृतं दुहते वितसे, अभिप्रियाणि, इत्युदाहरणानि ॥ २॥

अर्केष्वेव सुतेष्वेव यज्ञेषु कलशेषु च ॥ शतेषु सपवित्रेषु नीचादुच्चार्यते श्रुतिः ॥ ३ ॥

अर्कं अर्चन्तु इत्यादयोऽर्काः । सतेषु नः, सुते सचेति सुतादयः यज्ञाय तस्मा यज्ञाः कलशं कलशेष्वित्यादयः, कलशाः शतं हिमाः शतमित्यादयः, शतं सेनाः शताः,पवित्रं ते पवित्रमर्चिं इत्यादयः पवित्राः इत्यादीनां नीचादनुदात्तादुपक्रमः ॥ ३ ॥

हरिवरुणवरेण्येषु पुरुषेषु स्वरति रेफः ॥ विश्वानरो नकारेषु शेषा रस्वरिता नराः ॥ ४ ॥

हरिंर्हिन्वन्ति वरुणो मित्रः वरेण्यं धारा सुतस्य, सहस्रशीर्षा पुरुषः, एतेषु रेफस्यैव स्वरितत्वं विश्वानरस्येति नकारस्य अन्यत्र नरशब्देषु रेफस्यैव स्वरितत्वम् ॥ ४ ॥

द्वौवरुणौ वर्स्वरितउदुत्तमं त्वं वरुण । धाकारे ची-

ऊरुधारायामुरुधारेव दोहने ॥ ५ ॥

उदुत्तमं वरुणेति वकारस्य स्वरितत्वं, न रेफस्य उरुधारामरं-कृतं उरुधारेव दोहनइति धाकारस्य स्वरितत्वम् ॥ ५ ॥

मात्रिकं वा द्विमात्रं वा स्वर्यते यद्विहाक्षरम् ॥ त-स्यादितोऽर्द्धमात्रा वैशेषं तु परतो भवेत् ॥ ६ ॥

पूर्वाङ्गमिति वर्णपिच्चयोक्तं स्वरात्रेनयेदसुच्यते ह्रस्वस्य दीर्घस्य वा स्वरितस्यार्द्धमात्रोदात्तानुदात्तानां पूर्वो भागः शिष्टं स्वरितं "तस्यादितउदात्तमर्द्धह्रस्वमिति" पाणिनिः ॥ ५ ॥

अदीर्घं दीर्घवत्कुर्यात् द्विस्वरं यत्प्रयुज्यते ॥ क-म्पोत्स्वरिताभिगीतं ह्रस्वकर्षणमेव च ॥ ७ ॥

कंपादिविषये ह्रस्वकर्षणमेव च कम्पादिविषये ह्रस्वानां दीर्घसादृश्यं कुर्यात्, पात्युत उदूर्ज, स्वरितं नीचादुपरि स्थितमुत्स्वरितं भूर्भुवः उईवो३३पन्यतेत्यभिगीतं तच्चजमिति ह्रस्वकर्षणम् ॥ ७ ॥

निमेषकाला मात्रा स्याद्विद्युत्कालेति चापरे । ऋक्स्वरा तुल्ययोगा वा मतिः स्यात्सोमशर्मणः ॥ ८ ॥

मात्रा स्वरूपमुच्यते अक्षिपक्ष्मपातं निमेषः तत्कालामात्रा विद्युत्कालामात्रेति केचिदाचार्याः सोमशर्मणआचार्यस्य ऋकारकालः ऌकालः ग्रकारतुल्योवेति द्रुतमध्यविलम्बेन व्यवस्था कार्या ॥ ८ ॥

समासेऽवग्रहं कुर्यात्पदं चात्रानुसंहितम् ॥ य-तोऽक्षरादिकरणं पदान्तं तस्य तं विदुः ॥ ९ ॥

समासपदमेकविषयं तत्रावग्रहे यदि विभागं कुर्यात् समासं पदं चानुसंहितमत्र सन्धेयं यतोऽक्षरादिकरणं मध्ये तारं कुर्वंति स्वरान्तं तं समासपदस्य विदुः हव्यदातयऽइतिहव्य । दातये, विश्ववे-

दस मिति विश्व वेदसं इत्यादि, पूर्वाचार्यापेक्षया इतिकरणांतरा, कात्यायनस्तु हव्यदातयइति ॥ ९ ॥

सर्वत्र प, त्रमित्र सखिशब्दा अद्रिशतक्रतोरग्राह्याः॥ आदित्यविप्रजातवेदाश्च सत्पतिगोपतिब्रह्मा समुद्र-श्च॥ १० ॥

एते शब्दाः अवग्रहाः प्रवर्तंतइति संशयो नास्ति ॥ १ ॥

स्वर्युवो देवयुवश्चारतिं देवतातये । चिकितिश्चु-क्रुधं चैव नावगृह्णन्ति पण्डिताः ॥ १० ॥

स्वर्युवः देवयुवइतिकप्रत्ययान्तो न पदद्वयं अरतिमिति न नञ् अन्ते नूपपर्यामिवारणेष्विति धातोरूपं देवतातिप्रत्यये देवताभिः चिकितिरिति चेन्नातः चुक्रुधमिति क्रुधेर्द्विर्वचनं अतएकपदत्वादेते- षां मवग्रहं कुर्वन्त्याचार्याः ॥ १० ॥

इति० तृतीयकण्डिका ॥

विवृत्तयस्तत्स्वी वै विज्ञेया इति मे मतम् ॥ अक्ष-राणां नियोगेन तासां नामानि मे शृणु ॥ १ ॥

ह्रस्वादिर्वत्सानुसृता वत्सानुसारिणी चाग्रे । पाक-वत्युभयोर्ह्रस्वा दीर्घाद्वा पिपीलिका ॥ २ ॥

विवेकेन पृथग्भावेन वर्तंतइति विवृत्तिः पूर्वपदे ह्रस्वः उत्तरपदे दीर्घइति ह्रस्वादिवत्सा न च लघुना गौर्विवृद्धा अनुसृता, अग्नआ-याहि इत्यादिका, अग्ने आदौ दीर्घं यस्य परत्वे ह्रस्वाः सा स वत्समिवानुसरतीति वत्सानुसारिणी प्रेष्ठंवो अतिथिमित्यादिका, उभयोः पदयोराद्यन्तयो ह्रस्वौ यस्याः सा पाकवती यथा द्वयो-गात् अग्नइत्थेतरा गिर इति यथा उभयत्र दीर्घाभ्यां विवृद्धा पिपी

लिके च भागगुरुत्वेन दीर्घवृत्ता पिपीलिकेति निछएवाना आयु-
धानीवेति यथा ॥ १ ॥ २ ॥

चतसृणां विवृतीनामन्तरं मात्रिकं भवेत् ॥ अर्द्धमा
त्रिकमन्येषामन्ये पामणुमात्रिकम् ॥ ३ ॥

शाखाभेदाभिप्रायेण मध्यविकल्पः ॥ ३ ॥

आपद्यते मकारो रेफोष्मसु प्रत्ययेष्वनुस्वारम् ॥
यलवेषु परसवर्णं स्पर्शेषु चोत्तमापत्तिम् ॥ ४ ॥

मावांराति:, तᳫं० सव्ययः, उद्दᳫं० शमिव । एवं यवलादिषु पर-
तो मकारो अनुस्वारत्वं । यविष्ठ तं लांकं तंव इत्यादौ परसव-
र्णता, स्त्महेम विषदद्राणमित्यादौ स्पर्शेषु परतः स्पर्शवर्गसदृशोत्त-
मापत्तिर्मकारस्य भवतीत्यर्थः ॥ ४ ॥

नकारान्ते पदे पूर्वं स्वरे च परतः स्थिते ॥ आ-
कारᳫं० रक्तमित्याहुर्नकारेण तु रज्यते ॥ ५ ॥

यकारवकारहकारेषु परतोऽनुरज्यते, सापत्ना तव यजामहे, इस्वरे
परेऽन्त्यो नकारेणाकारः पूर्वो रज्यते वरामहाᳫं० इत्युदाहरणं, न-
कारान्तस्य पदस्यार्द्धमात्रेण नकारेणार्द्धमात्रां आकारादिकस्य
वर्णस्य रज्यतइत्यर्थः तान्यथाऽनुरज्यते ॥ ५ ॥

नकारान्ते पदे पूर्वे व्यञ्जनैश्च यवो हिषु । अर्द्ध-
मात्रा तु पूर्वस्य रज्यते त्वणुमात्रया ॥ ६ ॥

नकारान्तस्य पदस्यार्द्धमात्रेण नकारस्यार्द्धमात्राकारादिवर्णस्य
रंजतइत्यर्थः, नान्यथा तन्वो अच्छन्तान्युश्मसीत्यादि ॥ ६ ॥

नकारः स्वरसंयुक्तश्चतुर्युक्तो विधीयते । रेफो
रङ्गश्च लोपश्चानुस्वारोऽपि वा क्वचित् ॥ ७ ॥

पदान्तस्य नकारस्य पदे परतश्चत्वारि रूपाणि भवन्ति, भवाꣳ॰ श्चिनोतीति, नकारस्य रेफो विसर्जनीयत्वं पूर्वस्यानुनासिक इति रेफोदाहरणं, रङ्गः पूर्वमुदाहृतः महाꣳ॰ इन्द्रः दधन्वाꣳ॰ यइत्यादौ नकारस्य लोपः पूर्वस्यानुनासिकः अनुनासिकात्परोऽनुस्वारो वा भवतीति रङ्गस्वरूपदर्शनं क्रियते ॥ ७ ॥

हृदयादुत्तिष्ठते रङ्गः कांस्येन समनिःस्वरः ॥ मृदुश्चैव द्विमात्रश्च दधन्वाꣳ॰ इति दर्शनम् ॥ ८ ॥

यथा सौराष्ट्रिकानार्यराꣳ॰ इत्यभिभाषते । एवꣳ॰ रङ्गः प्रयोक्तव्यो नारदस्य मतं यथा ॥ ९ ॥

सुराष्ट्रदेशे भवास्सौराष्ट्रिकाः स्पष्टार्थमन्यत् ॥

इति॰ चतुर्थीकण्डिका ॥

स्वरा गडदबाश्चैव ङणनमाः सहोष्मभिः । चतुर्णां पदजातीनां पदान्ता दश कीर्तिताः ॥ १ ॥

स्वराः अकारादयः गडदबा ङणनमाश्चाष्टौ । ऊष्माणौ च षकारसकारौ इति दश पदान्ताः पादैः सह भवन्तीत्यर्थः चवर्गवर्गाज्जकारः टवर्गवर्गाद्दरसकारः पदान्तः पादैः सह न सम्बध्यन्ते कचटतपानां पदान्तरेण सम्बन्धेऽतिप्रसिद्धत्वान्नोच्यते खछठथफा घझढधभाश्च न सम्बध्यन्ते शकारहकारौ चोष्ममध्यान्न सम्बध्यते इति पदान्ता दशेत्युक्तं नामाख्यातोपसर्गनिपाताश्चत्वारि पदजातानि उदाहरणानि अग्ने आयाहि इमइंद्रेत्यादि स्वराः पदान्ताः वाग्ड्हहहह विश्वाडबृहत् तदिन्द्र त्रिष्टुबिह यइति केचित्तां त्वंकवित्वजनासो तन्नोमित्रः त्वंभरामसि निष्पपीभुवः स्वरिति गादयो द-

म ॥ १ ॥

स्वर उच्चः स्वरो नीचः स्वरः स्वरित एव च ॥ व्यञ्जनान्यनुवर्तन्ते यत्र तिष्ठति स स्वरः ॥ २ ॥

स्वरप्रधानं त्रैस्वर्यमाचार्याः प्रतिजानते ॥ मणिवद्व्यञ्जनं विद्यात्सूत्रवच्च स्वरं विदुः ॥ ३ ॥

दुर्बलस्य यथा राष्ट्रꣳ हरते बलवान्नृपः ॥ दुर्बलं व्यञ्जनं तद्वद्धरते बलवान्स्वरः ॥ ४ ॥

ओभावश्च विवृत्तिश्च शषसा रेफ एव च ॥ जिह्वामूलमुपध्मा च गतिरष्टविधोष्मणः ॥ ५ ॥

स्वरप्रत्यया विवृत्तिः संहितायां तु या भवेत् ॥ विसर्गस्तत्र मन्तव्यस्ताभ्यो वाऽत्र जायते ॥ ६ ॥

सन्ध्यक्षरोपधे सन्ध्यौ प्राप्तलुप्तौ यवौ यदि ॥ व्यञ्जनाख्या विवृत्तिस्तु स्वराख्या प्रकृतिसꣳहिता ॥ ७ ॥

क्रमान्तं विरतं यत्र सन्धौ वो भवते च यत् ॥ विवृत्तिर्या भवेत्तत्र ताꣳ स्वराख्यान्तां विनिर्दिशेत् ॥ ८ ॥

यद्योभावप्रसन्धानमुकारादि परं पदम् ॥ स्वरान्तं तादृशं विद्याद्यदन्यद्व्यक्तमूष्मणः ॥ ९ ॥

ओभावः प्रसन्धानमोकारं तस्य यदा प्रसन्धानता भवति तदा उकारादि परं पदं भवति स्वरान्तं च तादृशं संधानं भवति वायो ऋद इति कद्रुमित्यादि अषणः संधानम् ॥ ९

प्रथमा उत्तमाश्चैव पदान्तेषु यदि स्थिताः ॥ द्वि-

तीयठं० स्थानमापन्नाः षषसप्रत्ययो यदि ॥ १० ॥

षषसादिषु परतः प्रथमास्तकारादयः उत्तमाश्च मकारादयो यदा पदान्तास्तदा द्वितीयठं० स्थानन्तङ्कारादिस्तपतामापन्ना भवन्ति तस्यविष्णुः तांसमन्तमित्यादि, यदा संयुक्ता द्वितीयानिव दर्शयेत् ॥ ११ ॥

प्रथमानूष्मसंयुक्तां द्वितीयानिव दर्शयेत् ॥ नचैनान्प्रतिजानीयाद्यथा मत्स्यः क्षुरोऽप्सरा इति ॥ ११ ॥

सकारादिषु परतस्तकारादयो द्वितीयथकारादिसदृशा वृत्त्या दर्शनीय। न तु द्वितीयाएव स्फुटमुच्चारणीयाः गायत्र्यादिछन्दादिस्वरूपं सामान्येन प्रतिपाद्यते ॥ ११ ॥

द्वितीयस्य पञ्चमीकण्डिका ॥ ११ ॥

छन्दोमानं न वृत्तं च पादस्थानं त्रिकारणम् ॥ ऋचः स्वच्छन्दवृत्तास्तु पादास्त्वक्षरमानशः ॥ १ ॥

पादस्थाने पदान्ती मंत्रः श्लोकश्च त्रिकारणं पदान्तं छन्दोमानं च वृत्तं चेति त्रीणि कारणानि लौकिकं श्लोकादि गुरुलघुपरिज्ञानं गायत्र्यादिरूपमवधार्यते ऋचां तु स्वाभाविकं गायत्र्यादिछन्दः गुरुलघोरक्षरं छन्दोवृत्तमक्षरगणनया मानं छन्दोविभागावगमायावस्थितमिति नातीव छन्दोलक्षणेनेह प्रयोजनं स्वच्छन्दो वृत्तं च सामानीति स्वच्छन्दोवृत्तमक्षराणां मात्रे नाक्षरमानशः ॥

ऋटवर्णटं० स्वरभक्तिं च छन्दोमानेन निर्दिशेत् ॥ प्रत्ययेन सहारेफं मिमीत स्वरभक्तिषु ॥ २ ॥

ऋकारे स्वरे स्वरे यो रेफः स्वरभक्तावसौ रेफः स्वरभक्तौ च यथाचाधिक्येनाक्षरगणनाया छन्दोमाने च गणनीयमक्षराणांतर-

त्वात् अर्षसि अर्हसीत्यादौ स्वरभक्तिविषये अरेफं अपृथग्भूतरेफं वर्णं मिमीत गणयेदिति ॥

ऋवर्णे तु पृथग्रेफः प्रत्ययस्तु पृथग्भवेत् ॥ विद्याल्लघुमृकारं तु यदि तूष्माणसंयुतः ॥ ३ ॥

ऋवर्णे एकस्मिन्नेव रेफमात्रा व्यञ्जनरूपा प्रतीयते तेन स्वररूपमचरमिति प्रत्ययो मात्रैकदेशोऽवधार्यते । न पृथग्वर्णद्वयं प्रत्ययस्तु पृथग्भवेत् विद्याल्लघुमृकारं ऊष्माणऋवर्णो यदि संयुतो नसस्वहस्तदा लघुस्वराख्यो वर्णो विज्ञायते ॥

ऊष्मणैव हि संयुक्तऋकारो यत्र पीड्यते ॥ गुरुवर्णः सविज्ञेयस्तृचं चात्रानुदर्शनम् ॥ ४ ॥

ऋकारऊष्मणैव शकारादिना सम्बध्यमानः स्वरोऽपि गुरुर्भवति न लघुस्तृचमित्युदाहरणम् ॥

ऋषभं च गृहीतं च बृहस्पतिं पृथिव्यां च ॥ निर्ऋतिं पञ्चमा ह्यत्र ऋकारो नात्र संशयः ॥ ५ ॥

निर्ऋतिपञ्चमो येषां ते ऋषभादय ऋकारा विकाराः स्वरा विज्ञेयाः ॥ ५ ॥

शषसहरादौ रेफः स्वरभक्तिर्जायते द्विपदसन्धौ ॥ इउवर्णाभ्यां हीना क्वचिदेकपदा क्रमवियुक्ता ॥ ६ ॥

शषसहानां रआदिर्यस्य तच्छषसहरादिपदं तत्र एकपदा स्वरभक्तिर्जायते किंभूताद्वत्वाह । इउवर्णाभ्यां हीना अर्षसीति इकारहीनां अर्षभीति उवर्णहीनां अषसीत्येवं प्रयोक्तव्येत्यर्थः, क्वचिदेकपदा उपोहमोयमिति एषा एकपदा भूतपूर्वापरविभागः क्रमयुक्ता ॥ ६ ॥

स्वरभक्तिर्द्विविधा त्वृकारो रेफ एव च ॥ स्वरोदा व्यञ्जनोदा च विहिताऽक्षरचिन्तकैः ॥ ७ ॥

स्वरादुदेतीति स्वरोदा ऋकाराख्या व्यञ्जनादुदेतीति व्यञ्जनोदा रेफाख्या ॥

अ(?)रसेषु स्वरोदायीऽं० हकारे व्यञ्जनोदयाम् ॥ अषसेषु विवृत्तां तु हकारे संवृतां विदुः ॥ ८ ॥

अषसविषये स्वरोदयां विवृतां च स्वरभक्तिं विदुः अर्षसीत्यादिहकारविषये व्यञ्जनोदया संवृत्तां च जानन्ति अर्हसीति ॥

स्वरभक्तिं प्रयुञ्जानस्त्रीन्दोषान्परिवर्ज्जयेत् ॥ इकारं चाप्युकारं च ग्रस्तदोषं तथैव च ॥ ९ ॥

इउवर्णाभ्यां हीनेति यदुक्तं तदेव सविशेषमुच्यते अर्षसि अर्हसीति स्थानकरणनिष्पीडनेन प्रयोक्तव्यमित्यर्थः ॥

संयोगपरं छपरं विसर्ज्जनीयं द्विमात्रिकं चैव ॥ आवसानिकं च न लघु सानुस्वारं गुरुं तच्च ॥ १० ॥

संयोगः परोयस्याक्षरस्य छात्परं विसर्जनीयसक्षरं द्वे मात्रे यस्याकारादेस्तद्द्विमात्रिकं अवसाने भवमावसानिकं सहानुस्वारो वर्ततइति सानुस्वारं द्विधा गतिर्यस्य । षष्ठी कण्डिका ॥ वेदे श्लोकादिना वृत्तं भवतीति गुरुवर्णाः न तु पथ्यादिगाथावधारणं छन्दोलक्षणतः कर्तव्यमित्युदाहरणरूपेणोच्यते ॥ १ ॥

पथ्यापादः प्रथमो द्वादशमात्रस्तथा तृतीयोऽपि । अष्टादशो द्वितीयः समापनः पञ्चदशमात्रः ॥ १ ॥

पूर्वः पादः सप्ताक्षरो द्वादशमात्रो द्वादशमात्रस्तथा तृतीयोऽपीति एकादशाक्षरोऽष्टादशमात्रो द्वितीयः पादः समापनोऽन्तिमश्चतु-

षों दशाचरः पञ्चदशमात्रः ॥ ० ॥

पथ्यालक्षणमुक्तं या त्वन्या सा स्मृता विपुला ॥

पूर्वलक्षणेन विपुला निपादनिधानं समाप्तिरूपा दशाचरश्चतुर्थः पादो द्वादशमात्रः समापनः पुनः पञ्चदशमात्रइति सकारादिकाः पञ्चेति पथ्याया यल्लक्षणं तादेव विपुलायाः किन्तु । यास्त्वन्येति पञ्चदशमात्रः पादे द्वितीये इतिपादव्यत्यासाभेदो यच्छेषः ॥

अक्षराणां लघुह्रस्वमसंयोगपरं यदि ॥ २ ॥

तत्संयोगोत्तरं विद्याद्गुरुदीर्घाक्षराणि तु ॥

गुर्वक्षराणां मध्ये यत्ह्रस्वं तल्लघु महद्दस्व तल्लघुसंयोगपरं दीर्घाणि चाक्षराणि गुरूणि च ॥

विवृत्तिर्यत्र दृश्येत स्वारश्चैवाग्रतः स्थितम् ॥ ३ ॥

गुरुः स्वारः स विज्ञेयः चैप्रस्तत्र न विद्यते ॥

विवृत्तिः परभूतः स्वरो गुरुः । न चैप्रो न लघुरित्यर्थः ॥

अष्टप्रकारं विज्ञेयम् पदानाऽं स्वरलक्षणम् ॥ ४ ॥

अन्तोदात्तमाद्युदात्तमुदात्तमनुदात्तं नीचस्वरितम् । मध्योदात्तऽं स्वारितन्द्विरुदात्तमित्येता अष्टौ पदसञ्ज्ञाः ॥ ५ ॥

अष्टावेव प्रकाराः सम्भवन्तीति तन्नोदाहरणानि प्रदर्श्यन्ते ॥ ५ ॥

अग्निः सोमः प्र वो वीर्यंऽ हविषा स्ववर्नस्पतिः ॥

अग्निर्वृत्राणीति अग्निरन्तोदात्तः, सोमः पवतेइति सोमआद्युदात्तः, प्रवोयज्ञमिति प्रउदात्तः, वइत्यनुदात्तो, बलं न्युब्जं वीर्यमिति वीर्यंनीचस्वरितं, हविषा विधेमेति हविषा मध्योदात्तं, भूर्भुवः स्वरिति स्वः स्व रितं, वनस्पतिरिति वकारः सकारश्च द्वे उदा-

ते ॥

अन्तर्मध्यमयोर्नीच्युदमनुदात्तनिपाते ॥ आद्यात्स्वरितमुपसर्गे द्विर्नीचमाख्यात इति ॥ ६ ॥

स्वरितात्पराणि यानि स्युर्द्वीर्याण्यचराणि तु । सर्वाणि प्रचयस्थान्युपादात्तं निहन्यते ॥ ७ ॥

निहोता सत्सीति स्वरितात्तकारात्पराणि सत्सीति धार्या एयचराणीत्यूर्ध्वमधस्थागतानि प्रचयस्थानानि स्वरितस्य प्रचितत्वात् अपोदात्तमुपोदात्तमाद्यं स्वरितं निहन्यते गान्धारगीत्योच्चर्यतद्गाति एतदेव विशेषतउच्यते ॥ ७ ॥

प्रचयो यत्र दृश्येत तत्र हन्यात्स्वरं बुधः ॥ स्वरितः केवलो यत्र स्यादुन्तत्र निपातयेत् ॥ ८ ॥

प्रचये तत्र आहननं वर्हिषीति प्रचयाभावे केवलस्य स्वरितस्य मृदुत्वम् ॥ ८ ॥

पञ्चविधमाचार्यकन्नाम मुखन्यासः करणम् प्रतिज्ञोच्चारणा ॥ अत्रोच्यते श्रेयः खलु वै स प्रतिज्ञो नोच्चारणा ॥ ९ ॥

आचार्यकं पञ्चप्रकारं हस्ताये दृष्टिनिवेशादिमुखन्यासोऽङ्गुष्ठाङ्गुल्यादौ स्वरनिवेशः करणं शिचाशास्त्रं प्रतिज्ञा गुरुपरंपरागतं मन्त्ररूपास्ववधारणं लक्षणागमानुसारेण प्रयोगउच्चारणं सम्यक्शास्त्रं उपद्यपि न दृश्यते तथाऽप्यागमावधारणमवश्यं कर्तव्यमिति श्रेयः । खलु प्रतिज्ञानोच्चारतेति एतदेव विशेषेणोच्यते ॥ ९ ॥

यस्य कस्यचिद्वर्णस्य करणं नोपलभ्यते ॥ प्रतिज्ञा तत्र बोद्धव्याः करणं हि तदात्मकम् ॥ १० ॥

वर्णस्वरादिविषयं करणं शिक्षादिशास्त्रं न ज्ञायते तथाऽप्यागमोऽयं ततोऽवधारणीयं प्रतिज्ञा तत्र वोढव्या करणव्यायमपूर्वकं लक्षणं साम्नां यत्र लक्षणं लौकिकानामपि शब्दानां व्याकरणाख्यं लक्षणं प्रयोगभूतमभ्युपगम्यते इतिउच्यते करणं हि तदात्मकमिति लक्षणमनुसृत्य स्वस्ववर्णोच्चारणं यत्नतः कारणीयं नारदादीनामप्येतद्यत्नतोऽवधारणीयमित्याह ॥ १० ॥

तुम्बुरुनारदवसिष्ठविश्वावस्वादयश्च गन्धर्वाः ॥ सामसु निभृतम् करणंस्वरसौक्ष्म्यात्तेऽपि हि न कुर्युः ॥ ११ ॥

निभृतं परिपूर्णकरणलक्षणं तेऽपि हि न कुर्युः न योजयितुं शक्नुवंतीत्यर्थः ॥ ११ ॥

## द्वितीयस्य सप्तमी कण्डिका ॥

शरीरवाङ्मनो नियमनिरूपणं सम्यक्पाठसिद्धिरधिक्रियते ॥

कौक्षेयाग्निं सदा रक्षेदश्नीयादशनं हितम् ॥ जीर्णाहारः प्रबुद्धः सन्नुषसि ब्रह्म चिन्तयेत् ॥ १ ॥

कुक्षौ भवं कौक्षेयं उदराग्निं हितपथ्याशनेन चाग्निरक्षा परिणते चाहारे ब्रह्मणश्चिन्तनम् । वाङ्मनोव्यापरेणावधारणं कार्यम् ॥ १ ॥

शरद्विषुवतोऽतीतादुषस्युत्थानमिष्यते ॥ यावद्वासन्तिकी रात्रिर्मध्यमा(१) पर्युपस्थिता ॥ २ ॥

शरन्मध्ये यो विषुवान् तस्मादतीतात् उषसि रात्रिशेषे पाठार्थं उत्थानमिष्यते यावद्वासन्तिकी वसन्तमध्ये भवा पर्युपस्थिता प्राप्ता रात्रिस्तावदुत्थाने रात्रेर्महत्त्वात् ॥ २ ॥

---

(१) मध्यमो पर्य्यवस्थिता इति "ख" पुस्तकपाठो बोध्यः ॥

आम्रपालाशबिल्वानामपामार्गशिरीषयोः ॥ वाग्य-
तः प्रातरुत्थाय भक्षयेत् दन्तधावनम् ॥ ३ ॥

ततः सन्ध्योपासनं कार्यम् ॥ ३ ॥

खदिरस्य कदंबस्य करवीरकरंजयोः ॥ सर्वे कंटकि-
नः पुण्याः क्षीरिणश्च यशस्विनः ॥ ४ ॥

खदिराणामवयशाः पुण्याः कण्टकिनः क्षीरिणो ऽकण्टका यश-
स्विनः ॥ ४ ॥

तेनास्य करणे सौक्ष्म्यं(१) माधुर्यं चोपजायते ॥ व-
र्णांश्च कुरुते सम्यक्प्राचीनौदव्रजिर्यथा ॥ ५ ॥

शाकादिना ताम्बूलभक्षणं प्रसिद्धं तेन खदिरादिना अस्य पुंसः
करणे वाचि सौक्ष्म्यं श्लेष्मनिवृत्त्या गुरुत्वं च निवर्तते । सूक्ष्मा मधुरा
च वाक्संपद्यते वर्णांश्च कण्ठादिस्थानेषु सम्यग्भूता निष्पादयती-
त्येवं प्राचीनौदव्रजिराचार्यो मन्यते ॥ ५ ॥

त्रिफलां लवणाढ्येन भक्षयेच्छिष्यकः सदा ॥ अ-
ग्निमेधाजनन्येषा स्वरवर्णकरी तथा ॥ ६ ॥

त्रिफलां लवणाढ्येन संयुक्तां भोजनोत्तरकालं सायं शिष्यो भ-
क्षयेत् जाठरमग्निं बुद्धिं त्विषा जनयति । अग्निपाटवेन स्वरवर्ण-
सौष्ठवं भवतीति ॥ ६ ॥

कृत्वा चावश्यकान् धर्मान् जठरं पर्युपास्य च ॥
पीत्वा धूमं घृतम् चैव शुचिर्भूत्वा ततो वदे-
त् ॥ ७ ॥

---

(१) सौरूप्यमिति च "ख" पुस्तकपाठः ॥

अवश्यं सदा भवतीत्यावश्यकः दन्तधावनस्नानसन्ध्योपासना-दयः पूर्वं जठरं पर्युपास्य मूत्रपुरीषोत्सर्गं कृत्वाऽन्यच्चाशुचित्वे शब्दस्पर्शादौ धूमं घृतप्राशनं कृत्वा स्नानादिना शुचिर्भूत्वा ततो वदेत् मन्त्राध्ययनं कुर्यात् ॥ ७ ॥

मन्द्रेणोपक्रमेत्पूर्वꣳ सर्वशाखास्वयं विधिः ॥ सप्त-मन्त्राननतिक्रम्य यथेष्टां वाचमुत्सृजेत् ॥ ८ ॥ नताꣳ स-मीरयेद्वाचं या प्राणमुपरोधयेत् ॥

मन्त्रसप्तकमुपांशु पठित्वा यथेष्टां वाचं मन्द्रादिस्वरेणोच्चार-येत् प्राणोपरोधकमत्युच्चैः शब्दोच्चारणविशेषतः प्रातर्न कार्य मित्यर्थः ॥

प्राणानामुपरोधेन वैस्वर्यं चोपजायते ॥ ९ ॥ स्व-रव्यञ्जनमाधुर्यं लुप्यते नात्र सꣳशयः ॥

वर्णानां माधुर्यं यत्स्वाभाविकं तन्निवर्ततइति अप्रवीणस्यानाम-यिकस्योपाध्यायस्य सकाशान्नाधिगन्तव्यं प्रतिष्ठितादध्ययनं कर्त्त-व्यमित्याह ॥ ६ ॥

कुतीर्थादागतन् दग्धमपवर्णैश्च भक्षितम् ॥ न तस्य प-रिमोक्षोऽस्ति पापाहेरिव किल्बिषात् ॥ १० ॥

यथा कुतीर्थाद्दुष्टोऽभावस्थानाज्जलौघेनानीतं विषमपवर्णैर्दुर्जनैः दुष्कृतिभिर्भक्षितं स्यात् पापरूपात्सर्पान्निर्गताद्विषाद्यथा मुक्तिर्न भ-वति एवं कुतीर्थादुपाध्यायादागतमध्ययनमपवर्णैर्मुखैर्भक्षितम-धीतं तस्मादध्ययनात्पापिष्ठादुपाध्यायादागतां न परिमोक्षो भवति न कुसंस्कारो निवर्ततइत्यर्थः ॥

सुतीर्थादागतं ज॰ घर्ष॰ स्वाम्नातर्ष॰ सुप्रतिष्ठितम् ॥

सुस्वरेण सुवक्त्रेण प्रयुक्तम् ब्रह्म राजते ॥ ११ ॥

उपाध्यायात्सुतीर्थात् शोभनादागतमधीतं उपाध्यायस्य सम्यगाम्नातं शिष्येषु च प्रतिष्ठितमभ्यस्तं स्थितम् सुस्वरेण सुवक्त्रेण प्रयुक्तं अप्रतिष्ठितेन सुस्वरेणापि प्रयुक्तं न राजतइत्यर्थः ॥ विकृतमुखानां पाठो न शोभतइत्याह ॥ ११ ॥

न करालो न लंबोष्ठो नच सर्वानुनासिकः ॥ गद्गदो बद्धजिह्वश्च प्रयोगान्वक्तुमर्हति ॥ १२ ॥

नासाक्षिकर्णादिना विकृतः करालः नासिकायाः प्राधान्येन यस्य शब्दउच्चारयति स सर्वाऽनुनासिकः कण्ठप्राधान्येन शब्दोच्चारणाद्गद्गदो भवति ॥ वाक्स्तम्भेन बद्धजिह्वः प्रयुज्यतइति प्रयोगाञ्छब्दान्वक्तुमर्हतीति अदुष्टकरणः संयतचितः शोभनं पठतीत्याह ॥ १२ ॥

एकचित्तो निरुन्नतिस्तान्तगानविवर्जितः ॥ स तु वर्णान्प्रयुञ्जीत दन्तोष्ठं यस्य शोभनम् ॥ १३ ॥

स्वाध्यायविषयं चित्तं यस्य सएकचितः अप्रगल्भत्वात् स्रान्तिरहितः अतिविलम्बितशब्दोच्चारणाभावात्तान्तगानविवर्जितः अविकृतदन्तोष्ठत्वाद्रमणीयशब्दउच्चरति अहंकाररहितानां विद्याप्रवर्ततइत्याह ॥ १३ ॥

पञ्च विद्या न गृह्णन्ति चण्डास्तब्धाश्च ये नराः ॥ आलसाश्चानरोगाश्च येषां च विसृतम् मनः ॥ १४ ॥

साहंकारः कोपप्रधानेनोपाध्यायादीनामनुप्रवृत्तिं भजते चण्डस्तस्यातुर्येणाध्यापने अप्रवृत्तः स्तब्धउक्तमपि कदाऽपि तावन्नो बुध्यते अलसो मानसादिकारणानामवधारणे अपाटवान् न रोगः अरोगः सर्वकालरोगपरिदुष्टो नरोगः, विसृतं चञ्चलं मनः त्वरा चाध्ययने न

कर्तव्येत्युच्यते ॥ १४ ॥

शनैर्विद्याः शनैरर्थानारोहेत्पर्वतं शनैः ॥ शनैरध्वसु वर्त्तेत योजनानि(१) परं व्रजेत् ॥ १५ ॥

अर्थार्जनमध्वगमनं पर्वतारोहणं वाऽत्वरस्य यथा सम्यग्भवति तथा विद्या शनैर्यथावदभिनिवर्तते प्रहरद्वययोजनं भवति उच्चैरुच्चार्यमाणशब्दः पश्चाद्संवदता विच्छिद्यमानो विस्मयमानमुत्पादयतीत्याह ॥ १५ ॥

योजनानां सहस्राणि(२) शनैर्याति पिपीलिका ॥ अगच्छन्वैनतेयोऽपि पदमेकं न गच्छति ॥ १६ ॥

यत्नपरेणासामर्थ्येन व्यापारः शोभनो निर्वर्तते । नच बहुवालताऽपि कृतं शोभनं भवतीत्याह ॥ १६ ॥

नहि पार्ष्णिहता वाणी प्रयोगान्वक्तुमर्हति ॥ बधिरस्येव तल्पस्था विदग्धा वामलोचना ॥ १७ ॥

अतएवेति पुरुषैरतिसमयोचितं व्यक्तं गानं कामिन्या यथा वेरत्वमापद्यते एवमुच्चैरुच्चार्यमाणा पश्चाद्विछिन्ना वाणी सर्वस्योद्वेगं जनयति पार्ष्णि पादस्य पश्चिमो भागो बधिरस्य तल्पस्था एकस्मिन् शयने स्थिता विदग्धा सुरते कामशास्त्रे प्रवीणा वामलोचना रमणीयलोचना यथा रतिप्रयोगान् करोति एवं पश्चाद्विच्छिन्ना तु प्रयोक्तव्या । उपांशु त्वरितं चैव विन्नस्यतेऽ बाधितं सहस्रकृत्वोऽपि न निर्मलतामासादयतीति तथा न गणयितव्यमित्याह ॥ १७ ॥

उपांशु त्वरितं चैव योऽधीते (३) विवसन्निव ॥

---

(१) योजनान्न परं व्रजेदिति "ख" पुस्तकपाठः ॥

(२) सहस्रं तु इति "ख" पुस्तकपाठः ॥

(३) चित्रसन्निभ इति "ग" पुस्तकपाठः ॥

अपि रूपसहस्रेषु सन्देहेष्वेव वर्तते ॥ १८ ॥

रूपं शब्दोच्चारणं तद्विषये । सन्देहेष्वास्ते अतएवेनाचार्यादध्ययनं कार्यं न पुस्तकादिना शुद्धं मन्त्रस्वरूपं भवतीत्याह ॥ १८ ॥

पुस्तकप्रत्ययाधीतन्नाधीतङ्गुरुसन्निधौ ॥ (१)
राजते न सभामध्ये जारगर्भा इव स्त्रियः ॥ १९ ॥

जाराद्गर्भो यासां ता यथा न भ्राजते। एवं दुष्टादागमादध्ययनं अप्राज्ञेनापि यत्र परेणाध्ययनादौ भवितव्यमित्युच्यते ॥ १९ ॥

अञ्जनस्य क्षयं दृष्ट्वा वल्मीकस्य तु सञ्चयम् ॥ अवन्ध्यन्दिवसं कुर्याद्दानाध्ययनकर्मसु ॥ २० ॥

अञ्जनपर्वतस्य व्यये क्रियमाणोऽपचयो दृश्यते वल्मीकस्य च पिपीलिकाभिरपि सञ्चयः क्रियते। एवं तत्त्वं क्रियमाणस्य । सञ्चितश्चित्तापाटवः यतो नावगम्यं । अतोऽध्ययनादिभिः शास्त्राद्यैरवंध्यमशून्यमहः कार्यमबलोऽपि यत्नवानर्थं साधयति। ननु बलवानहितय नइति पूर्वोक्तविदा तयोनुच्यते ॥ २० ॥

यत्कीटैः पांशुभिः सूक्ष्मैर्वल्मीकः क्रियते महान् ॥
न तत्र बलसामर्थ्यमुद्योगस्तत्र कारणम् ॥ २१ ॥

विद्याभ्यासः सर्वदा कर्त्तव्यो यथाऽधीतस्य नाशो न भवतीत्याह-

सहस्रगुणिता विद्या शतशः परिकीर्तिता ॥ आगमिष्यति जिह्वाग्रे स्थलान्निम्नमिवोदकम् ॥ २२ ॥

गुणिता अभ्यस्ता परिवर्तिता । शिष्याणां परिकीर्तिता प्रतिपादिता प्रयत्नेन सुखेन परिवर्त्तते आगमिष्यति जिह्वाग्रे स्थलान्निम्नमुद्गताप्रदेशान्निम्नं स्थानं यथा जलं गच्छति विद्यार्थिना प्रह-

(१) नभ्राजते इति "ख" पुस्तकपाठः ॥

रद्वयं हेमन्ते प्रहरत्रयं च वसन्तादौ कालोऽनुशीलनीयइत्याह ॥ २२ ॥

श्वानामिव जात्यानामर्द्धरात्रार्द्धशायिनाम् ॥ न हि विद्यार्थिनां निद्रा चिरन्नेत्रेषु तिष्ठति ॥ २३ ॥

अन्नपाननारीव्यसने वर्ज्जनीयम् । दूरगमने च यत्नः आवश्यीयइत्याह ॥ २३ ॥

न भोजनविलम्बी स्यान्न च नारीनिबन्धनः ॥ सुदूरमपि विद्यार्थी व्रजेद्गरुडहंसवत् ॥ २४ ॥

न नार्यो निबन्धनमवघट्टंभूता यस्य गरुडइव धावेत् । जनसमूहनिवासं कृष्णसर्पवदवगन्तव्यम् प्रतिभोजनं विषवत्परिहर्त्तव्यम् । स्त्रियश्च राक्षस्य इव वर्ज्जनीयइत्याह ॥ २४ ॥

अहेरिव गणाद्भीतः सौहृद्यां नरकादिव ॥ राक्षसीभ्यइव स्त्रीभ्यः स विद्यामधिगच्छति ॥ २५ ॥

अलसो विद्याधनादीनां साधयति क्लीबो नपुंसकश्च पुत्रादि तं लभते मानी चातितुष्टति शीलो न विद्याभाजनः नाऽयं विद्यामासादयतीति लोकप्रमादाद्भीतो न विद्या गृह्णाति अथ प्रातः पुनः प्रातरिति कालप्रतीक्षको न विद्यामान्योऽभवतीत्याह ॥ २५ ॥

न शठाः प्राप्नुवन्त्यर्थान्न क्लीबा न च मानिनः ॥ न च लोकरवाद्भीता न च श्वः श्वः प्रतीक्षकाः ॥ २६ ॥

यथा भूतलादुदकम् महता खनेन लभ्यते एवं पौनः पुन्येन गुरुसेवनादसंदिग्धो पाठबोधो प्राप्यते इत्याह ॥ २६ ॥

यथा खनन् खनित्रेण भूतले वारि विन्दति ॥ एवं गुरुगतां विद्यां शुश्रूषुरधिगच्छति ॥ २७ ॥

स्थानकरणैरपीडयता वर्णस्फुटमुच्चारयता स्वाध्यायादिकर्त्तव्यं व्र-

ब्रह्मलोकप्राप्त्यर्थमिति वर्णरूपावधारणार्थं शिक्षेति शास्त्रांते प्रतिपाद्यते- ॥ २७ ॥

शुश्रूषा रहिता विद्या यद्यपि मेधागुणैः समुपयाति ॥ वन्ध्येव यौवनवती न तस्य विद्या फलवती भवति ॥ २८ ॥

द्यूतं पुस्तकवाद्यं च नाटकेषु च सक्तिका ॥ स्त्रियस्तन्द्रा च निद्रा च विद्या विघ्नकराणि षट् । २९ ॥

यथा व्याघ्री हरेत्पुत्रान् दंष्ट्राभिर्न च पीडयेत् ॥ भीता पतनभेदाभ्यां तद्वद्वर्णान्प्रयोजयेत् ॥ ३० ॥

एवं वर्णाः प्रयोक्तव्या नाव्यक्ता न च पीडिताः ॥ सम्यग्वर्णप्रयोगेण ब्रह्मलोके महीयते ॥ ३१ ॥

शुनी व्याघ्री विडाली च चिरजातापत्याम् दन्तैरपीडयन्ती अपत्यानयति च यद्दि न सम्यक् प्रतिगृह्णाति तदा पतन्ति। यदि वाऽतिबलेन गृह्णाति तदा भेदउपघातोऽपत्यानां भवतीत्येवं वर्णोच्चारणं कार्यम् । व्यक्ताः स्फुटाः प्रयोगास्तु जपे स्वध्यायेऽध्यापने चेति ॥ द्वितीयस्याष्टमी कण्डिका ॥ इतिश्री भट्टशोभाकरविरचिते नारदीयशिक्षाविवरणे द्वितीयः प्रपाठकः समाप्तः । इति शिक्षाभाष्यं समाप्तम् ॥

---

# सामवेदीया गौतमीशिक्षा ॥

ॐ नमः सामवेदाय ॥

अथ त्रयस्त्रिंशद्व्यञ्जनानि भवन्ति । स्पर्शान्तस्थोष्माणश्चेति । तत्र ककारादयो मकारान्ताः स्पर्शाः पञ्चविंशतिश्चत्वारोऽन्तस्थास्ते यरलवाश्चत्वारश्चोष्माणस्ते शषसहाश्चेत्यनेकम् व्यञ्जनम् यत्रोपर्युपरि संयुक्तम् तत्संयोगसंज्ञं भवति । इत्यक्षरम् च पूर्वमक्षरम्, अथ त्रिविधः संयोगपिण्डो भवत्ययस्पिण्डो दारुपिण्डस्तथोर्णापिण्डश्चेति । यमसहितमयस्पिण्डम्, दारुपिण्डमन्तस्थैर्युक्तम् । यमान्तस्थवर्जन्तूर्णापिण्डमित्यन्तस्थयमसंयोगे विशेषो नोपलभ्यतइत्यशरीरं यमं विद्यादन्तस्थः पिण्डनायकः ॥ १ ॥ अथानन्त्या विंशतिर्भवन्ति ते कचटतपाः खछठथफा गजडदबा घझढधभाश्चेत्यथान्त्याः पञ्च ते ङञणनमाश्चेत्यथानन्त्याश्चत्वारस्ते सयमास्ते कुं खुं गुं घुं इत्यनन्त्यान्त्यसंयोगेऽनन्त्यपूर्वेऽन्त्योत्तरे व्यवधानवर्जिते तत्र यमा वर्त्तन्ते न सर्वंशयइति ॥ २ ॥

अथ सर्वेषां व्यञ्जनानां द्विर्भावो भवति द्वादशाक्षरवर्जं ते खछठथफा घझढधभा रहयोश्चेति । ह-

कारस्यैके मन्यन्ते यदि भवति रहयोर्मध्ये । सर्वत्र स्वरात्संयोगादिः क्रामति रेफहकारवर्जम् । ताभ्यां परं क्रामति । न क्रमते परमुपध्मानीयानुस्वारजिह्वामूलीयानां विसर्जनीयपरं च चः तत्प्रत्यये ॥ ३ ॥

अथ द्व्यक्षराणामुदाहरणं द्वौ तकारौ तस्मात्ते सत्तमाः यथा प्रैयवेत्तेव भवति । द्वौ नकारौ यन्नमस्यं । अग्नो देवीरन्नयाभि । द्वौ जकारौ यज्ञायथाः । उज्जिहानाः । अस्थिमज्जेति । द्वौ मकारौ यम्मित्रम् । तम्मन्ये । शुम्मघवन् । द्वौ चकारौ यदच्च कच्च । परमाच्चिद्यथा शुभार्गवे साम्न्युच्चाते जातमच्च ३ साः । द्वौ सकारौ यस्सुचिती । पुनानस्सोऽग्निस्समिधा । द्वौ यकारौ यघोभ्य्यो धानंजय्यः । मह रय्या निवर्त्तस्वेति । द्वौ दकारौ यद्दूरे । यद्दिघृचे । मोहाल्लको हारुणिः । द्वौ लकारौ स्वर्गाल्लोकादूर्ध्वं वसुल्लिखेदेभिर्देवेनल्लोकैः । द्वौ लकाराद्दृश्यवतं श्याक्षस इन्द्रभुङ्ङिति मघवन्निन्द्र भुङ्ङितिप्रभुङ्ङतीन्द्रसत्सरपूता २३४५ एवमादीनि ॥ ४ ॥

चकारछकाराविन्द्रमच्छेति । कारकारौ वेत्याक्षीति । दकारधकारौ युद्धमिति । बकारभकाराववबभ्रस्तृतीयमिति । य एव रेफषकारा वर्षा सोम द्युमत्तमं, एदंबर्हिरिति रहौ । विहुतमिति हरौ । दर्शेति

रथौ । सर्गेति सपौ । दयौ देवस्थाने दधौ रक्तान्भू-
मिरततनस्समुद्र ठं० समचूकुपदिट् । द्रुडा । २३४५
एवमादीनि ॥ ५ ॥

यानि चान्यानि यथा करणे सर्पसाम घर्मरो-
चनाभीवर्त्तेषु संय्यमन्नय्यायमन्वियमन्नममायमन्नुदुय-
श्लोकानरोचयोहो यितंव्वो३दा३ स्माम्तीषहो वा यल-
वैर्द्विभावस्तैः पूर्वः सानुनासिवास्तुल्यस्थानकरणपरे क्र-
मप्रतिषेधः क्रमप्रतिषेधः ॥ ६ ॥

अथ व्यञ्जनानामुदाहरणमक्षरमिति ककषास्त-
स्वब्भवसस्बभवाः । यच्छिद्रमसि चचक्षास्त्वामिद्धि
ददधास्त्वैयोके, ग्रग्रवा विश्वोहाद् । ब्रह्मेति हममाः ।
विष्णुरिति षणणाः । पृश्निरिति शशनाः । सृप्रक-
रस्नमूतय इति ससनाः । सार्वकामिके, ननकाः सर्वा-
न्कामानश्नोमही २३४५ एवमादीनि । ७ ॥

आम्नं ममराः । दीर्घंरगघाः । पादमह्रो दध-
याः । पादोपात्तीये ननताः । गोशृङ्गे ततसास्तरणि
रित्त्विषासती ३ । षट्ट्सु टटसाः । खड्गं षडडगाः । कु
ञ्जं ञ्ञजाः । वज्रं जजराः । ददरावकणसन्नीन्दुः समुद्र-
द्रसुर्विया विभातीति २३४५ एवमादीनि । ८ । आख्या-
तं कखयाः । रकखा मूर्क्खम् । ङङ्खाः शङ्ङ्खम् ।
अञ्जनाः शार्गेहावाञ्जाता२३४ यि, वियञ्जते स समञ्ज-

तें । पूज्यम् । जजया । दूड्ढ्यम् । डढयाः । तुब्भ्यं बभयाः । सन्नषडद्दइति ननषाः । रककार्कअर्कपुष्पे सामन्यक्र्कौ देवानांपरमे वियो २ मा२३४५ नर्क्कस्य देवाः परमे वियो २ मा २३४५ नेवमादीनि ष्यक्षराणामेतदुदाहरणं यथोक्तम् । इति प्रथमः प्रपाठकः । १ । अथ चतुरक्षराणामुदाहरणार्थं सयमायमाभ्यार्थं सयमार्थं स्तावद्यथाग्निरिति द्वौ गकारौ यमनकारौ । यज्ञइति द्वौ जकारौ यममकारौ । सन्त्ते द्धयममकारा भरामेद्दुध्यं चणवामा इवीर्थं षि ताथि । गृबभ्णीतइति बभयमणकाराः उन्मृद्नीतानिति ददयमनकाराः । सगिड्ढमेति डढयममकाराः । पाप्म्मेति पपयममकाराः । विलम्बसौपर्णं त्ततयमनकाराः इत्यस्य प्रत्नामनुद्युतमो यइयाहा एवमादीनि ॥ १ ॥

अथ यमवर्जितानां यथोरङ्ङन्यवेति ङङनयाः । कार्ष्मन्वाजोति रषषमाः । यद्वीडाविन्द्र यत्स्थिरइति ततसथा अन्द्रमा अप्स्वन्तरेतिपपसवाः । इारायणीगगधयाः प्राग्ध्युयौहो २ यि प्रचापताग्नि । इत्स्तमिति ततसनाः । पङ्क्तिरपि ङङकताः । स्थिरास्त्सुमिति पपसनाः ॥ प्राङ्ङ्क्सुरिति ङङकसाः । कण्वरथन्तरे रजजथा मार्ज्यमानस्सुहस्तिया एवमादीनि । २

प्रेङ्खार्ठ॰ स्त्र्चारोहन्तीति रहयास्तथा व्व्रतइति ववराः सम्व जीम्वश्श्राभिति शश्रवाः । मत्स्याख्येति ततसयाः । शौतकक्षे ननदराः, इन्द्राय मद्वने सुतभिन्द्राय मो वा । अयज्ज्व्यघटइति जजवयाः । काराठ्यइति णणठया वर्गान्त्यइति ननतयाः । सुनिक्क्त्सीति ककतसाः । रथन्तरे रथथयाः प्रापुबदश्व्यी यतो वाएवमादीनि ॥ ३ ॥

अथ पञ्चाक्षराणामुदाहरणम् । यथा ज्योतिर्गौरायुस्त्र्यहइति ससतरयाः । सङ्ङ्क्ग्त्येति ङङकषणाः । तस्मिन्स्तन्वेति ननसतवाः । विश्वाःस्त्न्याइतिपपसनयाः । ङङषवाः पयस्वग्ने युङ्ङ्क्ष्वाही३येतया । पाष्प्र्णाइतिरषपणयाः । ग्गग्ध्व्यार्ठ॰ हीरइति गगधवयाः । पूर्णाञ्ज्ञोत्याविति ञञजतयाः । ऊर्वेजसि यक्ष्यण्टस्वतामिति णणटसवाः । तत्त्र्यं समानीति रककषयास्ताव्यमिहा३४३ हूं ३ वा५ यिमा६५६ एवमादीनि ॥ ४ ॥

अथ सयमान्यथा सबुधन्याइति दभयमनाः । दुःष्वप्प्न्यर्ठ॰ स्विति पपयमनयाः । सार्पराज्ञाज्ञञाः इति जजयमञयाः । मटट्ण्याइति टटयमणयाः । शुध्येगघयमनयाः पतिं वो अघ्न्यानां धेनूनामिषू२३ ध्यसाउ वा । सकन्थाइति ककथयमनकाराः । प्रथमबहि-

स्त्नुमूतयइति ससतयमनकाराः । प्राग्घमाखपिवामेति गगधयममकाराः । मूर्द्धा विश्वस्येति रदधयमनकाराः । कावेरजजयममकाराः । इत्यबोधाधियाग्निज्र्म उद्दायितिसूराराया२ एवमादीनि ॥ ५ ॥

अथ षडक्षराणामुदाहरणमङ्गे षवक्म्याद्रावितिद्वौ ककारौ यममकारवकारयकारा इति । सचकारत्सन्यांइति स्तसनयाः । साध्वग्घर्मवाङ्गमिति रगगधयममकाराः ॥ ६ ॥

अथ सप्ताक्षरमेकमुदाहृतं प्रातिशाख्ये हि नहि न घुस्घुसुचुङ्ङ्च्च्वाविति ङङकषकषवाः । गौतमेनोक्तं न सप्ताक्षरात्परः संयोगो भवत्येषा सहस्रवर्त्मा नानावर्तिविभूषिता, संयोगशृङ्खला नाम सामवेदनिबन्धनात् ॥ ७ ॥

इति द्वितीयः प्रपाठकः । इति सामवेदीयगौतमीशिक्षासमाप्ता ॥

---

# सामवेदीया लोमशी शिक्षा ॥

---

लोमशन्यां प्रवक्ष्यामि गर्गाचार्येण चिन्तिताम् ॥ सान्निधानां यथोक्तन्त्वाचार्यवचनं यथा ॥ १ ॥ ह्रस्वं दीर्घं तथा हृद्यमभिगीतं तु सामगाः । मुहुर्मुद्दण्डवत्कुर्युः सम्पातोत्थानसञ्ज्ञवत् । २ । केन कम्पातितः कम्पः संयोगो येन कम्पते ॥ किं वा कम्पइतिप्रोक्तो येनासौ कम्प उच्यते ॥ ३ ॥ पूर्वाङ्गेण कृतं पूर्वं पराङ्गेण तु धारितम् ॥ व्यञ्जनेन द्विधाभिन्नः स्वरो भीतस्तु कम्पते । ४ । दीर्घकम्पेऽप्यर्द्धमात्रा तृतीये परिकीर्तिता । द्वितीये अर्द्धमात्रा तु प्रयोगो घण्टलालवत् ॥ ५ ॥ रंगस्तु द्विविधो ज्ञेयः स्वरपरो व्यञ्जनः परः ॥ पारावतः सवर्णाभो विहितोऽक्षरचिन्तकैः ॥ ६ ॥ तस्य मात्रा तु हृदये अणुमात्रा तु मूर्द्धनि ॥ नासाग्रे त्वणूनां मात्रा रङ्गस्य परिकीर्तिता ॥ ७ ॥ रङ्गे चैव समुत्पन्ने न ग्रसेत्पूर्वमक्षरम् ॥ स्वरं दीर्घं प्रयुञ्जीत तस्य नासिक्यमुच्चरेत् ॥ ८ ॥ द्विमात्रो मात्रिको वाऽपि नसि मूलं समाश्रितः ॥ अन्ते प्रयुज्यते रङ्गः पञ्चमैः सर्वनासिकः ॥ ९ ॥ प्रथमः खण्डः ॥ ककारार्द्धं टकारार्द्धं हन्वां तिष्ठति दक्षिणे ॥ जिह्वाग्रेण तु आभाष्येत्किट्किडाकार एव च ॥ १ ।

करेणुः कुर्विणी चैव हरिणी हारितेति च ॥ तथा हठं॰ सप्तदानात पञ्चैताः स्वरभक्तयः ॥ २ ॥ करेणुं स्त्र-हयोर्विद्यात्कुर्विणीं रहिकारयोः ॥ हरिणींठं॰ हशयो-र्विद्याद्धारितां ऋशकारयोः ॥ ३ ॥ तथा रेफषकारे तु हठं॰ सप्तशा प्रकीर्तयेत् । यातु रेफषकारी स्यात्काकिनीं तां विनिर्दिशेत् ॥ ४ ॥ रहाभ्यां तु परं नित्यं क्रामयन्ति विचक्षणाः । हरौ तु यत्र दृश्येते न क्रमस्तु तयोर्भवेत् ॥ ५ ॥ रयोर्यदि हकारस्तु दृश्यते मध्यमः क्वचित् । द्विर्भावं तत्र जानीयात्प्रेङ्खाठं॰ स्तर्ह्यं निदर्शनम् ॥ ६ ॥ द्वितीयः खण्डः । नैतत्स्वरति पूर्वाङ्गे न पराङ्गे कदाचन ॥ न व्यञ्जने न मात्रायां कथं योगो विधीयते ॥ १ ॥ स्वरस्यैव तु पूर्वाद्‌र्धे व्यञ्जनाद्‌र्धाद्‌र्धपश्चिमे ॥ तयोरद्‌र्धाद्‌र्धसंयोगे स्वरं कुर्याद्विचक्षणः ॥ २ ॥ अन्तोदात्तं मध्योदात्तं विरतठं॰ सठं॰श्रये पदे । अन्तोदात्तं विजानीयादुदात्तः प्रत्ययो यदि ॥ ३ ॥ अन्तोदात्तं नीचस्वरितं त्रिरतठं॰ सठं॰श्रये पदे । अन्तोदात्तं विजानीयादुदात्तः प्रत्ययो यदि ॥ ४ ॥ अवक्षेपः प्रगाणं च रवो यस्याप्युपद्रवः । यमलः स्वरितं चैव दोषाः पञ्चार्चिके स्मृताः ॥ ५ ॥ वर्णा विठं॰शतिरेकश्च येषां द्विर्भावइष्यते । अथ मान्त्यास्तृतीयाश्च यलवाः षषसैः स-

इ ॥ ६ ॥ अनुस्वारे विवृत्त्यां च विरामे चाक्षरद्वये ॥ द्विरोष्ठ्यौ तु विनिर्गच्छतस्थौ कारयकारयोः ॥ ७ ॥

तृतीयः खण्डः । बहूनामप्युकाराणामेकं करणमिष्यते ॥ ह्रस्वे दीर्घे च वृद्धे च नानाद्यं करणं भवेत् ॥ १ बहूनामप्युकाराणां मध्यदीर्घं भवेद्यदि ॥ १ ॥ आद्यावन्ते च करणं मध्यमः पृथगेव तु ॥ २ ॥ बहूनामप्युकाराणामन्ते दीर्घं भवेद्यदि ॥ आद्यावन्ते च करणं मध्यगः पृथगाश्रितः ॥ ३ ॥ आदौ द्विः करणं यत्र पश्चादुवर्णमेव च । आदिमध्यान्तः स विज्ञेयो वायो ज्ञेयो निदर्शनम् ॥ ४ ॥ आदौसकृत्करणं यत्र पश्चा दुवर्णमेव च । आद्यावन्तः स विज्ञेयो वायो युक्तो निदर्शनम् ॥ ५ ॥ असंयुक्तः पूर्ववर्णः स्याद्युक्तस्तु परतो यदि ॥ उकारेण तु संयुज्यते करणाभ्यासस्तथा भवेत् ॥ ६ ॥ व्यञ्जनान्यनुवर्णानि यान्यवर्णान्यान्यहितानि च । विद्याद्द्विः करणमेतेषामथौकारउकारयोः ॥ ७ ॥ ओष्ठ्यस्वरावनन्तरौ यत्र यत्र संयोगसंयुतौ ॥ तत्र सकृत्करणं० स्याद्द्विः करणमतोऽन्यथा ॥ ८ ॥ ओष्ठ्यौ वर्णौ यदि स्यातामसंयोगपरावपि । द्विरोष्ठ्यनामेतैः कुर्यादोजिष्ठं पुपुदर्शनम् ॥ ९ ॥

चतुर्थ खण्डः ॥ यः स्वरान्तात्पूर्वपदात्परः षणकारस्नापद्यते । तत्र पदबहिस्ते सामस्तु सन्धिवत्स्वार-

भः ॥ १ नमौ गुरू नादसञ्ज्ञौ लघू चैवानुनासिकौ । संयोगौ सविसर्गौ च नादावेव प्रकीर्त्तितौ ॥ २ ॥विष्टत्तौ च विरामे च सवर्णे प्रत्यये परे ॥ अनुनासिकास्तु विज्ञेयाः शेषा नादाः प्रकीर्त्तिताः ॥ ३ ॥ मात्रिका नासिका ज्ञेया द्विमात्रा नादसञ्ज्ञकाः ॥ सविसर्गास्तु नादाः स्युः सानुस्वारास्तु पूर्वगाः ॥ ४ ॥ आनुनासिकास्तु ये वर्णा घोषास्तु प्रत्यया यदि । नादं तत्र विजानीयादनुदर्हति निदर्शनम् ॥ ५ ॥ नासिकेष्वपि वर्णेषु यो यत्र भजते स्वरः । तत्तमेवोपजीवन्ति नासादोषाठं॰श्च वर्ज्जयेत् ॥ ६ ॥ मध्यमेकमङ्गुष्ठे तु प्रदेशिन्यां तथैव च ॥ तृतीये चैव तु कर्त्तव्ये प्रणतेवं प्रयुज्यते ॥ ७ ॥ द्वे अथवन्तरेङ्गुष्ठस्य प्रदेशिन्यां तु षट् स्मृताः । अर्द्धमात्रतृतीयस्य प्रणतेव प्रयुज्यते ॥८॥ हकारं पञ्चमैर्युक्तमन्तस्थैर्वाऽपि संयुतम् ॥ औरसं तं विजानीयात्कराठ्यमाहुरसंयुतम् ॥ ६ ॥ हकारं॰ रेफसंयुक्तं कदाचिद्दलसंयुतम् ॥ उच्चारणीयं कराठ्यमेवमीप्सन्ति पण्डिताः ॥ ॥ १० ॥ हकारो यत्र पूर्वस्थो ह्यन्तस्थाद्यो भवेत्परः ॥ पदकाले वियुज्येत सठं॰हितायां न सौरसः ॥ ११

पञ्चमः खण्डः । व्यञ्जनं शिरसि निविष्टो रेफस्त्ववर्णतां याति । स तु सर्वत्र न कार्यः शषसहकारेषु का-

ये: ॥ १ ॥ अन्तरर्ध० ग्रथितं चैव यत्र तिष्ठति संयुतम् । ऋवर्णं तत्र विद्यात व्यञ्जनं तु विनिर्द्दिशेत् ॥ २ ॥ अक्षरं यत्र दृश्येत व्यञ्जनं विरते पदे ॥ पूर्वाङ्गं तद्विजानीयाद्यतृस्थितं तत्पराङ्गवत् ॥ ३ ॥ रेफस्य च ऋवर्णस्य स्वरभक्तेस्तथैव च ॥ अवर्णवत्प्रयोग: स्याद्द्विवच्च व्यञ्जनस्य तु ॥ ४ ॥ मध्यमार्ध० श्रुतिमासाद्य द्विविधं दर्शयेत्स्वरम् । अधस्थे निषि वत्कुर्याद्ब्रह्मणश्चागमद्दर्व्वगे ॥ ५ ॥ सक्तान्तत्वा प्रणतर्ध० स्यादसक्तनीचमुच्यते । आयाम्हि प्रणतं नीचं पञ्चिप्राणचतुर्थयो: ॥ ६ ॥ आकारान्तं यदृष्मान्तं घोषं च परत: स्थितम् ॥ सघोषवति लोपस्तु विदागाधं तु दर्शनम् । ॥ ७ ॥ षष्ठ: खण्ड: ॥ अस्यउस्ये च रङ्गे च गतिल्लोपे तथैव च । एकारौकारलोपे तु विट्टत्तिर्व्यञ्जनोदया ॥ १ ॥ अप्रत्यया उवर्गा भढतपरा: पविन्नवर्जम् । डढणेषु तु संटत्ता ज्ञेयास्ते हरीतवर्जम् ॥ २ ॥ द्वितीये विरता या तु चतुर्थे न प्रवर्तते ॥ दीप्तामभोगमे विद्यादुपरिष्टात्तु आयतीम् ॥ ३ ॥ ऊता प्रहमसा चैव त्सिवावारा तथा मह्ो ॥ नित्यायता: प्रयोक्तव्या निर्द्दिशन्ति विचक्षणा: ॥ ४ ॥ प्राणापाननिगारे च सर्ध० स्याद ऋषभे तथा ॥ प्रथमस्वरे तु कर्त्तव्या: किटिकण्डाकारएव च ॥ ५ ॥ प्राणसान्नि त्यजेतप्राणं

प्रथमं दक्षिणं भवेत् ॥ सव्येन तु ग्रहणार्थं स्यात्प्राणस्य उभयथाऽथवा ॥ ६ ॥ दक्षिणे निःसृतः प्राणश्चापानस्त्वन्यथा भवेत् ॥ सव्यं पीत्वा अपानस्य तुम्बरोऽस्य मतं यथा ॥ ७ ॥ पादपूर्वा ये डकाराः पदपूर्वास्तथैव च । डहूति चेति विज्ञेया ढकारेऽप्ययं विधिः ॥ ८ ॥ मथ्यमाने यथा दध्नि नवनीतं विजायते । तद्वदिष्टमध त्ताभ्यां पृथग्युक्तौ च भावयेत् ॥ ९ ॥ अपसहरा दृश्यन्ते तेषु चोदयवर्त्तिषु ॥ दीर्घानुस्वारं जानीयात्संयोगे ह्रस्वएव वा ॥ १० ॥ असंयोगादनुस्वाराल्लघूनासुपयास्यति । संयोगात्तु परं नित्यर्थं सर्थं अथो विनिवर्त्तते ॥ ११ ॥ संयोगः परतो यत्र अनुस्वारस्तु पूर्वशः । ह्रस्वं तं तु विजानीयात्स्वर्थं स्वे इति निदर्शनम् ॥ १२ ॥ अनुस्वारस्योपरिष्टात्संहितो यदि दृश्यते । स दीर्घइति विज्ञेयउभयर्थं शृणवन्न नः ॥ १३ ॥ मात्रार्द्धद्विमात्रो ऽनुस्वारो द्विमात्रान्मात्र एव च । मात्रिकादपि संयोगे मात्रिकस्तु द्विरूपवत् ॥ १४ ॥ सप्तमः खण्डः ॥ ७ ॥ यवौ तु रेफसंयुक्तौ रेफ आद्यो भवेद्यदि । पूर्वाङ्गं तद्विजानीयात्स्व यपूर्वं निदर्शनम् ॥ १ ॥ यवौ तु रेफसंयुक्तौ विरते च भवेद्यदि । पराङ्गं तद्विजानीयात्तरो ह्यर्येति लक्षणम् ॥ २ ॥ आसन्नाच्च महानाच्च यातुधानाच्च यो यथा ॥ न एते नकारपूर्वा निर्द्दिशन्ति विचक्षणाः ॥ ३ ॥ हकारो य-

न दृश्येत वर्गान्तैः संयुतः क्वचित् ॥ उष्मादयस्तु विज्ञेयः प्रयत्नौ च भावयेत् ॥ ४ ॥ रेफपूर्वो हकारस्तु रेफात्परस्तथापि वा ॥ अनुस्वारात्परो यत्र हकारः क्रमति क्वचित् ॥ ५ ॥ अनुस्वारपराः शषसा न क्रमन्ति कदाचन ॥ तत्र क्रामन्ति शषसा अन्तस्थैः परतो यदि ॥ ॥ ६ ॥ सूर्यरश्मिप्रतीकाशा कणिका यत्र दृश्यते ॥ परमाणोस्तु तत्प्रमाणम् स्यान्मात्रा तु चतुराणवत् ॥ ७ ॥ हृदयस्थस्य विद्यात्कण्ठे विद्द्या द्विराणवम् ॥ त्रिराणवन् तु जिह्वाग्रे निःसृतं मात्रिकम् भवेत् ॥ ८ ॥ चाषस्तु वदते मात्रां द्विमात्रं वायसोऽब्रवीत् ॥ शिखी त्रिमात्रो विज्ञेय एष मात्रापरिग्रहः ॥ ९ ॥ एकमात्रो भवेद्ध्रस्वो द्विमात्रो दीर्घ उच्यते ॥ प्लुतस्त्रिमात्रो विज्ञेयो व्यञ्जनञ् चार्द्धमात्रिकम् ॥ १० ॥ सर्वमचतुर्थन्त वर्षद्दन्त्यएतानि दर्षयन्ति ॥ यथा दस्यरति गन्द्रस्विन्द्रमच्छ अतपमात्वा सूगोत्ताग्रत्यतन्तौ च रङ्क्ष्ये ॥ वर्ह्णिष्यादीनामपरिस्वारो व्यञ्जनलोपो व्यञ्जनलोपः ॥ ११ ॥ इति लोमशी शिक्षा समाप्ता ॥ ग्रहवेदाङ्कचन्द्रयुते इषे मासार्जुने दले ॥ गौतमीलोमशीशिक्षे विहिते सामगे मुदा ॥ १ युगलप्राक्किशोरेण पाठकेन दयालुना ॥ सामगानां हितार्थाय वेदविद्यालयेऽङ्किता ॥ २ ॥

---

# अथर्ववेदीया माण्डूकी शिक्षा ॥

॥ श्रीगणेशायनमः ॥

अथर्ववेदीयमाण्डूकीशिक्षा ॥ तिस्रो वृत्तीरनुक्रान्ता द्रुतमध्यविलम्बिताः ॥ यथाऽऽनुपूर्व्यं प्रथमा द्रुता वृत्तिः प्रशस्यते ॥ १ ॥ मध्यमैकान्तरा वृत्तिर्द्व्यन्तरा च विलम्बिता ॥ नैनां बुधः प्रयुञ्जीत यदीच्छेद्वर्णसम्पदाम् ॥ २ ॥ अभ्यासार्थे द्रुता वृत्तिरुपलब्ध्यै विलम्बिता ॥ मध्यमा तु प्रयोगार्थे न तद्वचनमन्यथा ॥ ३ ॥ ऐन्द्री तु मध्यमा वृत्तिः प्राजापत्या विलम्बिता ॥ आग्निमारुतयोर्वृत्तिः सर्वशास्त्रेषु निन्दिता ॥ ४ ॥ दोषाः प्रकाशास्तु विलम्बितायाम् वर्णा द्रुतायाम् न च सूपलब्धाः ॥ तस्माद्द्रुतां चैव विलम्बिताम् च त्यक्त्वा नरो मध्यमया प्रयुञ्ज्यात् ॥ ५ ॥ सर्वा एव तु निर्दोषा वृत्तयः समुदाहृताः ॥ स्वधीतस्य सुवक्तस्य शिक्षकस्य विशेषतः ॥ ६ ॥ सप्त स्वरास्तु गीयन्ते सामभिः सामगैर्बुधैः ॥ चत्वार एव छन्दोभ्यस्त्रयस्तत्र विवर्जिताः ॥ ७ ॥ षड्जश्चर्षभगान्धारो मध्यमः पञ्चमस्तथा ॥ धैवतश्च निषादश्च स्वराः सप्तेह सामसु ॥ ८ ॥ षड्जं वदति मयूरो गावो रम्भन्ति चर्षभे ॥ अजा वदति

गान्धारे क्रौञ्चनादस्तु मध्यमे ॥ ९ ॥ पुष्पसाधारणे काले कोकिलः पञ्चमे स्वरे ॥ अश्वस्तु धैवते प्राह कुञ्जरस्तु निषादवान् ॥ ०१ ॥ कण्ठादुत्तिष्ठते षड्जऋषभः शिरसस्तथा ॥ नासिकायास्तु गान्धार उरसो मध्यमस्तथा ॥ ११ ॥ उरःशिरोभ्यां कण्ठाच्च पञ्चमः स्वर उच्यते ॥ धैवतश्च ललाटाद्वै निषादः सर्वरूपवान् ॥ १२ ॥ पद्मपत्रप्रभः षड्जऋषभः शुकपिञ्जरः ॥ कनकाभस्तु गान्धारो मध्यमः कुन्दसमप्रभः ॥ १३ ॥ पञ्चमस्तु भवेत्कृष्णः पीतवर्णस्तु धैवतः ॥ निषादः सर्ववर्णाभ इत्येते स्वरवर्णकाः ॥ १४ ॥ बाह्याङ्गुष्ठं तु कृष्टं स्यादङ्गुष्ठे मध्यमः स्वरः ॥ प्रादेशिन्यां तु गन्धारो मध्यमायां तु पञ्चमः ॥ १५ ॥ अनामिकायां षड्जस्तु कनिष्ठायां तु धैवतः ॥ तस्याधस्तात्तु योऽन्यः स्यान्निषाद इति तं विदुः ॥ १६ ॥ प्रथमावन्तिमौ चैव वर्त्तन्ते छन्दसि स्वराः ॥ त्रयो मध्या निवर्त्तन्ते मण्डूकस्य मतं यथा ॥ १७ ॥ द्वितीयं स्वरितम्प्राहुः षष्ठः प्रचितउच्यते । उच्चं विद्यान्निषादं तु नीचं षड्जमुदाहृतम् ॥ १८ ॥ उदात्तश्चानुदात्तश्च स्वरितः प्रचितस्तथा ॥ चतुर्विधः स्वरो दृष्टः स्वरचिन्ता विशारदैः ॥ १९ ॥ स्वरे ज्ञात्वा यथा स्थानम् हस्तस्य स्पन्दनम् स्मृतम् ॥ निष्कृष्य हस्तम् विन्यस्तम् पाणौ दृष्टिं निवेशयेत् ॥ २० ॥ किञ्चिद्यो न-

भसः स्वांसाद्वाहुदृष्टिं निपातयेत् ॥ प्रसार्य चाङ्गुलीः सर्वाश्चालयेत्करमण्डलम् ॥ २१ ॥ न चाङ्गुलीभिरङ्गुष्ठमुपेयाद्दोषवित्ततः ॥ ऊर्ध्वमायुस्तमाकुञ्चमङ्गुष्ठं स्थापयेद्बुधः ॥ २२ ॥ नाधः शिरस्ताद्वामे वा नाङ्गुल्यः प्रतराः स्मृताः ॥ उत्तानं सोन्नतं किञ्चित्सुव्यक्ताङ्गुलिरञ्जितम् ॥ २३ ॥ स्वरविद्धं करं कुर्यात्प्रादेशोर्द्धश्वगामिनम् । अङ्गुष्ठस्योत्तरे पूर्वे यवस्योपरि यद्भवेत् ॥ २४ ॥ प्रादेशस्य तु तद्देशस्तन्मात्रं चालयेत्करम् ॥ चुलुनौ वा स्फुटो दण्डी स्वस्तिको मुष्टिकाकृतिः ॥ २५ ॥ एते वै हस्तदोषाः स्युः परशुश्छेदस्तु सप्तमः ॥ कूर्मोऽङ्गानीव संहृत्य चेष्टां दृष्टं दृढं मनः ॥ २६ ॥ न कम्पयेच्छिरः पादौ मुखदोषांश्च वर्जयेत् । नासिकायास्तु पूर्वेण हस्तं सञ्चालयेद्बुधः ॥ २७ ॥ सूक्ष्मान्वर्णानुश्चरेद्वै दक्षिणं श्रवणं प्रति ॥ श्रुतिं वाचोऽनुगाङ्कृत्वा वाचम् कृत्वा मनोऽनुगाम् ॥ २८ ॥ दृष्टिं हस्तानुगां कृत्वा ततः पदमिवोच्चरेत् ॥ यथा वाणी तथा पाणी रिक्तं तु परिवर्जयेत् ॥ २९ ॥ यत्रैव तु स्थिता वाणी पाणिस्तत्रैव धार्यते ॥ स्वरस्यैव तु हस्तश्च द्वावेतौ युगपद्भवेत् ॥ ३० ॥ हस्ताद्भ्रष्टः स्वराद्भ्रष्टो न वेदफलमश्नुते ॥ हस्तहीनन्तु योऽधीते स्वरवर्णविवर्जितम् ॥ ३१ ॥ ऋग्यजुः

सामभिर्दग्धो वियोनिमधिगच्छति ॥ ऋग्यजुः सामगादीनि स्वरहीनानि यः पठेत् ॥ ३२ ॥ अनघो ब्राह्मणस्तावद्यावत्स्वारं न विन्दति ॥ स्वरेणाधीयमानो यः स्वरवर्णान्प्रयोजयेत् ॥ ३३ ॥ ऋग्यजुः सामभिः पूतो ब्रह्मलोकं स गच्छति ॥ स्वरात्स्वरं सङ्क्रमते स्वरसन्धिमनुल्बणम् ॥ ३४ ॥ अविच्छिन्नम् समं कुर्यात्सूक्ष्मम् छाया तथोपमम् ॥ अक्षरज्ञो विरामज्ञः प्रत्यारम्भी तथैव च ॥ ३६ ॥ स्वरमात्राविभागज्ञः स विप्रो वक्तुमर्हति ॥ आम्रपालाशबिल्वानामपामार्गशिरीषयोः ॥ ३७ ॥ खदिरस्य करञ्जस्य कदम्बस्य च क्षीरिणः ॥ अर्कस्य करवीरस्य कुटजस्य विशेषतः ॥ ३८ ॥ वाग्यतः प्रातरुत्थाय भक्षयेद्दन्तधावनम् ॥ तेनास्यकरणं सूक्ष्मं माधुर्यं चोपजायते ॥ ३९ ॥ न चास्य वदतो दोषात्कश्चिदप्युपलक्षयेत् ॥ नात्युच्चैर्नाति वा नीचैर्घोषणः सदनस्य खम् ॥ ४० ॥ प्रब्रूयान्नातितीक्ष्णेन कण्ठेन स्फुनादिना ॥ प्रातर्वदेन्नित्यमुरःस्थितेन स्वरेण शार्दूलरुतोपमेन ॥ माध्यन्दिने कण्ठगतेन चैव चक्राह्वयैः कूजितसन्निभेन ॥ ४१ ॥ तारं तु विद्यात्सवनस्तृतीयं शिखण्डिना तच्च सदा प्रयोज्यम् ॥ मयूरहंसादिस्फुटस्वराणां तुल्येन नादेन शिरःसु खेन ॥ ४२ ॥ यथा व्याघ्री हरेत्पुत्रान्दंष्ट्राभिर्न च पीडयेत् ॥ भीता

पतनभेदाभ्यां तद्वद्वर्णान्प्रयोजयेत् ॥ ४३ ॥ एवं वर्णाः प्रयोक्तव्या न मुक्ता न चपीडयेत् ॥ सम्यग्वर्णप्रयोगेन ब्रह्मलोके महीयते ॥ ४४ ॥ शनैरध्वसु वक्रेण न परं योजनाद्व्रजेत् ॥ नहि पार्ष्णिहिता वाणी प्रयोगान्वक्तुमर्हति ॥ ४५ ॥ मान्ते मुष्ट्याकृतिङ् कुर्यादकारान्ते विक्षिपयेत् ॥ नखस्य दक्षिणेपार्श्वे नकारान्ते प्रयोजयेत् ॥ ४६ ॥ कटान्तयोस्तु कर्त्तव्यमङ्गुल्यग्रप्रकुञ्चनम् ॥ ङ्णनान्त तथैव स्यात्पान्ते त्वङ्गुलिपीडनम् ॥ ४७ ॥ ऊर्ध्वक्षेपाश्च या मात्रा अधःक्षेपाऽपि या भवेत् ॥ एकैकाम्तु स्तजेद्धीरः प्रचिते तूभयं तथा ॥ ४८ ॥ ह्रस्वानुस्वारकरणे त्वङ्गुल्याश्च प्रकुञ्चनम् ॥ दीर्घे तु सूरयः प्राहुर्दीर्घिन्याः सुप्रसारणम् ॥ ४९ ॥ पदान्तरन्न नकुर्वीत संहितायां प्रयोगवित् ॥ नैव मांसं विजानीयात्पांसे पांसं विनिर्दिशेत् ॥ ५० ॥ यथा नौ स्रोतसां मध्ये समं गच्छति संयुता ॥ तैलधारेव वा वाणी तद्वद्वर्णान्प्रयोजयेत् ॥ ५१ ॥ उदात्ताच्च न कर्त्तव्यमुदात्तं स्वरितन्तथा ॥ नीचान्नीचतरन्नास्ति उच्चादुच्चं न विद्यते ॥ ५२ ॥ उच्चादुच्चतरन्नास्ति नीचान्नीचतरङ् कुतः ॥ स्वरितात्स्वरितन्नास्ति कम्पिताच्चैव कम्पितम् ॥ ५३ ॥ यदुदात्तमुदात्तन्तद्यत्स्वरितन्तत्पदे भवति नीचम् ॥ यन्नीचन्नीचमेव तद्यत्प्रचयस्थं तदपि

नीचम् ॥ ५४ ॥ अनुदात्तमनह्वादमुदात्तानामताडनम् ॥ अनुदात्तमनाधिष्ठम् अवसानामरोमशम् ॥ ५५ ॥ षड्धातु स्वरितादेवह्युदात्तश्च चतुर्विधः ॥ द्विविधस्यानुदात्तस्य ह्येतच्छास्त्रेण चोदितम् ॥ ५६ ॥ स्वरितप्रभवं प्रचितात्स्वरितमेव उदात्तम् वा ॥ अनुदात्तमेव तद्विद्यादृतम् च तद्विद्धि यत्प्रचितम् ॥ ५६ ॥ स्वरितात्पराणि यानि स्युरनुदात्तान्युदात्तवत् ॥ सर्वाणि प्रचयं यान्ति ह्युपोदात्तं न विद्यते ॥ ५७ ॥ स्वरितावधृतउदात्ते परस्त्रिपूर्वो विक्रमोच्यते ॥ खरितावधृतउदात्ते पादः स्यात्स हि विक्रमः ॥ ५८ ॥ ननु धारयेद्वृत्तमुपसर्गमुपोदात्तम् निपातयेत् ॥ एकाक्षरे धारयेन्न च धृतमुच्चारयेत्स्वरे वाऽपि ॥ ५६ ॥ न्यासमेवादितः कुर्यान्नोयतेषु बहुष्वपि ॥ शेषमाद्यवदुक्त्वा तु तत्पदेषु समेषु च ॥ ६० ॥ स्वर उच्चः स्वरो नीचः स्वरः स्वरित उच्यते ॥ व्यञ्जनान्यनु वर्त्तन्ते यत्रासौ तिष्ठति स्वरः ॥ ६१ ॥ स्वर उच्चः स्वरो नीचः स्वरः स्वरित एव तु ॥ स्वरप्रधानं त्रैस्वर्य्यमाहुरक्षरचिन्तकाः ॥ ६२ ॥ द्वयोस्तु स्वरयोः सन्धावेकीभावो यदा भवेत् । उदात्तोऽप्यनुदात्तस्य वशं गच्छति सन्धिषु ॥ ६३ ॥ दुर्बलस्य यथा राष्ट्रं हरते बलवान्नृपः ॥ स्वरो व्यञ्जनमासाद्य हरते नात्र संशयः ॥ ६४ ॥ आख्यातानां प्रयोगेषु पूर्वस्व-

रंसुपस्थितम् ।। षोडशाक्षरमर्यादं यद्योगे स्वरमुद्धरेत् ।। ६५ ॥ नीचं तु स्वरपूर्वं तु नीचावग्रहमेव च ॥ इत्यव्यक्तद्विजानीयादुच्चावग्रहवर्जितम् ॥ ६६ ॥ नाभिहन्यान्ननिर्हन्यान्न प्रगायेन्न कम्पयेत् ।। एतौ द्वौ युगपत्साध्यावेतच्छास्त्रेण चोदितम् ॥ ६७ ॥ अष्टौ स्थानानि वर्णानामुरः कण्ठः शिरस्तथा ।। जिह्वामूलं च दन्ताश्च नासिकोष्ठौ च तालु च ॥ ६८ ॥ वर्णानां तु प्रयोगेषु करणम्स्याच्चतुर्विधम् ॥ संवृतं विवृतञ् चैव स्पृष्टमस्पृष्टमेव च ॥ ६९ ॥ स्वर्णानां करणं स्पृष्टमन्तस्थानामतोऽन्यथा ॥ यमानां स्वरितम् प्राहुर्विवृतम् च विरोष्मणाम् ॥ ७० ॥ सप्त स्वरान्प्रवक्ष्यामि तेषां चैव बलाबलम् ॥ लक्षणानि च सर्वेषां युक्तस्तानि निबोधमे ।। ७१ ॥ अभिनिहितः प्राश्लिष्टो जात्यः क्षैप्रश्च पादवृत्तश्च ॥ तैरोव्यञ्जनः षष्ठस्तैरोविरामश्च सप्तमः ।। ७२ ।। एओ आभ्यामुदात्ताभ्यामकारो रेफितश्च यः ॥ अकारं यत्र लुम्पति तमभिनिहितं विदुः ॥ ७३ ॥ इकारं यत्र पश्येयुरिकारेणैव संयुतम् ॥ उदात्तोऽप्यनुदात्तस्य प्राश्लिष्टोऽभीप्सतामपि ॥ ७४ ॥ सयकारं सवंवाऽप्यक्षरं स्वरितंभवेत् ।। न चोदात्तं पुरस्तस्य जात्यःस्वर्दृत्य एव तु ॥ ७५ ॥ इउवर्णौ यदोदात्तावापद्येते यवौ क्वचित् ।। अनुदात्तप्रत्यये स्याद्विद्धि क्षैप्रस्य

स्वरम् ।। ७६ ।। स्वारिति स्वरितम् यत्र विष्टत्यां यत्र संहिता ।। तं पादवृत्तं जानीयात्तो त्वक्षिन्यत्रमादधुः ॥ ७७ ॥ उदात्तपूर्वं स्वार्हं तु द्वितीये अक्षरे तु यः ।। तैरोव्यञ्जनइत्येष स्वारः स्याद्दृषिमब्रवित ॥ ७८ ॥ अव-ग्रहात्परं यत्र स्वारितम् स्यादनन्तरम् ॥ तिरोविरामं जानीयात्प्रजापतिर्निदर्शनम् ॥ ७९ ॥ द्वयोरुदात्तयो-र्मध्ये नीचोऽस्ति यदवग्रहः ॥ ताथाभाव्यो भवेत्कम्प-स्तनूनपान्निदर्शनम् ॥ ८० ॥ तथाभाव्यस्तु तालव्यो न कम्पः स्वरसञ्ज्ञकः ॥ स तालव्यो भवेत्कम्प एज-तीति निदर्शनम् ।। ८१ ।। सर्वतीक्ष्णोऽभिनिहितस्त-तः प्राश्लिष्ट उच्यते ।। ततो मृदुतरौ चैव जात्यः क्षैप्रश्च तावुभौ ।। ८२ ॥ ततो मृदुतरः स्वारस्तैरोव्यञ्जनउ-च्यते ॥ पादवृत्तो मृदुतरइति स्वारबलाबलम् ॥ ८३ ॥ उपन्यासस्तु कर्तव्यःकण्ठ निक्षेपसञ्ज्ञकः ।। उपन्या-सात्परं हन्याद्भूमौ शङ्कुपदम् यथा ॥ ८४ ।।प्राश्लिष्ट-जात्यक्षैप्राश्च यश्चाभिनिहितश्च यः ॥ उदात्तोपस्थिते ते-षामेकदेशं प्रकल्पयेत् ।। ८५ ॥ हलन्तादुत्तरो यस्तु पदादवग्रहेषु च ॥ यश्च स्वस्मात्स इत्येषो योऽन्यः स यइतिस्मृतः ॥ ८६ ।। पादादौ च पदादौ च संयोगाव-ग्रहेषु च ॥ यः शब्द इतिविज्ञेयो योऽन्यः स य इति स्मृतः ।। ८७ ।। पुनरन्तस्य सवितस्य प्रातर्यो रेफिता

च संहिता यत्र ॥ रेफवन्ति पदान्यस्य स्याद्वै तद्रिफितं पदम् ॥ ८८ ॥ अन्तः शब्दस्तु यः कश्चिदाद्युदात्तो भवेद्यदि ॥ न तत्र रेफमिच्छन्ति संहितायां पदेषु च ॥ ८९ ॥ अनुस्वारं हि दीर्घस्तु ह्रकारादिषु वर्जितः ॥ अंशो सुचो वातरंहा दंष्ट्रश्चेतिनिदर्शनम् ॥ ९० ॥ अनुस्वाराश्च कर्त्तव्या ह्रस्वदीर्घप्लुतास्त्रयः ॥ अयं रात्मा यज्ञोमांसं चत्रियाणां धनूंषि च ॥ ९१ ॥ विट्टत्तयश्च विज्ञेयाश्चतस्रस्त्वनुपूर्वशः ॥ नामभिस्तु पृथग्ज्ञेयास्तासां वक्ष्यामि लक्षणम् ॥ ९२ ॥ पिपीलिका पाकवती तथा वत्सानुसारिणी ॥ अनुसृतवत्सा चैव चतस्रो हि विवृत्तयः ॥ ९३ ॥ वत्सानुसृता हृस्वा जघनें वत्सानुसारिणी चाग्रे ॥ पाकवती चोभयतः पिपीलिकमध्याऽप्युभयस्तैर्वा ॥ ९४ ॥ पूर्वं ह्रस्वं परं दीर्घमक्षरं यत्र दृश्यते ॥ सा वत्सानुसृता ज्ञेया व्यत्यासेत्यनुसारिणी ॥ ९५ ॥ उभाभ्यामेव ह्रस्वाभ्यां यवमध्या विनिर्दिशेत् ॥ ताभ्यामेव तु दीर्घाभ्यां विज्ञेया सापिपीलिका ॥ ९६ ॥ अभ्रमध्ये यथा विद्युद्दृश्यते मणिसूत्रवत् ॥ एषच्छेदो विवृत्तीनां यथा बालेषु कर्त्तरी ॥ ९७ ॥ आपद्यते मकारो यरवोष्मसु प्रत्ययेष्वनुस्वारम् ॥ न भवति लकारे परसवर्णसंस्पर्शेषु चोत्तमापत्तिः ॥ ९८ ॥ जात्सौ यत्र दृश्येते स्वरवर्णौ स्वरोदयौ ॥ क्षैप्रवर्णौ तथा

ज्ञेयौ स्वरभक्तीति संस्थितौ ॥ ९९ ॥ तां ह्रस्वां प्रतिजानीयाद्यथा मात्रा भवेद्यदि ॥ सम्यगेनां विजानीयाद्द्वौ दोषौ परिवर्जयेत् ॥ १०० ॥ सम्यगेनां यदा पश्येच्छ्रुतविशेतिनिदर्शनम् ॥ अकारं चाप्युकारं च विच्छिन्नं विवृतन् तथा ॥ १०१ ॥ करिणीं कुर्विणीं चैव हारिणीं लकारयोः ॥ हारिणी ऋषयोर्विद्याद्धारितां लशकारयोः ॥ १०२ ॥ या तु हंसपदा नाम सा तु रेफषकारयोः ॥ या तु रेफशकारौ स्यात्काकिनीं तां विनिर्दिशेत् १०३ ॥ ऋकारप्रत्यये रेफः संयुक्तः शषसैः सह ॥ आद्यस्तत्र क्रमो ज्ञेयेन परो बोधितो बुधैः ॥ १०४ ॥ रेफोष्मणां संयोगे स्वरभक्तिरक्रमश्चैव ॥ तत्रोदाहरणानि प्रदर्शनम् वर्षो बर्हिश्च ॥ १०५ ॥ रेफं स्वरोदये विद्यादृकारं व्यञ्जनोदये ॥ स्वरव्यञ्जनयोर्मध्ये रेफमेव विनिर्दिशेत् ॥ १०६ ॥ ओभावश्च विवृत्तिश्च शषसा रेफएव च ॥ जिह्वामूलमुपध्मा च गतिरष्टविधोष्मणः ॥ १०७ ॥ षत्वणत्वमुपाचारो दीर्घीभावस्तथैव च ॥ यस्मिन्पदे निपद्यन्ते तत्समासाद्य लक्षणम् ॥ १०८ ॥ यद्योभावप्रसन्धानमुकारादि परं पदम् ॥ स्वरान्तं तादृशं विद्याद्यदन्यद्व्यक्तमूष्मणः ॥ १०९ ॥ दारुसङ्घातवत्श्लिष्टं संयोगवशवर्त्तिनाम् ॥ वर्णानां युगसम्पन्नमेकं वर्णमिवोत्सृजेत् ॥ १२१ ॥ वर्णं विग्र-

मकारान्ते पदे पूर्वे स्वरे च परसंस्थिते ॥ रक्तं वर्णं वि-
जानीयान्न ग्रसेत्पूर्वमक्षरम् ॥ ११० ॥ रक्तं वर्णं यदा प-
श्येद्द्वित्या सह संस्थितम् ॥ व्यञ्जनान्तं विजानीया
द्रोमाँ इति निदर्शनम् ॥ १११ ॥ यथा सौराष्ट्रिका ना-
री अराँ इत्यभिभाषते ॥ एवं रङ्गाः प्रयोक्तव्या ङका
रपरिवर्जिताः ॥ ११२ ॥ नासादुत्पद्यते रङ्गः कंसेन स-
मनिस्वनः ॥ हृदं चैव द्विमात्रं स्याद्दृष्टिमाँ इति निद
र्शनम् ॥ ११३ ॥ संयुक्तस्य तु यत्पूर्वं तद्ध्रस्वं लघुं वि-
जानीयात् ॥ तत्संयोगोत्तरं विद्यात्कुर्वन्त्यत्र नियोग-
तः ॥ ११४ ॥ मात्रैकं लघु विज्ञेयं तत्संयोगपरं गुरुम् ॥
सपरं व्यञ्जनान्तं च दीर्घस्तु प्लुतएव च ॥ ११५ ॥ स्प-
र्शानामुत्तमैः स्पर्शैः संयोगाच्चेदनु क्रमात् ॥ आनुपूर्व्या
यमास्तत्र जानीयाच्चतुरस्तथा ॥ ११६ ॥ रुक्मेति प्र-
थमं विद्यात्तु वक्त्रेत्यपरं विदुः ॥ तृतीयं पद्ममित्याहुः
शाङ्धनमिति चोत्तमम् ॥ ११७ ॥ वर्गान्ता यत्र दृ-
श्यन्ते शषसैः सह संयुताः ॥ यमास्तत्र निवर्त्तन्ते स्मशाना-
दिव बान्धवाः ॥ ११८ ॥ संयोगस्य परं स्वार्यं परं सं-
योगनायकम ॥ संयुक्तस्य तु वर्णस्य न स्वरं पूर्वमिष्य-
ते ॥ ११९ ॥ स्वरणं पतनं चैव वोत्थानेषु समेषु च ॥
एकमेव पदे दृष्टं न पूर्वाङ्गे क्वचिद्भवेत् ॥ १२० ॥
वर्णा विंशतिरेकश्च येषां द्विर्भाव इष्यते ॥ प्रथमा मध्यमा
श्चान्त्या यलवाः शषसास्तथा ॥ १२२ ॥ न रेफे वा हकारे
वा द्विर्भावो जायते क्वचित् ॥ न च वर्गद्वितीयेषु न चतुर्थे

कदाचन ॥ १२३ ॥ चतुर्थं तु तृतीयेन द्वितीयं प्रथमेन तु ॥
आद्यमन्त्यं तृतीयं च स्वान्तरेणैव पीडयेत् ॥ १२४ ॥
दृष्टमौऽप्सरायामनन्दे विष्वक्सेनाच्च विस्पृष्टमने ॥ काश्यपोऽभिनिघातानामागमं प्रतिषेधनात् ॥ १२५ ॥ यत्र चोभयतः स्पर्शाः संयुक्ताः प्रथमैः सह ॥ आद्यस्तत्र क्रमो ज्ञेयो न परो बाधितो बुधैः ॥ १२६ ॥ ऋदर्थरेफसंयुक्तं स्वरितं स्यादनन्तरम् ॥ ऋकाररेफसंयुक्तम् यत्पूर्वं व्यञ्जनोदयेत् ॥ १२७ । ऋकारे लघु तद्विद्याद्रेफे तद्गुरुसञ्ज्ञकम् ॥ ऋकाररेफसंयुक्तमृयत्पूर्वं व्यञ्जनोदयेत् ॥ १२८ ॥ ऋकारे लघु तद्विद्याद्रेफे तद्गुरुसञ्ज्ञकम् ॥ न क्रमते स्वरयमयोर्न च वर्गमवर्गयोर्न च विरामे ॥ १२९ ॥ न चरेफानुस्वारे विसर्जनीये तु सर्वत्र ॥ ब्रुवन्भ्रुवौ कर्षेल्ललाटनासिका न कम्पयेदोष्ठचलनं निभुजेत् ॥ मुखं न विक्षिप्य न नम्नवक्त्रो न चापि मन्दं हि हनुर्न बाह्यवाक ॥ १३० ॥ न कण्ठवाक्याच्च न उत्तमस्वरं वदेन्न चानिष्कम्पो न च गर्वमाचरेत् ॥ गजव्यवेषो बलवानतन्द्रितो व्यपेत शोषश्रमशोककर्षभीः ॥ १३१ ॥ न चानुकूजत्पदमादितो ब्रुवन्न नासिका नित्यमनुष्ठितं वदेत् ॥ न चापदान्ते श्वसमपीडितः श्वसेन्न चोच्छ्वसेद्युक्तपदोऽप्यभीक्ष्णशः ॥ १३२ ॥ नातिनिष्पीडयेद्वर्णान्न चाव्यक्तानुदाहरेत् ॥ समानुस्वारसन्दिग्धान्वर्णानुच्चारयेद्बुधः ॥ १३३ ॥ प्रथमानूष्मसम्पन्नान्द्वितीयानिव दर्शयेत् ॥ तथैव तान्प्रतिभा-

नीयागत्वा मत्स्यानुत्तरोऽङ्गमात् ॥ १३४ ॥ तथैव पञ्च-
माण्डुरागमो यत्र दृश्यते ॥ द्वितीयानेव तान्कुर्याद्य-
स्मिन्नीतेति निदर्शनम् ॥ १३५ ॥ अक्ष्णोर्निमेषमात्रेण
यो वर्णः समुदीर्यते । स एकमात्रो ह्रस्वाख्याद्दीर्घस्तु
द्विगुण उच्यते ॥ १३६ ॥ अवग्रहेऽर्द्धमात्रं स्यात्कालो मात्रा
पदान्तरे ॥ अर्द्धर्चं द्वे तथा पादे त्रिमात्रम् स्यादृगन्तर-
म् ॥ १३७ ॥ चाषस्तु वदते मात्रं द्विमात्रं वायसोऽब्रवीत् ॥
शिखी त्रिमात्रं विज्ञेय एष मात्रा परिग्रहः ॥ १३८ ॥ क-
चित्पादविभागेन क्वचिदर्द्धर्चं क्वचिदृद्वे ॥ क्वचिदर्द्धे क्वचि-
च्छन्दे विरामः पञ्चधा स्मृतः ॥ १३९ ॥ छन्दस्येते प्रयु-
ज्यन्ते क्रमेण शेषसञ्ज्ञकाः ॥ सविरामं प्रयोक्तव्या
येन वृत्तिर्न विद्यते ॥ १४० ॥ सञ्ज्ञाने भूयसी दो-
षाण्प्रवक्ष्यामि निबोधत ॥ स्वरस्य मन्दघर्षणस्य ह्यनुस्वार-
यनावपि ॥ १४१ ॥ विच्छिन्नत्वं त्रिदशत्वं सुषीमं सो-
मनस्य च ॥ इकारेणाव गृह्णीयात्प्रति शुक्लेतिपदं समम् ॥
१४२ ॥ विश्वानाम सन्देहे ऋर्द्धर्चं स्यान्नपुंसकम् ॥
पुरस्तादुपरिष्टाद्वा सर्वे विश्वा निरूपकाः ॥ १४३ ॥
नकारान्ते पदे पूर्वे स्वरे च परसंस्थिते ॥ ह्रस्वो मात्रः
प्रयोक्तव्य गात्रसप्रत्ययेषु च ॥ १४४ ॥ द्वौ तकारौ थकारौ
च यमो नेति च पञ्चमः ॥ छत्वादिति च संयोगमाङ्करञ्च-
चितकाः ॥ १४५ ॥ ककारान्ते पदे पूर्वे ङकारे प्र-
त्यये परे । ङकारस्यागमं कुर्याद्वाङ्क्षमदिति निदर्शन-
म् ॥ १४६ ॥ टकारान्ते पदे पूर्वे षकारे प्रत्यये परे ॥

णकारस्यागमं कुर्याद्वसन्नहँ । इति निदर्शनम् ॥ १४७ ॥
नकारान्ते पदे पूर्वं नकारे प्रत्यये परे । नकारस्यागमं
कुर्याद्दयन्नइति निदर्शनम् ॥ १४८ ॥ मकारान्ते प-
दे पूर्वे मकारे प्रत्यये परे । मकारस्यागमं कुर्यात्तिदृष्टम्म
इति निदर्शनम् । १४९ । अन्त्यंकटतपं दृष्ट्वा परं ङणनमं
तथा । आत्मपञ्चमसंयोगमाहुरक्षरचिन्तकाः ॥ १५० ॥
आम्नायात्प्रपदो भवति प्रपदो भवति निर्भयः । निर्भ-
यो मधुरो भवति माधुर्यात्सिद्धिमाप्नुयात् ॥ १५१ ॥
आम्नायकरणं श्रेष्ठं वर्णानां चावधारणम् । अप्रमत्तश्च
स्वार्येत एतदाचार्यशासनम् ॥ १५२ ॥ आम्नायशास्त्र-
सम्पन्नं शास्त्रमाम्नायसारवित् । पथः शङ्खे यथा तद्व-
च्छिरश्छन्दसि सारथिः ॥ १५३ ॥ दन्त्योष्ठ्यकरणं सू-
क्ष्ममाधुर्यं तरुणं वचः । स्वभावं शिक्षकस्याङ्गैरन्यद्गु-
रुकृतं भवेत् ॥ १५४ ॥ तरुणं शिक्षकं प्राहुर्वृद्धम-
क्षरचिन्तकम् ॥ नैयायकं परिश्रुतं बहुधा भवन्ति या-
चकम ॥ १५५ ॥ न करालो न लम्बोष्ठो न च सर्वा-
नुनासिकः । गद्गदो बद्धजिव्हश्च प्रयोग न्वक्तुमर्ह-
ति ॥ १५६ ॥ प्रकृतिर्यस्य कल्याणी दन्तोष्ठौ यस्य शोभ-
नौ ॥ अधीतं येन तत्वेन सशिक्षा पारयिष्यति ॥ १५७ ॥
आगमैरधिकाः केचिद्विज्ञानैरपरेऽधिकाः ॥ प्रयोग
सौष्ठवादन्ये नाहमस्मीति विस्मयः ॥ १५८ ॥ सुतीर्था
दागतं जग्धं स्वाम्नातं सुव्यवस्थितम् ॥ सुस्वरेण
सुवक्त्रेण प्रयुक्तं ब्रह्म राजते ॥ १५९ ॥ कुतीर्थादागतं द-

र्थमपवर्गाश्च भक्षितम् ॥ न तस्य परि मोक्षोऽस्ति पापाद्धेरिव किल्बिषात् ॥ १९० ॥ येषां तीर्थगता विद्या नित्यमध्यासवर्जिता ॥ ते भवन्ति दुराधर्षाः ससिंहा इव पर्वताः ॥ १९१ ॥ न भोजनविलम्बी स्यान्न च स्यात्स्त्रीनिबन्धनः ॥ स दूरमपि विद्यार्थी व्रजेद्गरुडहंसवत् ॥ १९२ ॥ हयानामिव जात्यनामर्द्धरात्रार्द्धशायिनाम् ॥ न विशेषार्थिनां निद्रा चिरं नेत्रेषु तिष्ठति ॥ १९३ ॥ अहेरिव जनाद्भीतः स्त्रीभ्यश्च नरकादिव ॥ मिष्टाच्च विषवद्भीतः स विद्यां पारयिष्यति ॥ १९४ ॥ सहस्रगुणिता विद्या शतशः परिवर्जिता ॥ आगमिष्यति जिह्वाग्रे स्थलान्निम्नमिवोदकम् ॥ १९५ ॥ शतेन गुणिता भवति सहस्रेण तु धारिता ॥ शतानां तु सहस्रेण प्रेत्य चेह च तिष्ठति ॥ १९६ ॥ उपांशु त्वरितं चैव योऽधीतेऽवत्रसन्निव ॥ अपि रूपसहस्रैस्तु संशयेष्वेव वर्त्तते ॥ १९७ ॥ येषां च न ग्रहणशक्तिरतिप्रचण्डा लब्ध्वा च येन शतशः रिवर्त्तयन्ति ॥ निद्रां च ये प्रियसखीमिव न त्यजन्ति ते तादृशा गुरुकुलेषु जरां व्रजन्ति ॥ १९८ ॥ पञ्च विद्यां न गृह्णन्ति लुब्धाश्चण्डाश्च ये नराः ॥ आलस्याश्चानरोगाश्च येषां च विकृतं मनः ॥ १९९ ॥ ऊर्द्धं महस्रादाम्नातं सततं चान्ववेक्षणम् ॥ आप्तैस्तु सह सम्पाठस्त्रिविधा धारणा स्मृता ॥ १९९ ॥ यथा खनन् खनित्रेण भूतले वारि विन्दते ॥ एवं गुरुगतां विद्यां शुश्रूषुरधिगच्छति

॥ १७० ॥ योजनानां सहस्रं तु शनैर्याति पिपीलिका ॥ अगच्छन्वैनतेयोऽपि पदमेकं न गच्छति ॥ १७१ ॥ पदेनैकेन मेधावी पदानां विन्दते शतम् ॥ मूर्खः पदसहस्रेण पदमेकं न विन्दति ॥ १७२ ॥ पदं पादं तथाऽर्द्धं च सेवितव्यं प्रयत्नतः ॥ अप्राज्ञः प्राज्ञतां याति सरिद्भिः सागरो यथा ॥ १७३ ॥ अनिर्वेदः श्रियो मूलं लोकबद्धं कमण्डलुम् ॥ अहोरात्राणि दौर्भाग्यकः स्कन्दं न शोषयेत् ॥ ७४ ॥ जलमध्यासयोगेन शैलानां कुरुते क्षयम् ॥ कर्कशानां मृदुस्पर्शं किमभ्यासो न साधयेत् ॥ १७५ आचार्याः समसिच्छन्ति पदच्छेदन्तु पण्डिताः ॥ स्त्रियो मधुरमिच्छन्ति विक्रुष्टमितरे जनाः ॥ १७६ ॥ आचार्योपासनाद्योगात्तपसा प्राज्ञसेवनात् ॥ विगृह्य कथनात्कालात्षड्भिर्विद्या प्रपद्यते ॥ १७७ ॥ आलस्यात्मूर्खसंयोगाद्भयाद्रोगनिपीडनात् ॥ अत्यशक्त्या च मानाच्च षड्भिर्विद्या विनश्यति ॥ १७८ ॥ माण्डूकेन कृतां शिक्षां विदुषां बुद्धिवर्धिनीम् ॥ यो हि तत्त्वेन जानाति ब्रह्मलोकं स गच्छति ब्रह्मलोकं स गच्छतीति ॥ १७९ ॥

इत्यथर्ववेदीया माण्डूकी शिक्षा समाप्ता ॥ गगनेष्वङ्केन्दुमिते सधार्जुनके शके ॥ यजुर्वेदस्य शुक्लस्य माध्यन्दिनसमाख्य तु ॥ १ ॥ पञ्चविंशतिसङ्ख्याताः शिक्षाश्चात्र सुमुद्रिताः ॥ ऋग्वेदस्यैकशिक्षा पाणिनीया सटीका ॥ २ ॥ त्रितयी सामवेदस्य नारदो गौतमी तथा । लोमशी चाऽथर्वणिका माण्डूकी लोकविश्रुता ॥ ३ ॥

# अथर्वपरिशिष्टम् ॥

श्रीगणेशाय नमः ॥

अथातोऽथर्ववेदस्य शौनकस्य महात्मनः ॥ स्वशा-
खीयं श्रौतसूत्रं वैतानाख्यमुदाहृतम् ॥ १ ॥ गोपथ-
ब्राह्मणं तद्वत्कौशिकं गृह्यसूत्रकम् ॥ संहिताचार्कसाह-
स्री पिप्पलादाङ्गशाखिनः ॥ पञ्चकल्पानि तन्मध्ये क-
ल्पं पञ्चशतानि वै ॥ विधानकल्पो नाक्षत्रः संहितावि-
धिरेवच ॥ ३ ॥ अभिचारस्य कल्पस्तु शान्तिकल्प-
स्तथाऽपरः ॥ प्रत्यङ्गिराप्रकृतयः कल्पश्चानेकशस्तथा
॥ ४ ॥ शौनकीयं कल्पसूत्रं सर्वानुक्रमकस्तथा ॥ प्राति-
शाख्यं शौनकीयं स्वरवर्णविभागजम् ॥ ५ ॥ शिक्षा
प्रकल्पिता सम्यङ्माण्डूकेन महर्षिणा ॥ शिष्याणामुप-
देशार्थं सम्यगुच्चारणाय वै ॥ ६ ॥ परिशिष्टं द्विपञ्चाश
न्नाना कार्यविधायकम् ॥ अथर्ववेदरूपं न मन्तव्यं
विबुधैः शुभम् ॥ ७ ॥ तीक्ष्णः प्रचण्डरूपो वै कामरूपो
तु विश्वकृत् ॥ स्वशाखाध्यायी क्षुद्रकर्मा प्राज्ञो नी-
लोत्पलः समः ॥ ८ ॥ दशारत्निप्रमाणं तु वैतानो गो-
त्रकं तथा ॥ ब्रह्मदैवत्यमेवं चानुष्टुभं छन्दएवच ॥ ९ ॥
शन्तातीयं गणं चैव भैषज्यञ्चगणास्तथा ॥ त्रिसप्तीयं गणं

चैवापराजितगणं तथा ॥ १० ॥ आयुष्यं च गणं चैव शा-
र्ववर्मगणं तथा ॥ वास्तोष्पत्यगणं तद्वत्तथा स्वस्त्ययनं
गणम् ॥ ११ ॥ तथा रौद्रगणं हुत्वा सर्वान्दोषान्व्यपो-
हति ॥ वैष्णवी शान्तिरैन्द्री च ब्राह्मी रौद्री तथैव च
॥ १२ ॥ वायव्या वारुणी चैव कौवेरी भार्गवी तथा ॥
प्राजापत्या तथा त्वाष्ट्री कौमारी वह्निदेवता ॥ १३ ॥
मारुद्गणा च गान्धारी शान्तिर्नैर्ऋतिकी तथा ॥
शान्तिराङ्गिरसी याम्या पार्थिवी सर्वकामदा ॥ १४ ॥
यस्त्वां मृत्युरिति ह्येतज्जप्तं मृत्युविनाशनम् ॥ सुपर्णस्त्वे-
ति हुत्वा च भुजगैर्नैव बाध्यते ॥ १५ ॥ इन्द्रेण दत्तमित्ये-
तत्सर्वकामकरं भवेत् ॥ इमा देवीति मन्त्रस्तु सर्वशा-
न्तिकरः परः ॥ १६ ॥ देवा मरुत इत्येतत्सर्वकामकरं भ-
वेत् ॥ यमस्य लोकादित्येतद्दुःस्वप्ननाशनं परम् ॥ १७ ॥
इन्द्रस्य पन्थ वणिजेति पण्यलाभकरं परम् ॥ कामो
मे वाजीति हुतम् स्त्रीणां सौभाग्यवर्द्धनम् ॥ १८ ॥
तुभ्यमेव जवीमन्नित्ययुतं तु हुतम् भवेत् ॥ अग्नेर्गोभि-
र्नइत्येतन्मेधावृद्धिकरं परम् ॥ १९ ॥ ये मे पाशास्त-
थाऽप्येतद्बन्धनान्मोक्षकारणम् ॥ एतदथर्वविधानाख्यं
परिशिष्टं निरूपितम् ॥ २० ॥ अथर्वपरिशिष्टम् ॥

———